सरस्वतीभवन-अध्ययनमाला
[ २८ ]

# धात्वर्थविज्ञानम्

लेखकः सम्पादकश्च
डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये




सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

सरस्वतीभवन-अध्ययनमाला

[२८]

# धात्वर्थविज्ञानम्

लेखकः सम्पादकश्च

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

निदेशकः, अनुसन्धानसंस्थानस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये




सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

# SARASVATĪBHAVANA-STUDIES

[ Vol. 28 ]

# DHĀTVARTHAVIJÑĀNAM

By

DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ 'VĀGĪŚA ŚĀSTRĪ'

DIRECTOR, RESEARCH INSTITUTE

Sampurnanand Sanskrit Vishvavidyalaya

Varanasi




Research Publication Supervisor

DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ 'VĀGĪŚA ŚĀSTRĪ'

Director, Research Institute,

Sampurnanand Sanskrit Vishvavidyalaya

VARANASI

1980

Published by —
Director, Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya,
Varaṇasi.

[This thesis has been approved for the 'Vācaspati' ( D. Litt. ) degree of Sampurnanand Sanskrit Vishvavidyalaya and has been published out of generous grant from University Grants Commission, New Delhi]

Available At—
Sales Department,
Sampurnanand Sanskrit Vishvavidyalaya,
Varanasi–221002.

First Edition : 1000 Copies
Price Rs. 31-00

Printed by—
Tara Printing Works
Varanasi.

सरस्वतीभवन-अध्ययनमाला

[ २८ ]

# धात्वर्थविज्ञानम्

लेखकः सम्पादकश्च

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

अनुसन्धानसंस्थाननिदेशकः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य




अनुसन्धानप्रकाशनपर्यवेक्षकः

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

अनुसन्धानसंस्थाननिदेशकः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणस्याम्

२०३७ तमे वैक्रमाब्दे १९०२ तमे शकाब्दे १९८० तमे खैस्ताब्दे

प्रकाशकः—
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी।

[ अनुसन्धानप्रबन्धोऽयं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन 'वाचस्पतिः' ( डॉ० लिट्० ) इत्युपाध्यर्थं स्वीकृतः, विश्वविद्यालयानुदानायोगतो लब्धेनाऽऽर्थिकसाहाय्येन मुद्रापितश्च ]

प्राप्तिस्थानम्—
विक्रयविभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,
वाराणसी–२२१००२.

प्रथमं संस्करणम् : १००० प्रतिरूपाणि
मूल्यम् : ३१–०० रूप्यकाणि

मुद्रकः—
तारा प्रिंटिंग वर्क्स
वाराणसी।

# प्रास्ताविकम्

एकोनविंशत्युत्तरैकोनविंशतिशततमे ( १९२० ) ख्रीस्ताब्दे सरस्वतीभवनग्रन्थमालाप्रवर्तनानन्तरं , सरस्वतीभवनस्टडीज् इत्याख्यायाः सरस्वतीभवनाध्ययनमालाया दशखण्डेषु प्राच्यविद्यामाधारीकृत्य विदुषामाङ्ग्लभाषामया निबन्धाः प्रकाशिताः । एकादशे खण्डे भारविमहाकविमधिकृत्य संस्कृतभाषामयो विस्तृतो तत्र निबन्धः प्रकाशितः । अस्या अध्ययनमालाया द्वादशपुष्पे सर्वतः प्रथमं पण्डितवरेण्यानां श्रीमतां रामाज्ञापाण्डेयमहोदयानां 'व्याकरणदर्शनभूमिका' इत्याख्यो गवेषणामयो ग्रन्थः प्रकाशमानीतः । अस्यानुसन्धानात्मकस्य ग्रन्थस्य विरचनाय श्रीपाण्डेयमहाभागैः सरस्वतीभवनपुस्तकालयमध्यास्य तत्रत्या ग्रन्था अनुशीलिताः । तदानीं काशिकराजकीयसंस्कृतमहाविद्यालयस्य संस्कृतविश्वविद्यालयतया परिणतेरभावाद् गवेषणोपाधिमनभिलक्ष्य विरचितोऽसौ ग्रन्थः । गवेषणोपाध्यर्थं विरचिताः स्वीकृताश्च प्रबन्धा ग्रन्थमालाया अस्यास्त्रयोदशपुष्पादारभ्य प्रकाशिताः । 'पाणिनीयधातुपाठसमीक्षा' इत्याख्येन गवेषणाप्रबन्धेन स्वनामधन्यानां श्रीमत्क्षेत्रेशचन्द्रचट्टोपाध्यायमहोदयानां निर्देशने प्रणीतेन गवेषणोपाध्यर्थं च स्वीकृतेन ग्रन्थमालाया अस्याश्चतुर्दशपुष्पतया प्रस्फुटितेन समवापि महती प्रतिष्ठा । नवशतसंख्याका एव पाणिनीया धातवः प्रामाणिकास्ततोऽन्ये चाप्रामाणिका इति विलियम् ड्वाइट्ह्विट्नीमहोदयस्य स्थापना तत्र भारोपीयभाषायाः, भारेनीयभाषायाः, वैदिकभाषायाः, लौकिकसंस्कृतभाषायाः, पालिप्राकृतापभ्रंशभाषाणाम्, प्रादेशिकभाषाणां च प्रयोगोपन्यासेन बाढं निराकृता ।

उक्तो ग्रन्थो मुख्यतो धातुप्रयोगानधिकृत्य प्रणीत आसीत् । यथाप्रसङ्गं क्वचित् क्वचिदेव तत्रार्थाः प्रदर्शिताः सन्ति । केषाञ्चन धातूनां बहवोऽर्थाः पाणिनिना स्वयं प्रतिपादिता धातुपाठे । संस्कृतवाङ्मये तेषामपि धातूनां बहवोऽर्था निर्दिश्यन्ते येषामेक एवार्थः पाणिनिना पठितः । तेषां बह्वर्थत्वे कारणानि न प्रस्तूयन्ते । यद्यपि भाषाविज्ञानजगति खलु 'अर्थविज्ञान' नाम्ना प्रसिद्धायां शाखायामर्थपरिवर्तनकारणानि गवेष्यन्ते, तथापि तत्रापि 'धात्वर्थविज्ञान'-नाम्ना विहितं नानुशीलनम् । एवं तावदुभयत्र न्यूनतां विभाव्य संस्कृतधात्वर्थानामनुशीलनाय 'धात्वर्थविज्ञानम्' इति विषयो विश्वविद्यालयेन वाचस्पति (डी. लिट्.) इत्युपाध्यर्थकगवेषणाकार्यार्थं विनिर्धारितः ।

गवेषकेण यथासम्भवं संस्कृतवाङ्मयं निर्मथ्य निरुपसर्गाणां सप्तपञ्चाशद्धातूनामिहार्थविवेचना कृता । तुलनार्थमार्यवर्गीयाणां विविधानां भाषाणां धात्वर्था अपीह यथास्थलमुपन्यस्य विवेचिताः । केषु देशेषु ता भाषा भाष्यन्ते, भाष्यन्ते स्म वेति जिज्ञासूनां ज्ञानार्थमार्यभाषाचक्रपत्रमप्युपोद्घातानन्तरं संयोजितमस्ति । गवेषणाप्रबन्धे विवेचिता अर्थाः, समुद्धृताः श्लोकाः, धातवः, व्याकरणादिशास्त्रवचनानि, उद्धृता

भाषाशब्दाः, विशिष्टशब्दाः, धात्वर्थबोधकानि प्रयोगोदाहरणानि, वेदोपनिषदादिवचनानि, उद्धृतश्लोकानां चरणाश्चेह परिशिष्टेषु वर्णक्रमेण तथा व्यवस्थापिताः, यथा ग्रन्थगतविषयास्तत्र दर्पण इव प्रतिबिम्बिताः स्युः ।

सरस्वतीभवन-अध्ययनमालाया अष्टाविंशतितमप्रसूनतया विश्वविद्यालयस्यास्यानुसन्धानसंस्थानतः प्रकाशितेनानेन गवेषणाप्रबन्धेन विद्वज्जना नूनं प्रीणिता जिज्ञासुजनाश्च भृशमुपकृता भविष्यन्तीति बाढं प्रत्येमि ।

विश्वविद्यालयानुदानायोगस्य वैत्तिकेन साहायकेन प्रबन्धस्यास्य मुद्रणं संवृत्तमिति विश्वविद्यालयस्यास्य पक्षतस्तत्रत्येभ्योऽधिकारिभ्यः साधुवादान् वितरन् विरमति

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
मार्गशीर्षपूर्णिमायां २०३७ वै०
(२१-१२-८० ख्री० रवौ)

**भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**
निदेशकः
अनुसन्धानसंस्थानस्य

# भूमिका

वेदाङ्गेषु व्याकरणं मुखस्थानीयं स्वीक्रियते विपश्चिद्भिः। तत्र बहुविधेषु कातन्त्र-चान्द्र-जैनेन्द्र-शाकटायन-हेमादिषु व्याकरणेषु सत्सु लोक-वेदोभयात्मकं पाणिनीयं व्याकरणमेव वेदाङ्गतया समाम्नायते। पदसाधुत्वलक्षणं नाम व्याकरणम्। प्रकृतिप्रत्ययविश्लेषणपूर्वकमिह शब्दा विव्रियन्ते। यत्र क्वचिदर्थविशेषे प्रत्यया विधीयन्ते तत्रार्थः संकेत्यते, न तु सर्वत्र। अत एव व्याकरणनिकाये पाणिनीयधातुपाठस्य द्विधा स्थितिर्निरूप्यते—संहितापाठे 'भूसत्तायाम्' इत्येतादृशो नास्त्यर्थसंकेतः, पश्चाद् भीमसेनेन धात्वर्थाः कल्पिता इति केषाञ्चिद् विदुषां मतम्। 'वेः पादविहरणे' इत्यादिषु सूत्रेषु यद्यपि पाणिनिना धातूनामर्था निर्दिश्यन्ते, तथापि बहुत्र समुपलभ्यमानेषु धातुपाठमातृकापाठेषु 'पादविक्षेपे' इत्येतादृशा वर्तनीदृशा पाणिनीयार्थेभ्यो भिन्ना अर्था दृक्पथमवतरन्तीति बाढं समसाधीह ग्रन्थोपोद्घाते श्रीवागीशशास्त्रिणा।

यद्यपि व्याकरणदर्शने 'फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः। फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्' इति वैयाकरणभूषणसारादिदिशा फलव्यापाररूपो धात्वर्थः प्रदर्शितः, 'आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते' इति वाक्यपदीयकारेण भर्तृहरिणा धात्वर्थस्य साध्यत्वेनाभिधीयमानस्य क्रमरूपत्वात् क्रियात्वमाख्यातम्, तथापि पाणिनीयधातुपाठस्थधातूनामर्थान् आधारीकृत्य व्याकरणशास्त्रे शास्त्रान्तरे वा क्रमबद्धो न लभ्यते कश्चन ग्रन्थः। व्याकरणसाहित्यमीमांसादिशास्त्राणां व्याख्याग्रन्थेषु व्याख्याकृद्भिः पाणिनिनिर्दिष्टाद् धातोरर्थाद् भिन्नार्थत्वे प्रतीयमाने 'अनेकार्था हि धातवः' 'धातूनामनेकार्थत्वात्' इत्यादीनि वचनान्युपन्यस्यन्ते हेतुदानमन्तरा। वेदार्थनिश्चयविधौ यथा मीमांसाशास्त्रमवतीर्णं तथैव शब्दार्थज्ञानाय निरुक्तशास्त्रमाविर्भूतमासीत्। कश्यपः कस्मात्? पश्यकात्, तदेवं शब्दोऽयं वर्णविपर्ययेण सिध्यति। तर्कुः कस्मात्? कर्तनात्, एषोऽपि शब्दो वर्णविपर्ययेण निष्पद्यत इत्येतादृशी निरुक्तप्रवृत्तिर्दृश्यते निर्वचनपूर्वकमर्थनिश्चयार्थम्। किन्तु तत्र निघण्टुसंगृहीता निश्चिता वैदिका शब्दा एव निरुच्यन्ते। निर्वचनविधिना शब्दार्था अपि व्यज्यन्ते। निरुक्तकारप्रभृतीनामेवंविधे प्रयासे सत्यपि शब्दानां धातूनां च बह्वर्थतायाः कारणविवेचनमवशिष्यत एव। भाषाविज्ञानक्षेत्रे 'अर्थविज्ञान'-शाखायाः पल्लवनं दृश्यते। तत्रापि मन्ये, धातूनाधारीकृत्य कश्चित् स्वतन्त्रो ग्रन्थो नाद्यावधि प्रकाशितः।

अस्य विश्वविद्यालयस्यानुसन्धानसंस्थाननिदेशकेन वागीशशास्त्रीत्युपाह्वेन डॉ. भागीरथप्रसादत्रिपाठिना प्रणीतमिदं 'धात्वर्थविज्ञानम्' नाम नूनमसाधारणी समुपलब्धिः। इह समुपलब्धानां पाणिनीयापाणिनीयानां सर्वेषां धातुपाठानां धात्वर्था यथाप्रसङ्गमुपन्यस्ताः। वैदिकं वाङ्मयं तस्योपजीवकमनुजीवकं तस्यायजीपकदम् पर्यजीपकं विपुलं संस्कृतवाङ्मयं च निर्मथ्य श्रीत्रिपाठिना धात्वर्था गवेषिताः। उपसर्गमन्तरा धातोरनेकार्थाः प्रस्तुताः। पवनार्थकस्य पूञ्धातोर्विनाशरूपोऽर्थः कथं भवति, 'पूञो विनाशे' इति वार्त्तिके धातोरस्य विनाशरूपोऽर्थो ज्ञायते। किन्तु

संस्कृतवाङ्मये तादृशः प्रयोगः क्वोपलभ्यते, अत्र हि पवित्रीकरणात् सर्वथा भिन्नस्य तस्यार्थस्य विपर्यस्ततायां को हेतुरिति सर्वमिह ग्रन्थे प्रतिपादितम्। लक्षणादिना धातोरर्थाः कथं परिवर्तन्त इति अर्थतौल्ये √ तॄ धातुर्विलोकनीयः। प्रायः सर्वत्र भारोपीयभाषाणां धात्वर्था निरूपिताः। एतादृशस्य ग्रन्थरत्नस्य प्रस्तुतये बंहिष्ठां प्रशंसामर्हन्तं श्रीत्रिपाठिनमहमभिनन्दयन्, अनुरुणध्मि यत् स संस्कृतशेवधिसमृद्ध्यर्थमेतादृशग्रन्थान्तरप्रसूनोपहारेण सरस्वतीचरणार्चनं विदध्यादिति।

वाराणस्याम्
मार्गशीर्षपूर्णिमायाम् २०३७ वै०
(२१-१२-८० खी० रवौ)

**बदरीनाथशुक्लः**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# प्रवृत्तिनिमित्तम्

एकोनषष्ट्युत्तरैकोनविंशतिशततमात् (१९५९) खीस्ताब्दात् १९६३तमं वत्सरं यावत् 'पाणिनीयधातुपाठसमीक्षा' इति गवेषणाप्रबन्धप्रणयनसमये मदीये मानसे धातूनामर्थपरिवर्तनविषयेऽपि समजनि चिन्तनबीजम्। १९६४ तमे खीस्ताब्दे विश्वविद्यालयेनानेन वाचस्पति (डी० लिट्०) इत्युपाध्यर्थकस्यानुसन्धानस्य कृते यद्यपि 'कृत्तद्धितसमीक्षा' इति विषयो विनिर्द्धारितः, स च त्रिभिर्वर्षैर्मया गवेषितः, 'तद्धितान्ताः केचन शब्दाः' इति पुस्तकमपि तन्निष्कृष्टभूतं प्रकाशितम्, तथापि तदानीन्तनैरनुसन्धानसंस्थानसंचालकैः स्वनामधन्यैः पण्डितश्रीबलदेवोपाध्यायमहाभागैस्तदीयां विषयैकदेशतामालोच्य वाचस्पति (डी० लिट्०) इत्युपाध्यर्थकगवेषणाप्रबन्धतया परीक्षार्थमुपस्थापनाय विषयान्तरवरणं संकेतितम्। अनुपदमेव सेवातो विनिवृत्तानां तेषां स्थानमलङ्कुर्वद्भिः पण्डिताग्रगण्यैः स्वनामधन्यैः श्रीबदरीनाथशुक्लमहोदयैः साग्रहमहं विषयान्तरवरणाय संप्रेरितः।

भाषातत्त्वार्थतत्त्वयोर्मध्येऽर्थतत्त्वम् (Semantics) न पर्याप्तमालोचितं नूतनग्रन्थप्रणयनपूर्वकं तत्त्वज्ञैः। विशेषतो धात्वर्थतत्त्वविचारपक्षस्तैरस्पृष्ट एव लक्ष्यानुसारीति विभाव्य धात्वर्थतत्त्वपर्यालोचनदृशा 'धात्वर्थविज्ञानम्' इति स्वीकृतं विषयान्तरमनुसन्धातुमारब्धम्। यद्यपि गवेषणाप्रबन्धोऽयं १९६९ तमे खीस्ताब्दे वाचस्पति (डी० लिट्०) इत्युपाध्यर्थमङ्गीकृतः, तथापि दशवर्षाणामनन्तरमिदानीं प्रकाशमानीयतेऽसौ सम्पूर्णानन्दसंस्कृतविश्वविद्यालयात्। १९७० तमात् खीस्ताब्दादारभ्य विश्वविद्यालयेऽस्मिन् ममैवानुसन्धानसंस्थाननिदेशकपदमासीनत्वात् पूर्ववर्तिनमप्यात्मीयमेतमविगणय्य परवर्तिनोऽन्ये गवेषणाप्रबन्धाः पूर्वमेव प्रकाशिता मया। मन्ये, समतीतेऽपि दशवार्षिकेऽवधावेष ग्रन्थो विद्वद्भिः प्रत्यग्र इव समास्वादयिष्यते।

क्षीरस्वामिरचितायां क्षीरतरङ्गिण्यां समाश्रितो धातुपाठ इह प्राधान्यतोऽभ्युपगतः। पाणिनीयधातुपाठसमीक्षावदेव धातुसंख्यापि तत्रत्यैव विनिर्दिष्टा। अनुबन्धरहितो धातुः प्रथमतो निर्दिश्यते, परतस्तु धातुनिर्देशकचिह्न(√)पुरस्सरं प्रकोष्ठे धातुपाठपठितोऽसौ सानुबन्धो निधीयते। ग्रन्थमध्येऽपि सर्वत्र तथैव प्रयुज्यते धातुः √पच्, √भज्, √दिश् इति दृशा, न तु पचिः पचतिर्वेति सरण्या। काशकृत्स्न-शर्ववर्म-चन्द्रगोमि-जैनेन्द्र-वोपदेव-मैत्रेय-सायणादिभिः पठिता भिन्ना अर्था यथायथमारम्भे पर्यालोच्यन्ते। ध्वनिविज्ञानदृशा धातौ धात्वन्तरसंक्रान्तिस्ततोऽर्थसंक्रान्तिश्च यथासम्भवं समीक्षिते।

वेदादारभ्य संस्कृतवाङ्मयस्य मुख्या ग्रन्थास्तट्टीकाग्रन्थाश्च धात्वर्थदृष्ट्या परिगृहीताः। एवं तावदिहोपसर्गमन्तरा धातूनामनेकार्थकत्वं विवेचितम्। अर्थपरिवर्तनविषये यथाशक्ति कारणान्यपि गवेषितानि। प्रमुखास्वार्यभाषासु परिवर्तिता अपरि-

र्तिता वा धात्वर्था अपीह पर्यालोचिताः। वैयाकरणानां भाषातत्त्वविदां टीकाकाराणां च मतानि यथास्थलं समीक्षितानि। कानिचन निदर्शनानीह प्रस्तूयन्ते—'नीलकण्ठकृतो निन्दार्थो न समञ्जसः' (४४ पृ०); 'ये ये गत्यर्था इत्युक्तिर्न समञ्जसा' (४९ पृ०); 'संपूर्वस्य स्याधातोः प्रयोगो नेति न्यासकारो भ्रान्तः' (४६ पृ०); "श्रुतसागरसूरिणा 'गृणन्ति=जानन्ति' इत्यर्थो विहितः, तन्न मनोरमम्" (५९ पृ०); "नीलकण्ठस्तु करोतीति व्याख्यानमाह, तन्न युक्तम्, धर्मपापयोराचरणविषयत्वात्' (७४ पृ०); 'गाय गायत्रमुक्थ्यम्' इत्यत्र सायणः 'यथा मेघो वृष्टिं विस्तारयति तद्वत्' इत्याह, तन्न मनोरमम्, आस्ये निर्माणानन्तरं श्लोकस्य ध्वननमेव विस्तार इति √तन् धातोः शब्दार्थकत्वात्" (९० पृ०); "केचिद् ओल्डनबर्गादयोऽभ्यधुः, तन्न हृदयावर्जकम्" (९० पृ०); "मल्लिनाथेन व्याख्यायामुक्तम्—'तव धृतेः=प्रीतेः, धृप्रीताविति धातोः 'स्त्रियां क्तिन्' इति, तन्न विचारसहम्, प्रीत्यर्थकस्य धृधातोरभावात्" (११९ पृ०); "जयमङ्गलस्तु भेदमिममजानान आह—'अनेकार्थत्वाद् धातूनां बन्धिरत्र करणे वर्तते" (१३८ पृ०); सायणस्तु भेदमिममदर्शयन्नाह—"मनिरत्र स्तुत्यर्थे वर्तते, धातूनामनेकार्थत्वात्" (१५० पृ०) इति।

व्याकरणशास्त्रे **'अनेकार्था हि धातवः'** इति वचनमवलम्ब्य समाधीयते धातूनामनेकार्थता। यद्यपि **वात्स्यायनेनो**दितं न्यायभाष्ये—**'पदसंकेतविधानार्थं व्याकरणम्'** इति, तथापि प्रकृति-प्रत्यय-प्रत्ययार्थविचारं हित्वा धात्वादीनामर्थविचारो न विजृम्भितस्तत्र। कोशाद् आप्तवाक्याद् व्यवहारतश्च शब्दार्थसिद्धिः। महामुनिना पाणिनिनापि सूत्रितम्—**'प्रधानप्रत्ययार्थवचनम्, अर्थस्यान्यप्रमाणत्वात्'** (१, २, ५६) इति। इदमेव संस्मृत्य केचन धातुपाठगतधातूनामर्था न पाणिनिर्दिशिता इति समामनन्ति, भीमसेनेन पश्चात् संनिवेशिता इति निश्चिन्वन्ति। एतदर्थमपि व्याकरणशास्त्रे शब्दार्थपरिवर्तनविषये न क्वापि केनापि कृतं विवेचनम्। सोपसर्गधात्वर्थविषयेऽपि तथैव—

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते।
प्रहाराहारसंहारविहारपरिहारवत् ॥

इत्यभ्युपगम्य सन्तोषः क्रियते। उपसर्गेण धात्वर्थो बलादन्यत्र कथं नीयते? **'तत्र को हेतुः'** इत्यादिजिज्ञासया कस्यापि विपश्चिदपश्चिमस्य तदानीन्तनस्य वैयाकरणसत्तमस्य ग्रन्थप्रणयने प्रवृत्तिर्नाभूद् इति चित्रम्।

अर्थस्य व्याकरणेतरप्रमाणत्वेऽपि पाणिनिना धातुपाठे धातूनामर्थसंकेतो व्यधायीति महाभाष्याद् (१, ३, ७) बाढं सिध्यति। तत्र कियन्तो धातवः पाणिनीयाः कियन्तश्च पश्चात् संनिवेशिता इति भिन्नोऽनुयोगः। पाणिनिना धात्वर्थसंकेतोऽवश्यं कृतः। कुतो न पुनर्वैयाकरणानां ग्रन्थरचनाप्रवृत्तिर्जाता धात्वाद्यर्थानवलम्बमानेति समुदिता जिज्ञासा मम स्वान्तनिशान्ते तिमिरचिते निर्दीप्तदीपसंनिभा। पाणिनेः 'अर्थस्यान्यप्रमाणत्वात्' (१, २, ५६) इति वचनेन शब्दार्थनिर्धारणे लोकस्य प्रामाण्य-

मवधाय, 'कोशाप्तवाक्याद् व्यवहारतश्च' इत्यत्र च व्यवहारस्य शक्तिग्रहत्वं विचार्य जातः समाधिदीधितिप्रचारः—अर्थनिर्णये लोकः=लोकव्यवहारो मूर्द्धन्य इति। लोकव्यवहारप्रचलिता धातूनां केचन मुख्या अर्था धातुपाठे संनिवेशिताः। अप्रसिद्धानाम् अप्रचलितानां चार्थानां विवरणप्रसङ्गे 'अनेकार्था हि धातवः' इति समाधानस्यानायाससिद्धत्वाद् विपुलतमसंस्कृतवाङ्मयगवेषणपूर्वकम् अत्यायाससाध्यस्यार्थपरीक्षणस्य विचार उपेक्षितः।

भाषाणां तदर्थानां च संघटने लोकप्रवृत्तिरेव कारणम्। 'लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि' (३,२०) इति श्रीमद्भगवद्गीतायामपि तादृश एव निर्देशः। लोकः खलु परिवर्तनशीलो नवनवं कामयते विचारजातम्, विनिमयते च तदर्थं मिथः। प्रसादविषादरूपं जन्ममृत्युक्रममनुभवन् स भावाविष्कारपरिपाटीशाटीं विविधकोणै रङ्गै रञ्जयतीति केषामविदितम्? इदमेव सर्वं पर्यालोच्य मया वेदात् प्रभृति लौकिकसंस्कृतपालिप्राकृतप्रादेशिकभाषागतधातुप्रयोगाणां तदर्थानां च पर्यालोडनपूर्वकमर्थपरिवर्तनविचारं कर्तुमारम्भि। तत्रभवद्भिराचार्यप्रवरैः प्राच्यप्रतीच्योभयविधविद्यापारङ्गतैस्तदानीन्तनोपकुलपतिभिः डा० गौरीनाथशास्त्रिमहाभागैरनितरसाधारणपरामर्शपूर्वकं साधीयो निर्दिष्टो विधिरिति तदर्थं ते कोटिशो वन्दनीयाः। आचार्यशिरोमणिभिरनुसन्धानसंस्थानस्य तदानीन्तनैः सञ्चालकैर्विद्वद्धौरेयैः श्रीबदरीनाथशुक्लमहाभागैरहं बहूपकृत इति तदर्थं तेषां कृतज्ञतां विज्ञापयामि। विश्वविद्यालयीयपुस्तकालयस्य सरस्वतीभवनस्य कर्मचारिभिः सोत्साहं साहाय्यमकारि ग्रन्थप्रदानादिरूपमिति ते सर्वे साधुवादार्हाः। शारदावकाशे पुस्तकालयस्याऽऽवृतत्वान्मयाऽऽचार्यप्रवराणां श्रीमत्क्षेत्रेशचन्द्रचट्टोपाध्यायमहोदयानां गुणलुब्धानां संग्रहात् पुस्तकान्युपादाय निरवरोधं समपादि परिशीलनम्।

ग्रन्थस्योपक्रमोपसंहारसूत्रधाराणामिदानीन्तनकुलपतीनां पण्डितश्रीबदरीनाथशुक्लमहोदयानामुपकारभारं शिरसा बिभर्मि, यैर्भूमिकाविन्यासेन ग्रन्थकार आत्मेव सभाजितः। गवेषणाप्रबन्धस्यास्य प्रकाशनार्थं पूर्वोपकुलपतिभिः श्रीकरुणापतित्रिपाठिभिः कुलसचिवैश्च श्रीविश्वम्भरनाथत्रिपाठिभिरहं संप्रणोदित इति कृतज्ञतां ज्ञापयामि तयोः।

ग्रन्थस्यैतस्य रचनाकाले सहधर्मिण्या संस्कृतभारत्या श्रीमत्या रेखादेव्या सर्वविधं सौविध्यमुपनीतम्, विघ्नाश्च समुत्सारिता येनाहमेकाग्रधिया प्राभवं प्रणेतुमेतमिति साधुवादैः सभाजयामि ताम्। परिशिष्टेषु विविधसूचीनिर्माणविधौ श्रीवाचस्पतित्रिपाठिना, श्रीवास्तोष्पतिशास्त्रिणा, श्रीआशापतिशास्त्रिणा च श्लोकानुक्रमणिकाऽक्षरानुक्रमेण योजितेति ते शुभाशीराशिभिरभिनन्द्यन्ते।

प्रकाशनाधिकारिणो डॉ० हरिश्चन्द्रमणित्रिपाठिनो मुद्रापणतत्परता नूनं प्रशंसार्हेति तदर्थं शुभाशंसनानि वितीर्यन्ते। ईक्ष्यसंशोधनप्रक्रमे केचिदंशाः श्रीरामगोविन्दशुक्लेन, डॉ० जानकीप्रसादद्विवेदिना, डॉ० उमाशंकरत्रिपाठिना चेत्यनुसन्धा-

नाधिकारिभिः कार्यालयपण्डितेन च श्रीपरमेश्वरपाण्डेयेन सोत्साहं पठिता इत्येते सर्वे मङ्गलमोदमवाप्नुयुः । पर्यन्ते तारामुद्रणालयसञ्चालकः श्रीरमाशङ्करपण्ड्या ग्रन्थमुद्रण-यागसंभारधारी लघु कार्यनिर्वर्तनोत्को नूनमविस्मरणीय इति विज्ञापयति

अनन्तचतुर्दश्यां २०३७ वै०
( २३-९-१९८० खीस्ताब्दे )
बी० ३/११५, शिवाला,
वाराणस्याम्

विदुषामाश्रवः
**भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**
**निदेशकः**
अनुसन्धानसंस्थानस्य

# पातनिका

इह ग्रन्थे सप्तपञ्चाशत्संख्याकान् धातूनधिकृत्य तदर्थपरिवर्तनादिकारणपरीष्टौ प्रवर्तनेयं मदीया। विविधप्रसङ्गेषु भूयोभूयः प्रयुज्यमानस्य शब्दस्य निकाममर्थपरिवर्तन-संभावना[1]। प्रयोगस्तु विज्ञायते लक्ष्यग्रन्थानां पारायणेन। यद्यपि 'महान् शब्दस्य प्रयोगविषयः। सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्ना एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधाऽऽ-थर्वणो वेदः, वाकोवाक्यमितिहासः पुराणम् इत्येतावाञ्छब्दस्य प्रयोगविषयः, तथापीह चतुर्षु वेदेषु केवलमृग्वेदः, इतिहासे वाल्मीकीयरामायणं महाभारतं च, मनुस्मृतिः, केचन काव्यग्रन्थाश्च सटीकाः पारायणीकृताः।

महाभाष्यकारेण भगवता पतञ्जलिना व्याकरणाध्ययनप्रयोजनानि वदता—

यदधीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्[2] ॥

तस्मादनर्थकं माधिगीष्महीत्यध्येयं व्याकरणमिति प्रतिपादितम्। निरुक्तेऽयं श्लोकः 'यद् गृहीतमविज्ञातम्' इत्येतन्मात्रभेदेनाविकलो दृश्यते। तत्र गृहीतं शब्दतः, अविज्ञातमर्थत इति नागेशः। कैयटकाले न तावान् दृश्यतेऽभिनिवेशोऽर्थपरिज्ञान इत्याह स 'अविज्ञातम्=अविदितस्वरादिसंस्कारत्वाद् अर्थापरिज्ञानाद् वा' इति। सर्वेषां धातूनामर्थपरिज्ञानं याथातथ्येन कर्तुमशक्यमित्याह महाभाष्यकारः—'को हि नाम समर्थो धातुप्रातिपदिकप्रत्ययनिपातानामर्थान् आदेष्टुम्' इति [२,१,१ (२५ पृ०)]। अनेकार्थत्वादिति भावः। तत्र धातूनामनेकार्थत्वम्—'कुर्दखुर्दगुर्दगुद क्रीडायामेव' इति नियमार्थादेवकाराद् विज्ञायत इति कैयटः। 'अनेकार्था अपि धातवः' इति तत्र तत्र भाष्योक्तेरित्यपि बोध्यम् इति नागेशः। एवंभूतानि यद्यपि महाभाष्ये तट्टीकाकारादि-ग्रन्थेषु च[3] बहूनि वचनानि लभ्यन्ते, तथापि 'सर्वे सर्वार्थवाचकाः' इत्यादिरूपेणाव्यवस्था-

---

१. द्रष्ट० वान्द्रियैज : भाषा, २२६ पृ०।

२. स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥
तुलनीयोऽयं श्लोकः वैयाकरणसिद्धान्तमञ्जूषोद्धृतः (९४६ पृ०)—
मन्त्रार्थज्ञो जपं जप्त्वा तथैवाध्ययनं द्विजः।
सर्वलोकमवाप्नोति नरकं तु विपर्यये ॥

३. कः पुनरत्र शेत्यर्थः (महाभाष्यम्-५,३,५५;४५३ पृ०)। प्रदीपः—शेतेरनेकार्थत्वात् प्रश्नः। यो यत्रेति—स्थानार्थः शेतिर्यथा जलाशय इत्यत्रेति भावः (४५४ पृ०)। अनेकार्थत्वाद् धातूनां तिष्ठतिरेव गतिवाचीति निर्णयः (प्रदीपः १,३,१)।
'धातूनामनेकार्थत्वात् समीहितसिद्धेः'—तत्त्वबोधिनी (३७६ पृ०)।

वारणाय किं गमकमिति न निर्दिश्यते[1]। पाणिनिना तु 'अर्थस्यान्यप्रमाणत्वात्'[2] (१, २, ५६) इति वदता लोकप्रामाण्यस्य गमकत्वमभ्युपगतम्। समतीते च लोकव्यवहारे केषाञ्चन शब्दानामर्था विस्मर्यन्ते—'बह्वोऽपि हि शब्दा येषामर्था न विज्ञायन्ते—जर्भरी, तुर्फरीतू' (महाभाष्ये २, १, १; २७ पृ०)। अर्थाविज्ञाने निष्फलः शब्दप्रयोगः, तस्यार्थगत्यर्थत्वात् (द्र० महाभाष्यम्-२,१,१;५३ पृ०)।

भगवता पाणिनिना धातूनामनेकार्था अङ्गीकृताः—'प्रकाशनस्थेयाख्ययोश्च' (१,३,२३), 'गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः' (१,३,३२), 'संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः, (१,३,३६), वृत्तिसर्गतायनेषु क्रमः' (१,३,३८), 'भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः' (१,३,४७), 'लियः संमाननशालीनीकरणयोश्च,[3] (१,३,७०), 'ज्ञोऽविदर्थस्य करणे' (२,३,५१), 'अदोऽनन्ने' (३,२,६८), 'सिध्यतेरपारलौकिके'[4] (६,१,४९), 'धृषिशसी वैयात्ये' (७,२,१९), 'दृढः स्थूलबलयोः' (७,२,२०), 'कृच्छ्रगहनयोः कषः' (७,२,२२), 'णेरध्ययने वृत्तम्' (७,२,२६), 'वो विधूनने जुक्' (७,३,३८), 'मीनातेर्निगमे' (७,३,८१), 'श्योऽस्पर्शे' (८,२,४७), 'वित्तो भोगप्रत्ययोः' (८,२,५८) इत्यादिषु सूत्रेषूपसर्गप्रयोगमन्तरा।[5]

इहेदानीं प्रसङ्गेन पाणिनिकृतमर्थनिर्देशनं धातूनामस्ति नवेत्यपि विचार्यते। महाभाष्यकारेण तु (१,३,७) 'चुटू' इत्यस्मिन् सूत्रे—"अथ वाऽऽचार्यप्रवृत्तिर्ज्ञापयति—'नैवञ्जातीयकानामिदिद्विधिर्भवति' यदयमिरितः कांश्चिन्नुमनुषक्तान् पठति—'उबुन्दिर् निशामने' 'स्कन्दिर् गतिशोषणयोः'" इति धातूनां पाणिनिप्रदर्शितोऽर्थ आश्रुतः। पाणिनिर्यद्यपि धात्वर्थनिर्देशमुद्धरति—'मृषस्तितिक्षायाम्' (१,२,२०), 'आशिषि नाथः' (२,३,५५), 'तनूकरणे तक्षः' (३,१,७६), 'प्रजने वीयतेः' (६,१,५५), 'क्षियो निवासे' (६,१,१९७), 'नाञ्चेः पूजायाम्' (६,४,३०), 'अञ्चेः पूजायाम्' (७,२,५३), 'घुषिरविशब्दने' (७,२,२३), 'लुभो विमोहने' (७,२,५४), 'दिवो विजिगीषायाम्' (८,२,४९), 'सेधतेर्गतौ' (८,३,११३) इति, तथापि कतिषुचित् स्थलेषु विद्यत एव विप्रतिपत्तिः। 'वेः पादविहरणे' (१,३,४१), इत्यत्र क्रम्धातोरर्थः 'पादविहरणे' इति निर्दिश्यते, किन्तु संप्रत्युपलभ्यमाने धातुपाठे 'पादविक्षेपे' इति दृश्यते; 'भुजोऽनवने' (१,३,६६) इत्यत्र भुज्धातोरेकतरोऽर्थः 'अवने' इत्याख्यातः, किन्तु धातुपाठे 'अभ्यवहारे' इति लभ्यते; 'वृणोतेराच्छादने' (३, ३, ५४) इत्यत्र धातोः 'आच्छादने' इत्यर्थः किन्तु धातुपाठे 'वरणे' इति लभ्यते।

---

१. एकमाहुरनेकार्थं शब्दमन्ये परीक्षकाः।
निमित्तभेदादेकस्य सार्वर्थ्यं तस्य गद्यते॥ वा० प० २, ३६१।

२. सिद्धे शब्दार्थसंबन्धे लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमो यथा लौकिकवैदिकेषु (वार्त्तिकं प्रथमम्)—कीलहार्नसंस्करणं द्र० महाभाष्यस्य।

३. 'आत्वे णौ लीयतेरुपसंख्यानं प्रलम्भनशालीनीकरणयोः' इति प्रथमं वार्त्तिकम् (६,१,४८)।

४. 'सिध्यतेरज्ञानार्थस्य' इति तत्र वार्त्तिकम्।

५. 'रञ्जेर्णौ मृगरमणे' (६,४,२४) इति वार्त्तिककारेणापि विविधार्था ऊरीक्रियन्ते।

एवं तावद् धातुपाठे सर्वेषां धातूनां पाणिनिनिर्दिष्टा एवार्था यथावदुपलभ्यन्त इतीह संशीतिरुपस्थिता, पाणिनिद्वारकस्य समानस्य पथो लाघवस्य च समाश्रयणात्। अवनाभ्यवहारयोरवनं ज्यायः। 'वृणोतेराच्छादने' इत्यत्र लोकप्रसिद्धमर्थमङ्गीकृत्य 'वरणे' इत्यर्थो न समादृतोऽनेकार्थकः। एवमेव 'पादविक्षेपे' इत्यत्रापि ज्ञेयम्। अलाघवेऽपि लोकप्रचलितोऽर्थोऽङ्गीकृत इति भाति।

## लक्षणयाऽर्थपरिवर्तनम्

प्रकृतमनुसरामः। यद्यपि महाभाष्यकारेणार्थपरिवर्तनस्य नामार्थारोपस्य प्रदर्शिताश्चत्वारः प्रकाराः[1]—"चतुर्भिः प्रकारैरतस्मिन् 'सः' इत्येतद् भवति—१. तात्स्थ्यात्, २. ताद्धर्म्यात्, ३. तत्सामीप्यात्, ४. तत्साहचर्यादिति[2]। १. मञ्चा हसन्ति, गिरिर्दह्यते, २. जटिनं पीनं ब्रह्मदत्त इत्याह, ३. गङ्गायां घोषः, ४. कुन्तान् प्रवेशय, यष्टीः प्रवेशयेति" (४,१,४८; ७३ पृ०) इति, तथापि नैतानङ्गीकरोति स धातूनामनेकार्थत्वे। "बह्वर्था अपि धातवो भवन्तीति। तद्यथा—'वपिः प्रकिरणे दृष्टः, छेदने चापि वर्तते—'केशश्मश्रु वपति' इति। ईडिः स्तुतिचोदनायाच्ञासु प्रेरणे चापि वर्तते—'अग्निर्वा इतो वृष्टिमीट्टे, मरुतोऽमुतश्च्यावयन्तीति। करोतिरभूतप्रादुर्भावे दृष्टो निर्मलीकरणे चापि वर्तते—'पृष्ठं कुरु, पादौ कुरु'। उन्मृदानेति गम्यते। निक्षेपणे चापि वर्तते—'कटे कुरु' 'घटे कुरु' 'अश्मानमितः कुरु'। स्थापयेति गम्यते। एवमिहापि तिष्ठतिरेव व्रजिक्रियामाह; तिष्ठतिरेव व्रजिक्रियानिवृत्तिम्" इति धातूनां बह्वर्थान् प्रदर्शितवता महाभाष्यकारेण (१,३,१), 'चतुर्भिः प्रकारैरतस्मिन् स इत्येतद् भवति' इतिवदिहानेकार्थत्वे न प्रदर्शितः कोऽपि प्रकारः।

नागेशभट्टस्तु—'न च धातूनामनेकार्थत्वाद् धातुर्न क्वापि लाक्षणिक इति वाच्यम्, अनुपपत्तिप्रतिसन्धानापूर्वकप्रतीतिविषयार्थमादायैवाऽनेकार्थत्वस्वीकारात्। यस्त्वनुपपत्तिप्रतिसन्धानपूर्वकप्रतीतिविषयो यथा भूधातोर्गमनादिस्तत्र लक्षणैवेत्याशयात्'[3]

---

१. शब्दशक्तिपरीक्षाप्रकरणे गोतमोऽप्याह—'सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः' (२,२,६१) इति। तस्य भावस्तद्धर्मस्तदभावेऽपि तदुपचारस्तच्छब्दव्यवहार इत्यर्थः। स च तद्धर्मारोपेण। आरोपनिमित्तानि च सहचरणादीनि।

२. संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥

इति वाक्यपदीये (२,३१७—१८) चतुर्दश हेतवो दर्शिताः।

अभेदपक्षेऽपि सारूप्याद् भिन्नार्थाः प्रतिपत्तिषु।
नियता यान्त्यभिव्यक्तिं शब्दाः प्रकरणादिभिः॥ वा० प० २, ३१८।

३. 'कृच्छ्रगहनयोः कषः' (७,२,२२) इत्यत्र 'कृच्छ्रं दुःखं तत्कारणं च लक्षणया गृह्यते, कषतिर्हिंसार्थः' इति तत्त्वबोधिनीकारः (५०६ पृ०)।

इत्याह (१,३,१ महाभाष्ये)। 'पूञो विनाशे' (८,२,४४) इति वार्त्तिके पूञो धातोर्विनाश-रूपस्यार्थस्यानुपपत्तिप्रतिसंधानापूर्वकप्रतीतिविषयार्थतेत्यनेकार्थतासिद्धान्तः समाश्रीयते वैयाकरणैः—'अनेकार्थत्वाद् धातूनां पूञ् विनाशार्थः' इति कैयटः। तत्त्वबोधिनी-कारोऽप्येतद्वचनमेवानुकरोति—"धातूनामनेकार्थत्वात् 'पूञ् पवने' इत्यस्य विनाशेऽपि वृत्तिः' इति (५०२ पृ०)। वस्तुतस्तु वेदादौ पापादिविगमे पूञ्धातोः प्रयोगः। शोधनेन पापादिविनाशरूपः सोऽर्थः क्रमशो विनाशे रूढो जातः। महाभारते (१४,७१,१६) इत्यत्र स तथा दृश्यते। परवर्तिभिर्वैयाकरणैस्तस्य परिवर्तनकारणमजानानैर्धातूनाम-नेकार्थत्वात् कृतं समाधानम्। एवं तावदर्थानामैतिहासिकपरीक्षणेन[1] भवति रूढेरर्थ-कारणज्ञानम्। द्रष्ट० वृत्-धातौ वृत्तशब्दस्य मरणरूपोऽर्थः।

'न चैकस्य धातोरर्थत्यागपूर्वकमर्थान्तरे वृत्तौ शब्दार्थसंबन्धनित्यताहानिरिति वाच्यम्, धात्वन्तरत्वात्' इत्याह नागेशो मञ्जूषायाम् (८३६ पृ०)। तत्र कुञ्चिका—'धातूनामनेकार्थत्वमित्यस्याप्ययमेवाशयः' इति (८३७ पृ०); कला—'अर्थैक्येऽपि शब्दभेदे तत्त्ववदर्थभेदेन शब्दैक्येऽपि तत्त्वादित्यर्थः' इति (८३८ पृ०)। वस्तुतस्त्वेक-स्यैव भूधातोः सत्ताप्राप्त्यादयोऽनेकार्था आरोपनिमित्तानां भेदेन, रूढ्या वा। किन्तु तेषामर्थपरिवर्तनकारणानवगमाद् भिन्नाः प्रकृतयः समाश्रीयन्ते वैयाकरणैः।

'ननु सर्वेषां सर्वार्थवाचकत्वे लक्षणोच्छेद इति चेन्न, योगिनां सर्वार्थवाचकत्व-ज्ञाने सत्यप्यस्मदादीनां तदभावात्। किञ्च, अन्वयाद्यनुपपत्तिज्ञानपूर्वकशक्यत्वेन गृहीता-र्थसंबन्धज्ञानेनोद्बुद्धशक्तिसंस्कारबोधे लक्षणेति व्यवहारात्। तच्छक्तिसंस्कारश्चेदृशे स्थले जन्मान्तरीणोऽपि। वस्तुतस्तात्पर्यानुपपत्तिरेव तद्बीजम्। अन्यथा 'गङ्गायां घोषः' इत्यादौ घोषादिपद एव मकरादिलक्षणापत्तिः, तावताप्यन्वयानुपपत्तिपरिहारात्। एवं रूढिप्रयोजनान्यतरदपि तत्कारणमनुभवबलात्' इति मञ्जूषायां (११४ पृ०) नागेशेन साधु प्रत्यपादि। अयं सिद्धान्तो वाक्यपदीये (२, ३६१; २५५)—

एकमाहुरनेकार्थं शब्दमन्ये परीक्षकाः।
निमित्तभेदादेकस्य सार्वार्थ्यं तस्य गद्यते॥
सर्वशक्तेस्तु तस्यैव शब्दस्यानेकधर्मणः।
प्रसिद्धिभेदाद् गौणत्वं मुख्यत्वं चोपचर्यते॥

इत्यत्र निमित्तभेदात् सर्वार्थतारूपो दृश्यते। आरोपनिमित्तानि त्वनन्तानीति न तत्र शक्यते कर्तुं परिगणनम्। न्यायदर्शनादौ तु तत्परिगणना निदर्शनार्थम्। वस्तुतस्तु तात्पर्यानुपपत्त्या तत्तदुपपदसमभिव्याहारेणाऽऽरोपार्थज्ञानम्। तादृशतादृशोपपदानि चानन्तानीत्यनन्ता अर्था धातोः शब्दस्य वा। तेषां तादृशप्रवृत्त्यनभिज्ञतया केचन वैयाकरणा उपपदसाहाय्येनोपलब्धमर्थं तस्य धातोर्नित्यतया मन्वते। धारणपोषणार्थ-कस्य धाधातोर्दानरूपोऽर्थोऽप्यङ्गीक्रियते क्षीरतरङ्गिण्यां कविकल्पद्रुमे क्रिया-रत्नसमुच्चये च।

---

१. यदि यह माना जाए कि शब्दों के आधारभूत अर्थ और उनसे उद्भूत कुछ गौण अर्थ होते हैं, तो समस्या ऐतिहासिक बन जाती है—भाषा (वान्द्रियैज), २१२ पृ०।

### कर्तृव्यापाराणामानन्त्यादर्थानामानन्त्यम्

√अग् इति धातोर्नोपलभ्यन्ते तिङ्रूपाणि। अग्निशब्दमूले √अग्धातुर्निश्चयतः संनिविष्टः। कर्त्रनुगतो व्यापारः। कस्यापि कर्तुर्भवन्त्यनेके व्यापाराः। अग्निशब्दः खल्विह निदर्शनार्थतया ग्राह्यः। इह द्युति-तिर्यग्गति-दाह-ताप-नाश-ग्रहणादयो भूयिष्ठा व्यापाराः समवस्थिताः। वैयाकरणैर्लक्ष्यभूतशब्दो यस्मिन्नर्थे समधिगतस्तच्छब्दानुमितो धातुरपि तस्मिन्नेवार्थे पठितः। अत एव कारणादनूनकैरपि वैयाकरणैस्तस्य तस्य धातोः समाना अर्था न प्रतिपादिताः। तत्तच्छब्दानां यावन्तो व्यापारास्तैर्लक्षिता-स्तावन्त एवार्था निर्दशिताः। केनचन तनीयांसो व्यापाराः साक्षात्कृता इति तथार्थाः संकीर्तिताः; अपरेण तु भूयिष्ठाः साक्षात्कृता व्यापारा इत्यर्था अपि तथा निर्दिष्टाः। अग्नेर्भासनाद्यर्थत्वेऽपि न व्यधायि केनापि तदुल्लेखः √अग् इति धातौ। काशकृत्स्नेनैव तदादानार्थो निरूपितो नेतरैः। रक्षणकान्त्याद्येकोनविंशत्यर्थस्य 'अव्' इति धातो-र्मूले तथार्थकस्य जलवाचकस्य 'अप्' इति शब्दस्य संभावना। व्याप्त्यर्थक आप् इति धातुरपि तं शब्दमभिसंबध्नाति। धातूनामर्थपरीक्षणावसरे धातोरनेकार्थानां मूले कारणमिदं मया समधिगतम्। ग्रन्थप्रारम्भे केचन धातवस्तदर्थाश्च तया दृशा परी-क्षिता अपि। भूयिष्ठानां धातूनां च तिङन्तप्रयोगानुपलब्धिरपि नामाधारेण धातु-कल्पनां प्रपुष्णाति। अनेनैव क्रमेण च धातोर्मूलार्थानुसन्धाने दृष्टिर्लब्धा स्यात्।

### क्वचिद् धात्वर्थः प्रत्ययेनाभिभूतः

'आचारादीप्सिताः प्रजाः' इति मनु० (१,१५६) कुल्लूकभट्टेन 'ईप्सिताः' इत्यस्यार्थो विहितः 'अभिमताः' इति। वस्तुतोऽस्मिन्नुदाहरणे धात्वर्थः प्रत्ययार्थेनाभि-भूतोऽस्ति। सन्-प्रत्ययस्येच्छार्थ एवेह व्यक्तः। चिकीर्षितशब्देऽप्येवमेवावधेयम्। अस्मिन् ग्रन्थे बहुत्र सिद्धान्तोऽयं परीक्षितः।

### अर्थनिर्णयसंबन्धे टीकाकाराः

'अव रक्षणादौ' इत्यत्र वैयाकरणसिद्धान्तकौमुद्याष्टीकाकारो ज्ञानेन्द्रसरस्वती—"आदानम्=ग्रहणम्। न चात्र दानमेवार्थोऽस्त्विवति वाच्यम्, 'भागे वृद्धौ ग्रहे वधे' इत्येवमर्थानां विशिष्य वोपदेवेन गणितत्वात्" इत्यभिधाय धातोरस्य दानरूपमर्थं प्रत्यादिशत्। ऋग्वेदे (१,१८१,१) तु लभ्यते दानार्थो धातोरस्य—'अवितारा जना-नाम्'=दातारौ (सा०)। महाभाष्यकारात् परवर्तिनो लक्षणैकचक्षुष्का वैयाकरणा लक्ष्यानुसन्धानमन्तरा कल्पनाकोटिमाटीकयन्तो व्यस्मार्षुर्वेदादींल्लक्ष्यग्रन्थान् इति जाता गतिस्तेषां वोपदेवपर्यन्ता। एवमेवेह ग्रन्थे बहुत्र परीक्षितम्। टीकादिकाराणामा-लोचनाप्रसङ्गे ग्रन्थस्यास्य १५.१; १९.७; २२.१०; ३१.३; ५०.१३ कण्डिका द्रष्टव्याः।

### भाषान्तरसंक्रान्त्याऽर्थपरिवर्तनम्

मनुस्मृतौ (४,८६)—

दश सूनासहस्राणि यो वाहयति सौनिकः।
तेन तुल्यः स्मृतो राजा घोरस्तस्य प्रतिग्रहः॥

इत्यत्र कुल्लूकभट्टेन वाहयति='व्यापादयति' इत्यर्थो दर्शितः। संस्कृतवाङ्मये वह् धातुर्व्यापादनार्थको न क्वापि लभ्यते। अर्थपरिवर्तनकारणमविचिन्वाना विद्वांसः 'अनेकार्था हि धातवः' इत्युक्तिमवलम्ब्य संतोषमावहन्ति। भारते वर्षे पर्यनुयोगस्य महती प्रतिष्ठा कस्याविदिता नाम। व्याकरणशास्त्रे तु सा पदे पदे दृश्यते। अर्थनिर्णय-प्रसङ्गे तस्या विलोपो नूनं महते क्लेशाय कल्पते। कस्मिन्नपि ग्रन्थे पुरातनेऽधुनातने वा 'वाहयति' इत्यस्य व्यापादनार्थकारणं न स्फुटीक्रियते। अस्मिन् ग्रन्थेऽर्थपरिवर्तन-कारणानां प्रस्फोरणाय यथामति प्रयासः समाश्रुतः। द्र० वह् धातोरन्तिमा कण्डिका। एवं तावदर्थपरिवर्तन इमानि कारणानि लभ्यन्ते—

१. उपपदसंनिधानेन (तत्तत्पदसमभिव्याहारेण)।

२. प्रसङ्गात् (विविधप्रसङ्गेषु प्रयोगाधिक्येनाधिका खल्वर्थपरिवर्तनसंभावना)।

३. रूढ्या (द्र० ११.२ अ. इति कण्डिका)।

४. मिथो धात्वादिसंक्रमणेन (द्र० सप्तमो धातुः)।

५. भाषान्तरशब्दस्वरूपसंक्रमणेन।

इतोऽप्यन्यानि बहूनि कारणानि शक्यन्ते विचेतुम्।

अर्थानां विविधानि परिवर्तनानि प्रायस्त्रिषु वर्गेषु विभाज्यन्ते पाश्चात्यमनी-षिभिः—१. अर्थसंकोचः, २. अर्थविस्तारः, ३. अर्थादेशश्चेति। सामान्यार्थतो विशेषार्थं प्रति धात्वर्थादिगमने नामार्थसंकोचो यथा करणार्थकस्य कृधातोर्हिंसा-दयोऽर्था इति। इतो वैपरीत्येन तु विशेषार्थतः सामान्यार्थं प्रति क्रमणे नामार्थविस्तारो यथा विलेखनार्थकस्य कृष्धातोराहरणोत्पादनपीडेत्यादयोऽर्थाः। अर्थद्वयस्य समानव्यापकत्वे सामीप्यादेकस्य स्थानेऽपरस्याऽऽदेशो नामाऽर्थादेशः। (यदा शब्द आधाराद् आधेयम्, कारणात् कार्यम्, चिह्नाच्च चिह्नितं द्रव्यं प्रति प्रसरेत्, तदायं भवति)। प्रायोऽर्थादेशकारणेनैवार्थविकासोऽर्थसंकोचश्च भवत इति स्पष्टम्। अर्थादेशस्य भवन्ति विविधानि रूपाणि। तानि च वैयाकरणैर्विभिन्नैरभिधानैरुच्यन्ते—१. रूपकम्[1] (Metaphore), २. अङ्गस्याङ्गित्वेन स्वीकरणम् (Synecdoque), ३. पदार्थस्य स्थाने गुणवाचकशब्दस्य प्रयोगः (Metonymie), ४. शब्दानामशुद्धः प्रयोगः (Catachrèse) इत्यादीनि। अर्थादेशस्य तात्स्थ्यात्, ताद्धर्म्यात्, तत्सामी-प्यात्, तत्साहचर्याद् इति महाभाष्योक्तानि, सहचरणस्थानतादर्थ्यवृत्तमानेत्यादीनि गोतमोक्तानि कारणानि प्रतिपादितान्येव। सिद्धान्ततो विशेषार्थापेक्षया सामान्यार्थो भवति प्रभविष्णुरित्यज्ञातरूपेणैकस्यार्थस्य स्थानेऽपरस्यार्थस्य प्रयोगो जायते।

### अर्थनिर्णये व्याख्यानां साहाय्यम्

परम्परावबोधाय व्याख्याः साभिनिवेशं समाश्रयणीयाः। क्वचित् क्वचित् तासामालोचनापि करणीया। अर्थपरिवर्तने सामाजिकस्थितिः प्रधानं कारणम्। तत्र व्याख्या निकामं सहायिका इति ता नावहेलनीया अर्थनिश्चयविधौ।

१. द्रष्ट० भाषा (वान्द्रियैज), २३६ पृ०।

## सेण्टपीटर्सबर्गादिकोशस्खलतयः

सेण्टपीटर्सबर्गप्रभृतिकोशानां श्रूयते महान् यशोडिण्डिमः। यद्यपि बहूपकृताः संस्कृतभाषाप्रणयिजनास्तस्य कोशस्य निर्माणेनेति नास्ति संशीतिलेशः, तथापि तत्र दोषाणामभावो न शक्यते वक्तुम्। १. तत्रोपयोजितग्रन्थानां संस्करणानि सम्प्रति दुर्लभानीति मूलपुस्तकेषूद्धरणानां संप्राप्तिर्न जायते सरलम्। २. महाभारतोद्धरणानि तत्र पर्वाध्यायश्लोकक्रमपूर्वकं नोपन्यस्तानि। तेषां क्रमः पर्वश्लोकोभयरूपः कालिकातासंस्करणमवलम्बत इति साम्प्रतमुपलभ्यमानेषु पुस्तकेषु मूलोद्धरणगवेषणा न शक्यते विधातुं सर्वैः। ३. उद्धरणान्यपि यथामूलं नाङ्गीकृतानि। यथा—√ग्रह् धातुप्रसङ्गे रघु० (४,८) इति संख्याकः श्लोक इत्थमुपन्यस्यते तत्र—'सर्वस्य लोकस्य मनोऽग्रहीत्' इति। नेदं साधीयो रूपं तदीयम्। स श्लोकस्त्वित्थमुपलभ्यते रघुवंशे—

नहि सर्वस्य लोकस्य युक्तदण्डतया मनः।
आददे नातिशीतोष्णो नभस्वानिव दक्षिणः॥ इति।

अर्थनिर्णयविषयेऽपि यथेच्छमाचरितं पीटर्सबर्गकोशे। तत्र तत्तद्ग्रन्थव्याख्यासमाश्रयपूर्वकमेव निर्णयो न गृहीतोऽर्थानाम्। मन्ये, वेदार्थपरम्पराया विच्छिन्नतया वेदानामनेके शब्दार्था इदानीमप्यविज्ञाताः। किन्तु तदितरलौकिकसंस्कृतवाङ्मयस्य विद्यते काचिदविश्लथा परम्परा। भारतीयविद्वद्भिस्तत्र महान् प्रयत्नः समास्थितः। शब्दार्थनिर्णयप्रसङ्गे कस्यचिदपि परम्परानधीतस्य महार्णवे निमग्नस्य दौष्कस्येव गतिर्भवेत्। थियोदोरबेनफाइमहोदयः—

विक्रम्य कौशिकं खड्गं मोक्षयित्वा ग्रहं रिपोः।
आक्रन्दद् भीमसेनं वै येन यातो महाबलः॥

इत्यत्र महाभारते (३,१५७,११) ग्रहशब्दस्यार्थं चोरितवस्तु (Booty) लोप्त्रमिति निर्णीतवान्। महाभारते तु जटासुरः सहदेवं निगृहीतवान्—'प्रातिष्ठत स दुष्टात्मा त्रीन् गृहीत्वा च पाण्डवान्' इति। किन्तु 'सहदेवो यत्नेन ततोऽपक्रम्य, कौशिकम्=कोशादागतं खड्गं च विक्रम्य, रिपोर्ग्रहम्=ग्रहणं मोक्षयित्वा' इत्यर्थः।

## इह ग्रन्थे

व्याख्यासु कोशेषु वा यद्यपि निर्दिश्यन्ते तेषां तेषां शब्दानां ते तेऽर्थाः, तथाप्यर्थपरिवर्तनस्य कारणानि न प्रस्तूयन्ते। निरुक्ते निर्वचनपद्धत्याऽर्थनिर्णयपद्धतिर्नूनं महनीया। किन्तु कस्यचिच्छब्दस्य परिवर्तितानामर्थानां संबन्धे विचारो नोपलभ्यते तत्रापि। बेकनाटशब्दनिर्वचनप्रसङ्गे मौनमास्थितं यास्केन। अर्थस्यैतिहासिकशृङ्खलावबोधनाय वैदिकलौकिकसंस्कृत-पालिप्राकृतापभ्रंश-प्रादेशिकभाषाः, भारोपीयधातवस्तदर्थाश्च समास्थिताः। तदाधारेण धात्वर्थानां परिवर्तनस्य कारणानि निर्दिष्टानि। यद्यपि धात्वर्थानां पौर्वापर्यनिश्चयस्तु दुष्करः, तथापि सोऽपि क्वचित् क्वचिद् यत्नेन निर्धारितः।

**भाषाणां प्रयोगः**

ग्रन्थेऽस्मिन् पाणिनीयधातुभिस्तदर्थैश्च सार्धं तुलनार्थमार्यभाषाणां धातवः शब्दास्तदर्थाश्च प्रदर्शिताः सन्ति यथास्थलम्। तदितरा केवलं मुण्डारीभाषा प्रायोजि सकृत्। तत्र चतुष्षष्टिर्भाषा अष्टादश चोपभाषा इति संभूय तासां द्व्यशीतिरुपयोजिता। विशिष्टशब्दसूच्यां तदीयानि नामानि प्रयोगस्थलानि संक्षेपाश्च विलोकनीयाः। भारोपीयभाषानाम्नेह यस्या भाषायास्तारकचिह्नाङ्किता धातवः शब्दा वा प्रदर्शिताः सन्ति, सा वस्तुतः कस्यापि देशस्य भाषा नास्ति। भारतीयानां यूरोपीयाणां च समग्राणामार्यभाषाणामाधारेण या मूलभाषा कल्पिता तत्त्वज्ञैः सैवेह भारोपीयभाषापदेन व्यवहृता। तारकचिह्नैर्नाम तच्छब्दा विनिर्दिष्टाः। क्वचिद् विश्वार्यभाषार्थेऽपि भारोपीयभाषापदं व्यवहृतम्। भारोपीयभाषातो भिन्नेषु स्थलेषु प्रयुक्तं तारकचिह्नं प्रादेशिकभाषाप्रयोगसूचकमवगन्तव्यम्। भारोपीयभाषापरिवारविषयकज्ञानार्थमिह भाषाचक्रं प्रस्तूयते। जिज्ञासूनां ज्ञानवर्धनाय नूनं सेत्स्यतीदमिति मे विश्वासः।

**भारोपीयभाषापरिवारः**

भारोपीयमिति भारतीयानां यूरोपीयाणां च भाषाणां परिवारविशेषाभिधानम्। आर्यन् इति, जेफैटिक् (Jāphetic) इति, संस्कृतम् इति, इण्डोजर्मनिक् इति वाभिधानान्यपि भारोपीयभाषाणां कृते प्रयुज्यन्ते, तथापि साम्प्रतं भारोपीयमिति नामधेयमेव तदर्थं व्यवहारपदवीं प्रतिपन्नम्। तच्च सामान्यतः सप्तसु प्रमुखशाखासु वर्गीकृतम्—

१. भारतीयम् [इण्डिक् (हैन्दवम्)]—संस्कृत-पालि-प्राकृतापभ्रंश-हिन्द्यात्मकम्; २. पारसीकम् (इरानियन् उताहो पर्सिक्)—अवेस्ता, पहलवी, पार्सि, पर्सियन् इत्याद्यात्मकम्; ३. केल्टिक्; ४. ग्रीक; ५. इटालिक्—लैटिन्, ओस्कन्, उम्ब्रियन्, रोमान्स् इत्यादिकम्; ६. स्लावो-लैटिक्—रसन्-लिथुआनियन्-लैटिश्-प्रभृतिकम्; ७. ट्यूटानिक् आहोस्विद् जर्मनिक्—जर्मन् इँग्लिश् इत्यादिकं कुलम्।

**नामकरणम्**

कारणानां निर्देशनेन विज्ञानम्। अतो 'धात्वर्थविज्ञानम्' इति शीर्षकं वृतं निबन्धस्य। यूरोपे त्वियं शाखा शब्दशास्त्रस्य—'सिमैन्टिक्स्' इति नाम्ना प्रसिद्धा। (Transliteration) वर्णान्तरीकरणेन[२] सीमान्तकादीनि, अनुवादेन वर्णान्तरीकरणेन चोभयरूपेण 'आशयाम्नातकम्'=आशयः=अर्थः, तस्य आम्नातकम्=उपदेशः (द्र० मनु० १२,१०८, भट्टि० १८,५) इत्यादीनि च मदन्विष्टानि नामानि नाङ्गीकृतानि। अत्र मयेह कियत् साफल्यमासादितमितीह प्रेक्षका एव प्रमाणम् इति विज्ञापयति

विदुषामाश्रवः

**भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**

---

१. द्रष्ट० भाषाविज्ञान पर भाषण, द्वितीयो भागः, २३७–२५६ पृ०।

२. "अर्थविकास के अध्ययन करने वाले विदेशी पण्डितों ने ज्ञान की इस शाखा का नाम "सिमैण्टिक्स्" दिया है, मैं सीमान्तकशास्त्र कहूँगा। अनहद नाद की चर्चा करने वाले से इससे अधिक उत्तम शब्द की आशा न रखें। सीमान्तक अर्थात् असीम का निर्देशक—अनहद!" ———आचार्य हजारीप्रसाद द्विवेदी : भारतीय साहित्य, जनवरी, १९६०।

# भारोपोय -( इण्डोजर्मनिक् )- भाषाचक्रम्

| बिभागः | उपपरिवारः | शाखा | गणः | भाषा उपभाषाश्च | प्रमुखं स्थानम् |
|---|---|---|---|---|---|
| पौरस्त्यः 'शतम्' इत्याख्यवर्गीयो वा | आर्यो भारेनीयो वा | हैन्दवी (इण्डिक्) | संस्कृतः | संस्कृतम् (वैदिकं लौकिकं च); पालिः, प्राकृतम्, (अवन्तीया, महाराष्ट्रिया, मागधी, अर्धमागधी), प्राच्या, शौरसेनी, कश्मीरीया, कोहिस्तानी, लहँदा (हिन्दकी, जटकी, मुलतानी), सिन्धी (लाड़ी), मराठी (देशी, कोङ्कणी), उड़िया, बिहारी (भोजपुरी, मागधी, मैथिली), बंगाली, आसामी, पौरस्त्यहिन्दी (अवधी, बघेली), पाश्चात्त्यहिन्दी (हिन्दुस्तानी, उर्दू, दक्खिनी, व्रजभाषा, बुन्देली, कनौजी), राजस्थानी (मारवाड़ी, जयपुरी), गुजराती (भीली), पंजाबी, पहाड़ी (नेपाली), सिंहली | भारतम् |
| | | | संस्कृतेतरः | शीना-खोवर-काफिरी-प्रभृतयः | चित्राल्-काफिरिस्तान-प्रभृति |
| | | पारसीका (ईरानियन्) | पौरस्त्यः<br>पाश्चात्त्यः पारसीको वा | अफगान-(पश्तो)-बलूच (बलोच-), गल्चा<br>अवेस्तन्, बैक्ट्रियन्, पुरा० पर्सियन्, पहलवी (पजेन्द, पर्सि, हुज्वरेश्), न० पर्सियन्, कुर्दिश्, ऑसैतिक | अफगानिस्तान-बलूचिस्तान-प्रभृति<br>पर्सिया, कुर्दिस्तान<br>काकेसिया |
| | अनाटोलिक् Anatolic | अर्मेनियन् | | अर्मेनियन् (पुरातनी, शास्त्रीया, नवीना च) | अर्मेनिया |
| | | फ्रीजियन् | | फ्रिजियन् | पुरातन-फ्रिजिया |
| | | सिथियन् | | सिथियन् | दक्षिणं कुरुवर्षम् (रूस) |
| | थ्राको इल्लिरियन्<br>बाल्टो-स्लाविक् | | | थ्रासियन्, इल्लिरियन्, अल्बेनियन् ( गुएग्, तोस्क् )। | बाल्कन् पेनिन्सुला |
| | | स्लाविक् उताहो स्लावोनिक् | पौरस्त्यः<br>दाक्षिणात्त्यः<br>पाश्चात्त्यः | चर्चस्लाविक् उताहो पुरातनबल्गेरियन्, रसन् (विशाल-, श्वेत-, लघु-, रस्नियाक् अथवा रुथेनियन्), बल्गेरियन्, सेर्वो-क्रोटियन् (सर्वियन्, क्रोटियन् अथवा होर्वातियन्), स्लोवेनियन्। | रसिया, सर्विया, बल्गेरिया, तुर्की, मान्तेनेग्रो इत्यादि। |
| | | वाल्टिक् उताहो लैट्टिक् | | पुरातन-प्रशन्, लिथुआनियन्, लेट्टिश् | रसिया-, लिथुआनिया-, बाल्टिक्-प्रदेशाश्च। |
| | हेल्लेनिक् | ग्रीक् | | [पुरातनो आयोनिक् अथवा महाकाव्यभाषा, नवीना आयोनिक्, एटिक्, डोरिक्, ईओलिक्, एताभिः सर्वाभिः सार्धम्—बीओशन् (Boeotian), लेस्बियन्, थेस्सालिन्, अर्केडियन्, एलियन्, सिप्रियन्] नवीन ग्रीक् (रोमानिक्, नेओ-हेल्लेनिक्)। | ग्रीस्, तथा एशिया माइनर्। |
| पाश्चात्त्यः 'कैण्टुम्'—इत्याख्यवर्गीयो वा | इटालिक् | ओस्को-उम्ब्रियन् | | ओस्कन्, उम्ब्रियन्। | इटली |
| | | सैबेलियन् | | मरूसिनियन्, मर्सियन् (Marsian), पीलिग्नियन्, पाइसेनियन्, सेवाबाइन्, वेस्टिनियन्, वोल्सियन्।<br>[फेलैरियन्, (फेलैनियन्), लेनूबियन्, प्रोनेस्टिनियन्] | |
| | | लैटिनियन् | लैटिन् तथा रोमान्स् अथवा रोमानिक् | लैटिन्, फ्रेंच्, प्रोवाँशल्, फ्रांको प्रोवाँशल्, कैटलैन्, स्पेनिश् (अण्डैल्यूजियन्, अरगॉनीज़्, ऑस्ट्रियन्, कस्तिलियन्, लीओनीज़्) पोर्तुगीज़् (गेलिशियन्), इटालियन् तुस्कन् आहोस्विद् आदर्श-इटैलियन्), रीटो-रोमानिक्, (रोमांश्, लडीन्), रूमेनियन्। | इटली, फ्रांस्, स्पेन्, पोर्तुगाल्, स्विट्जर्लैण्ड, रूमानिया। |
| | केल्टिक् | कंटिनेन्टल् (महाद्वीपीया) | | गालिश् (गेलिक्) | पुरातन-गौल् |
| | | इन्स्यूलर (द्वीपीया) | किम्रिक अथवा ब्रिटॉनिक् | कार्निश्, वेल्श्, अर्मोरिकन् उताहो ब्रेटॉन् | कार्नवाल्, वेल्स्, ब्रिटॅनी |
| | | | गधेलिक् | आयरिश्, स्कॉच् गेलिक् अथवा ऐंर्स, मङ्क्स् | आयर्लैण्ड्, स्काट्लैण्ड, आयले। |
| | ट्यूटानिक् अथवा जर्मनिक् | पूर्ववर्तिनी | | गाथिक् अथवा मीसो-गाथिक् | पुरातनजर्मनी इत्यादि। |
| | | स्कैण्डिनेवियन् | | पुरातन नार्स अथवा पुरातनी आइस्लैण्डिक्, स्वीडिश्, डेनिश्, नार्वेजियन् | स्कैण्डिनेविया, आइस्लैण्ड |
| | | पश्चिमवर्तिनी | उच्चा | पु० उ० जर्मन् (फ्रांकाइश्, अलेमानिक्, बवेरियन्), म० उ० जर्मन्, जर्मन् | जर्मनी, आस्ट्रिया। |
| | | | निम्ना | पु० सैक्सन्, पु० नि० फ्रांकाइश्, नि० जर्मन, प्लॅत्-डॉयच्, डच्, फ्लैमिश्, फ्रीजिक् अथवा फ्रिजियन्।<br>ऍग्लो-सैक्सन् (पु० इँग्लिश्), म० इँग्लिश्, इँग्लिश्, स्काटिश्। | जर्मनी, हॉलैण्ड<br>बेल्जियम्,<br>इँग्लैण्ड |

# विषयानुक्रमणिका

# परिशिष्टानि

धातोरनेकार्थानां कथं संभव इति जिज्ञासा। अर्थनैयत्यं भाषाया व्यवस्थापकतासूचकम्। अत्रोच्यते, कर्त्रनुगतो व्यापारः। कस्यापि कर्तुर्भवन्त्यनेके व्यापाराः। अग्निशब्द एव निदर्शनार्थतया ग्राह्यः। इह द्युतितिर्यग्गति-दाह-ताप-नाशन-ग्रहणादयो भूयिष्ठा व्यापाराः समवस्थिताः। वैयाकरणैर्लक्ष्यभूतशब्दो यस्मिन्नर्थे समधिगतस्तच्छब्दानुमितो धातुरपि तस्मिन्नेवार्थे पठितः। अत एव कारणादनूनकैरपि वैयाकरणैर्धातोस्तुल्यार्था न प्रतिपादिताः। तत्तच्छब्दानां यावन्तो व्यापारास्तैर्लक्षितास्तावन्तोऽर्था निर्दिशिताः। केनचन तनीयांसो व्यापाराः साक्षात्कृता इति तथार्थाः संकीर्तिताः; अपरेण तु भूयिष्ठाः साक्षात्कृता व्यापारा इत्यर्था अपि तथा व्याहृताः। निरीक्ष्यताम्, अग्नेर्भासनाद्यर्थत्वेऽपि न व्यधायि केनापि तदुल्लेखः। काशकृत्स्नेनैव किलाऽऽदानार्थो निरूपितो नेतरैः।

मेदिनीकोशानुसारेण 'अग्र'-शब्दो नवस्वर्थेषु प्रयुज्यते। ते चेमे[1]—१. पुरस्तात्[2], २. उपरि, ३. पलपरिमाणम्, ४. आलम्बनम्. ५. समूहः, ६. प्रान्तः, ७. अधिकम्, ८. प्रधानम् (द्र० प्राग्रम्, प्राग्र्यम्), ९. प्रथमम् इति। *भारोपीयभाषायाम् 'अग्रो' (Agro) अथवा ऑग्रो (Ogro) इति शब्दस्यार्था भवन्ति—१. निशितः कण्टकः, २. उच्चम्, प्रथमम्, ३. अग्रम् इति वाल्देपॉकर्नीः[3]। अवेस्ताभाषायाम् अग्र-(Agra)-शब्दस्त्रीनर्थानभिव्यनक्ति—१. उच्चम्, २. परिधिः, ३. स्थानं चेति। विद्यमानेष्वप्येतेष्वर्थेषु न कोऽपि वैयाकरणतल्लज उपस्थापितवानर्थानिमान् अग्-धातुप्रसङ्गे वै। हेतुश्चात्र वैरल्यमेवैतेषामर्थानाम्। नैते ह्यनुगता अनेकत्र। आधिक्यतोऽनुषक्तोऽर्थस्तु कुटिलगतिरेव सर्वत्रेति तदुल्लेखः। निरुक्ते (१।१३) 'अग्रु' इति नद्यर्थकः। एषोऽङ्गुल्यभिधायकोऽपि (निरु० २/५)। अग्रुशब्दस्योक्तार्थौ कुटिलगत्यात्मकौ। नदी वहत्यत्र कुटिलम्। अन्तरेणारालतामङ्गुलिरप्यनर्हाऽनुष्ठातुं शक्त्यपेक्षाणि कर्माणि। एवञ्जातीयकेषु कार्येषु कुटिलगतिमत्ता तदीया सुनिभालनीया। निघण्टुरुपस्थापयति संग्रामार्थकं शब्दम्—'अग्मन्' इति। एतदीयः संग्रामरूपोऽर्थ इङ्गति कुटिलगत्यर्थकताम्। व्यालीढान्तरणे रणे वृजिनगमनं नितान्तमपेक्ष्यते। एवमेव 'अग्र'-शब्दस्योच्च-प्रथमपरिधिरूपा अर्था अवधेयाः। उच्चताप्तये सामान्यजनाऽग्राह्या नतगतिराश्रयणीया भवति। धातोर्गतिमात्रार्थकत्वे सति, गमने=ज्ञाने नूनं प्राथम्येनोच्चता। हिन्दीभाषायाम् √*अगरना अग्रगमनार्थिका, √अगुआना (<अग्रगू-) अग्रकरणार्थिका चेति धातुद्वयी लभ्यते। √अग्-धातोः प्रतिपादितचरा अर्था बोधनीया ऋत उपसर्गयोजनायाः।

---

१. अग्रं पुरस्तादुपरि परिमाणे पलस्य च॥ ३।
आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम्।
अधिके च प्रधाने च प्रथमे चाभिधेयवत्॥ ४। मेदिनी० १२३ पृ० (चौ० सं०)।

२. आ नखाग्रेभ्यः—बृहदारण्यकोप० १, ४, ७।

३. Vergleichendes Wöterbuch der Indogermanischen Sprachen herausgegeben und bearbeitet.

२. § √अर्ह् (अर्ह्) १/७३१ पूजायाम् (प०)। अस्य धातोर्मूले गमनार्थक ऋधातुर्मननोयः। एष ऋग्वेदे भूषण[१]-सामर्थ्य[२]-गमन[३]-कर्षण[४]-दीप्ति[५]-स्वामित्व[६]-पूजनादिष्वर्थेषु[७] प्रयुक्तः। संस्कृतधातुषु हश्रुतिरनेकत्र लभ्यते—√ऋ >अर्+ह्=√अर्ह्; √गृ >गर्+ह्=√गर्ह्; अग्रागमरूपेणापि हश्रुतेरुपलम्भः—√रप्>√ह्रप्; √लप्>√ह्लप्; √लग्>√ह्लग्; √रस्>√ह्रस्; √रेप्>√ह्रेप्; √रेष्>√ह्रेष् इत्यादिषु।

ऋधातोरेव सकाशात् स्वामि-प्रतोद-कर्मठादिवाचका अर्य-आर-आर्यशब्दा[८] व्युत्पद्यन्ते। अयमर्यशब्दः सूर्येश्वरवाचकतां[९] गच्छन् पूजनीयार्थको[१०] जातः। आदौ कर्षणादिरूपार्थेऽस्य प्रसिद्धिः प्रायः सर्वास्वार्यभाषासु। 'नावमरित्रपरणीम्' (१०, १०१, २) इत्यृग्वेदे कर्षणादिरूपोऽर्थः। लैटिनभाषायाम् 'अरतुम्' 'अरात्रुम्' चेति शब्दौ हलवाचकौ। ग्रीकभाषायाम् 'अरात्रोन्' इति। चेकभाषायामस्य रूपमस्ति 'ओरद्लो' इति। इह तकारस्य स्थाने दकारः, रेफस्य स्थाने च लकारो जातः। लिथुआनिया-भाषायां हलवाचकः शब्दः—'अरक्ल्-स्' इति। ब्रिटेनस्य कार्निश्-भाषायाम् 'अरदर्' इति, वेल्सभाषायाम् 'अरद्' इति, नारवेभाषायाम् 'अरध्र्' इति

---

१. अरम्—ऋ० १, ६६, ३=अलम्, भूषणम् (सायणः)।
२. अरम्—ऋ० १, ७०, ३=अलम्, समर्थम् ( ,, )।
३. अररुम्—ऋ० १, १२९, ३=अरणशीलम्, गमनस्वभावम् (सायणः)।
४. नावमरित्रपरणीम्—ऋ० १०, १०१, २=कर्षणादिरूपेणारित्रेण (सायणः)।
अरित्रम्—ऋ० १, ४६, ८=गमनसाधनं नौरूपम् (सायणः)।
अरिता—ऋ० २, ४२, १=कर्णधारः (सायणः)।
,, —ऋ० ९, ९५, २=जनांस्तीरं प्रापयन्नाविकः (सायणः)।
५. अरित्राः—ऋ० १०, ४६, ७=तारकाः (सायणः)।
अर्यपत्नीः—ऋ० ७, ७, ५=अर्यः सूर्यः पतिर्यासां ताः (सायणः)।
६. अर्य—ऋ० ४, १६, १७; ८, १, ३४=स्वामिन्निन्द्र (सायणः)।
७. अर्या—ऋ० १, १२३, १=अरणीया पूजनीया (सायणः)।
८. आर्यन्ति—ऋ० ८, १६, ६=आर्यमभिज्ञमीश्वरं कुर्वन्ति (सायणः)।
आराणाम्—ऋ० ८, २०, १४=आर्याणां स्वामिनाम् (सायणः)।
आर्यः—ऋ० ५, ३४, ६=स्वामी (सायणः)।
आरया—ऋ० ६, ५३, ५=सूक्ष्मलोहाग्रो दण्डः प्रतोद इति आरा इति चाख्यायते तया (सायणः)।
आर्याणि—ऋ० ६, २२, १०=कर्मयुक्तानि (सायणः)।
९. अर्यम्—ऋ० ८, ३३, १४=ईश्वरम् (सायणः)।
आर्यन्ति—ऋ० १०, ४८, ३=अर्यमीश्वरं कुर्वन्ति (सायणः)।
१०. ऋ० १, १२३, १।

च लभ्यते। नारवेभाषायामस्य शब्दस्यार्थो धान्यसंपत्तिरित्यपि जातः, हलकर्षणादिना तदुपलब्धेः। तस्मिन् काले कृषिर्धान्यं च संपत्तेर्मुख्ये साधने अभूताम्। अत एव लैटिनभाषायां धनार्थे व्यवहृतः 'पिक्यूनिआ' इति शब्दोऽपि 'पेकुस् < सं० पशु'-शब्दाल्लब्धजनिः। चिकित्सकेभ्यो वाक्कीलेभ्यश्च दीयमानो द्रव्यराशिः 'फी' (भारतस्थेषु पाश्चात्त्यविद्यालयेषु 'फीस्') इत्यपि 'पिक्यूनिया'-शब्दप्रभवः। अयं 'फी' इति शब्दः प्राचीनाङ्गलभाषायां 'फे' इति, एँग्लो-सैक्सनभाषायां च 'फेओह' इति व्यवह्रियते। एतदर्थोऽपि पशुः संपत्तिश्चेति। गौथिकभाषायामेष 'फइहु' इति रूपेणोपलभ्यते। एतानि सर्वाणि रूपाणि लैटिनभाषायाः 'पेकुस् < सं० पशु'-शब्दजानि। आधुनिकजर्मनभाषायामेष 'फी' (Vieh) इति विद्यते[1]। गमन-कर्षणप्रतोदैः कर्णधारता, स्वामित्वं च प्राप्य पूज्यता।

√अर्ह्-धातोरर्था अपि √ऋधातोरिव दृश्यन्ते। 'सोमानां प्रथमः प्रोतिमर्हसि' इति (१, १३४, ६) ऋग्वेदे प्राप्तिरूपोऽर्थः[2]। गमनम् = प्रापणम्। अर्जनोपयोगो दाने व्यज्यत इति दानार्थो जातस्तदीयः[3]। दानेन प्रशंसां लभते[4]। प्रशंसया योग्यताप्रख्यातिः[5]। तया सामर्थ्यम्[6], सामर्थ्येन च पूजनम्[7]।

---

१. एफ्० मैक्स मूलर : लेक्चर्स् ऑन् दि साइन्स् ऑव् लैंग्वेज्, २९२–२९३ पृ०।

२. सोमानां प्रथमः प्रीतिमर्हसि—ऋ० १, १३४, ६ = प्राप्नोषि (सायणः)।
कलां नार्हन्ति षोडशीम्—मनु० २, ८६ = प्राप्नुवन्ति (मन्वर्थ०)।
स्वामी तद् द्रव्यमर्हति—मनु० ८, ३१ = ग्रहीतुमर्हति (मन्वर्थ०)।
पाणिच्छेदनमर्हति—मनु० ८, २८० = लभते (मन्वर्थ०)।

३. सा इद्वाधूयमर्हति—ऋ० १०, ८५, ३४ = दद्यात् (सायणः)।

४. इमं स्तोममर्हते—ऋ० १, ९४, १। अर्हः प्रशंसायाम् (पा० ३, २, १३३) इति लटः शत्रादेशः।

५. अर्हन्निदं दयसे—ऋ० २, ३३, १०-अर्हन् = अर्हो योग्य एव सन् (सायणः)।
अर्हन्नग्ने—ऋ० ७, १८, २२ = योग्यः (सायणः)।
अग्निरर्हन्—ऋ० २, ३, १; मनसा नो अर्हन्—ऋ० २, ३, ३ = यागयोग्यः सन् (सायणः)।
धर्मान्नो वक्तुमर्हसि—मनु० १, ३ = योग्यो भवसि (मन्वर्थ०)।

६. धासिमर्हामसि—ऋ० ४, ५५, ७ = अर्हामः, समर्था भवामः (सायणः)।

७. पुरोऽग्निनदर्हन्—ऋ० १०, ९९, ७ = पूज्यः सन् (सायणः)।
अर्हन्तश्चिद्यमिन्धते—ऋ० ५, ७, २ = पूज्याः, पूजयन्तो वा सन्तः (सायणः)।
अर्हन्तो ये—ऋ० ५, ५२, ५ = पूज्याः (सायणः)।
ये चार्हन्ति—ऋ० ८, २०, १८ = पूजयन्ति (सायणः)।
द्रष्ट०—ऋ० ५, ८६, ५; १०, ६, ७७; २, २३, १५; १०, ९२, ११।
अर्हयेत् प्रथमं गवा—मनु० ३, ३ = पूजयेत् (मन्वर्थ०)।

अनेकत्र स्थलेषु विशेषपदानां सान्निध्यादप्यर्था भवन्ति विभिन्ना इति ते नावबोधनीयाः शुद्धाः। 'दण्डानर्हन्ति धर्मतः' इति मनौ (२, ४५) दण्डसंयोगेन धारणरूपोऽर्थः प्रकृतधातोर्जायते। नास्ति स्वातन्त्र्येण सोऽर्ह् धातोः।

*भारोपीयभाषायां मूलधातुः 'अल्गुह्' इति। तदर्थस्तु—औचित्यं योग्यता वेति। अवेस्ताभाषायां वैदिकभाषाया हकारो जकारत्वेनोच्चार्यते। तेन तत्र 'अर्हति' इत्यस्य 'अरॅजैति' (Arəjaiti) इति रूपं संपद्यते। तत्र चैष समादरे पूजायां योग्यतायां च प्रयुज्यते। मूल्यार्थकस्य संस्कृतभाषागतस्य 'अर्घ' इति शब्दस्य 'अवेस्ता'-भाषायां तस्मिन्नेवार्थे 'अरॅजह्' (Arəjah) इति व्यवहारः। मुण्डारीभाषायाः प्रार्थनार्थकः 'आर्जि' इति धातुस्तुलामर्हति।

पालिभाषायां द्वौ धातू समधिगम्येते—√अरह् इति √अग्घ् इति च। प्रथमस्य तावद् योग्यतारूपोऽर्थः (सुत्तनिपा० ४३१, ५५२; जात० १, २६२), द्वितीयस्य तु मूल्ययोग्यतार्थः (जात० १, ११२)।

प्राकृतभाषायामपि धातुद्वयी—√अरिह इति, √अग्घ इति च। प्रथमो धातुस्तावद् योग्यतापूजाद्वयार्थकः (महा०; भग०); द्वितीयस्तु योग्यतायाम् (णाया०), उचितमूल्येन विक्रये, समादरे (सुपा०) चेत्यर्थत्रये व्यवह्रियते।

संस्कृतभाषायामपि समुपलम्भोऽर्घधातोः। पाणिनीये संप्रदाये नास्य संप्राप्तिः। वोपदेवः समुदलिखत् कविकल्पद्रुमे। प्रयुक्तोऽयं महाभारतादिग्रन्थेषु—

कलां नार्घन्ति षोडशीम्—महाभार० सभा० ३८, २६ (ईजर्टनसं० पूना-संस्करणम्)।

परीक्षका यत्र न सन्ति देशे नार्घन्ति रत्नानि समुद्रजानि—पञ्चत० १, ८८।

हकारस्य घकारत्वेन विपरिणामे √अर्ह् < √अर्घ् इति। √अंह् > √अङ्घ्, √रंह् > √रङ्घ् इति। लोकेऽपि बहुशो हकारस्य स्थाने घकारध्वनिः श्रूयते सिंहसिंहासनयोः। भारोपीयभाषायामपि कण्ठ्यो वर्णौ दर्शितस्तालव्यतां परामृशन्निति।

३. § √अव् (अव) १/५९६ रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसाऽऽदानभागवृद्धिषु (प)। अस्य धातोरेकोनविंशतिरर्था लभ्यन्ते संस्कृतधातुपाठेषु। ते चेमे—१. रक्षणम्, २. गतिः, ३. कान्तिः=शोभा, ४. प्रीतिः, ५. तृप्तिः, ६. अवगमः, ७. प्रवेशः, ८. श्रवणम्, ९. स्वाम्यर्थः, १०, याचनम्, ११. क्रिया, १२. इच्छा, १३. दीप्तिः, १४. प्राप्तिः, १५. आलिङ्गनम्, १६. हिंसा, १७. आदानम्, १८. भागः, १९. वृद्धिश्चेति। एते क्षीरस्वामि-मैत्रेय-सायण-जैनेन्द्र-शाकटायन-हेमचन्द्राणां मतेन। चान्द्रव्याकरणे तु 'रक्षणे' इत्येक एवार्थो दृश्यते। एवमेव काशकृत्स्नकातन्त्रव्याकरणयोरपि 'पालने' इत्येक एवार्थः। वोपदेवस्य पाणिनीयसंप्रदायाभिमता एवार्थाः। इह कान्तिः=शोभा, द्युतिः=तेजः, स्वाम्यर्थश्च=स्वामित्वम् इति। निघण्टौ (२/८) णिजन्तः 'आवयति' इत्यत्तिकर्मा, अवतिस्तु (२/१४) गतिकर्मा।

आपोऽमृतमौषधं जीवनं च। अद्भिर्विनाऽरक्षणं मरणं च। तदुक्तम् ऋग्वेदे (१, २३, १९) 'अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तये। देवा भवत वाजिनः' इति। अप्सु=जलेषु, अन्तः=मध्ये, अमृतम्=पीयूषं वर्तते। तथा च तैत्तिरीयसंहितायाम् (५, ६, २, १–२) अपि 'अमृतं वा आपः' इत्युदितम्। काशकृत्स्नधातुव्याख्याने (१/२२८ a) √अप् इति, √अप्प् (१.२२८ b) इति च धातू पालनार्थकौ। √अव्व् (१/२२७ d) बन्धने पालने चेति। एवं तावदेतस्य धातोर्मूले प्राणरक्षकः 'अप्' इति शब्दो विज्ञेयः। तत एवान्येऽर्थाः समुन्नीताः। 'आकाशाद् वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी' इति श्रुतेरद्भ्यः सकाशाद् 'अवनिः' जायते। जलस्यानन्तरं सर्वेषां प्राणिनां परिपालिका तावदवनिः। एतावता भूरीणामर्थानां कल्पना शक्यते कर्तुं कामपि दृश्यमानां संज्ञामाधारीकृत्य। क्रियायाः कर्तृनिष्ठत्वात् तन्मूले कर्तृकर्मादिव्यापारप्रभावो नैसर्गिक इति सर्वेषामर्थानां मूले जलवाचकोऽबिति शब्दस्ततश्चावनिः। प्राकृतभाषायां पकारस्य विकासो वकारत्वेन समाश्रूयते। संस्कृतभाषायामपि तादृशी प्रवृत्तिर्नास्ति दुरापा। शुक्लयजुर्वेदे (१४, १) दृश्यते तूपरशब्दः—'अश्वस्तूपरो गोमृगस्ते प्राजापत्याः' इति। 'तूपरः=शृङ्गोत्पत्तिकालेऽतीतेऽपि शृङ्गहीनः' इति महीधरभाष्यम्। तूपरशब्दस्य पकारो लौकिकसंस्कृते विकासमापद्यमानो वकारत्वेनोपलभ्यते। यद्यपि तत्र पकारस्य स्थाने बकारेण भाव्यम्, तथापि वकारस्थानस्य दन्तोष्ठत्वात् तत्र केवलस्यौष्ठस्य प्राधान्येन पकारो वकारत्वेनापि परिणमते। एष एव तूपरशब्दो लौकिकसंस्कृते 'तूवर' इति समासाद्यते[1]।

वेदेष्वयं धातुः प्राधान्येन दृश्यते रक्षणार्थकः[2]। चान्द्रे व्याकरणेऽपि तथा। रक्षणं पालनं स्वाम्यर्थं इत्यनर्थान्तरम्। व्याख्यातं च सायणेन 'यो रायोऽवनिः'—ऋ० १, ४, १० इत्यत्र अवनिः=रक्षकः स्वामी वेति। सर्वेषामेकोनविंशत्यर्थानां मूले रक्षणम्। एतेषु केचन समानार्थकाः। प्रीतितृप्तिशब्दौ तुल्यार्थौ, 'प्रीञ् तर्पणे, तृप प्रीणने' इत्याद्युपलम्भात्। गतिः प्राप्तिः प्रवेशश्च, कान्तिर्द्युतिश्च। यद्यपि व्याख्यातारः कान्तिः=शोभा, द्युतिस्तेज इति भेदं दर्शयन्ति, तथापि 'शोभाकान्तिर्द्युतिश्छविः' इत्यादौ स्थूलतस्तदभिन्नतैव। नास्ति शोभा तेजो विना, शोभया विना च तेजः। सूर्ये तेजोऽपि शोभाऽपि चेति 'अविः' इति तद्वाचकः शब्दः।

---

१. अजातशृङ्गो गौः कालेऽप्यश्मश्रुर्ना च तूवरौ' (अ० को० ३, ३, १६५)।

२. ऋ० १, ३३, १४; १, १०२, ४; ३, ३५, ३; ४, ३२, ४; ५, ५, ९; ७, ४१, ३; १, ४, १०; १, ६१, १०; १, १००, ८; १, १३५, ४; १, १६८, १; १, १८३, ५; १, २५, १९; ५, ८३, ४; १०, १०३, ११; १०, १०७, ११; २, ४०, ५; १, ३४, ५; १, १०९, ७; ८; ५, ४०, ७; ७, ८३, ५; ८, ८, २०; ८, ५७, ४; ८, ५९, ३; १, ३१, ८; १, ४७, ५; १, ११७, २३; १, १८१, ७; ७, ८३, १; ८, ८, २१; ८, ८५, ९; ८, ३५, ११; शब्रा० १, ६, ३, ३७; काब्रा० १, ६, १, २।

संपूर्णा व्यापारा अस्य धातोर्विवृता अपां पृथिव्याश्च सकाशादितीतोऽपि भूयिष्ठाः शक्यन्ते विवरीतुम्। वैयाकरणसिद्धान्तकौमुद्यास्तत्त्वबोधिनीटीकाकारो ज्ञानेन्द्र-सरस्वती "आदानम्=ग्रहणम्, न चात्र दानमेवार्थोऽस्त्विति वाच्यम्, 'भागे वृद्धौ ग्रहे वधे' इत्येवमर्थानां विशिष्य वोपदेवेन गणितत्वात्" इत्यभिधाय धातोरस्य दानार्थं प्रत्यादिशत्। ऋग्वेदे (१, १८१, १) लभ्यते दानार्थः—'अवितारा जनानाम्'='दातारौ' इति सायणः। महाभाष्यकारात् परवर्तिनो लक्षणैकचक्षुष्का वैयाकरणा लक्ष्यानुसन्धानमन्तरा कल्पनाकोटिमाटीकमाना व्यस्मार्षुर्वेदादींल्लक्ष्य-ग्रन्थान् इति जाता गतिस्तेषां वोपदेवपर्यन्ता।

वेदेषु चत्वारोऽर्था अधिकाः सन्ति—१. स्वीकृतिः[1], २. वर्त्तनम्[2], ३. प्रेक्षणम्[3], ४. भक्षणम्[4], (५. दानं[5] च) इति। अस्यैकोनविंशतिरूपेष्वर्थेषु केवलं पञ्चानाम् अर्थानां नोपलम्भः संस्कृतवाङ्मये। ते च—१. याचनम्, २. क्रिया, ३. इच्छा, ४. आलिङ्गनम्, ५. भागश्च। अवशिष्टानामर्थानां प्रयोगा एवं ज्ञेयाः—

१. रक्षणे—'अस्माकं वीरा उत्तरे भवन्त्वस्माँ उ देवा अवता हवेषु'–ऋ० १०, ११, १०३=रक्षत [सा०]।

२. गतौ—'अथ स्मा न उदवता'–ऋ० २, ३१, २=उदगमयत्। अवतिरत्र गत्यर्थः [सा०]। 'गाव उपावतावतम्'–ऋ० ८, ७२, १२=उपागच्छत् [सा०]।

३. कान्तौ=शोभायाम्, दीप्तौ—अविः=सूर्यः (अ० को० ३, ३, २०७)।

४. प्रीतौ—'सक्षदवसे महे मित्रं नावसे'—ऋ० १, १२९, १०=त्वत्प्रीतये [सा०]। 'प्रावन्तु जूतये विशः'—ऋ० १, १२७, २=प्रकर्षेण प्रीणयन्तु [सा०]।

५. तृप्तौ—'हवतेऽवसे हविष्मान्'—ऋ० १, १८३, ५=रक्षणाय युष्मत्तर्पणाय वा [सा०]; 'अवन्नवन्तीः'—ऋ० ७, ४६, २=स्तोत्रैस्तर्पयन्तीः [सा०]; १, १८५, ४; १, १५, २, ६; 'अस्माकमविता भव'—ऋ० १, १८७, २=तर्पयिता [सा०]; १, १८७, ७।

६. अवगमे—गतिः प्राप्तिर्ज्ञानम्। प्राकृतभाषायां (विसे० ८३) 'अवण'= ज्ञानमनुभवो वा।

७. प्रवेशे—प्रवेशो गत्यर्थकः। देशवाडीप्राकृतभाषायाः प्रसङ्गपारिजातनामके ग्रन्थे 'आलार अव्वम जन्ठरा' (३/७) अव्वम=प्रविष्टः।

८. श्रवणे—'अग्नीपर्जन्याववतं धियम्'—ऋ० ६, ५२, १६=शृणुतम् [सा०]। 'शंसं नासत्यावतं मम'—ऋ० १, १८२, ४—शंसम्=स्तुतिम्, अवतम्=रक्षतम् [सा०]। 'शृणुतम्' इति वागीशः।

---

१. दाश्वयवसेऽग्नये दाश्वयवसे—ऋ० १, १२७, ४=स्वीकाराय [सा०]।
२. प्राव—ऋ० १, १०२, ३=प्रेरय, वर्तय [सा०]।
३. आवयः—ऋ० ८, ४५, ४८=दृश्यमानाः [सा०]।
४. जम्भैस्तृष्वन्नमावयत्—ऋ० १०, ११४, ८=अभक्षयत्। आवयतिरत्तिकर्मा [सा०]।
५. अवितारा जनानाम्—ऋ० १, १८१, १=दातारौ [सा०]।

९. स्वाम्यर्थे—'यो रायो ऽवनिः'–ऋ० १, ४, १०=स्वामी [सा०]।

१०. दीप्तौ (द्र० कान्तौ)।

११. अवाप्तौ—'अन्या वो अन्यामवतु'–ऋ० १०, ९७, १४=प्राप्नोतु [सा०]

१२. हिंसायाम्—'जम्भैस्तृष्वन्नमावयत्'–ऋ० १०, ११४, ८=अभक्षयत्। आवयतिरत्तिकर्मा [सा०]। भक्षिश्च हिंसार्थको भवति—'भक्षेरहिंसार्थस्य न' (वा)।

१३. आदाने—आदानम्=ग्रहणम्। भक्षणस्य ग्रहणार्थोऽपि। अत एव शास्त्री विश्वबन्धुर्लिखति—'ग्रहणादनप्रकारक–' इति (वै० प० को०)।

(ख) दाने—'अवितारा जनानाम्'—ऋ० १, १८१, १=दातारौ [सा०]।

१४. वृद्धौ—'उदवा'–ऋ० ७, ४१, ३=फलयुक्तां कुरु [सा०]।

अवोपसर्गः प्राकाश्यार्थक आविश्चापि धातोरस्यार्थं प्रकटयतः। अवोपसर्गो दुर्गादासानुसारेण त्रिष्वर्थेषु—१. निश्चयः, २. असाकल्यम्, ३. अनादरश्चेति। शब्दरत्नावल्यनुसारेणाष्टस्वर्थेषु—१. आलम्बनम्, २. विज्ञापनम्, ३. व्यापनम्, ४. शुद्धिः, ५. अल्पम्, ६. परिभवः, ७. नियोगः, ८. पालनं चेति। नगर्या नाम्न्यपि प्रयोगोऽस्याः—अवन्तिः, अवन्तिका, अवन्ती वेति।

अवनिशब्दो विशेषणवचनः संज्ञावचनश्च। संज्ञायां पृथिवीवाचकः, जलवाचकः, अङ्गुलिवाचकश्च—१. 'यत्सीं महीमवनिम्'–ऋ० १, १४०, ५=भूमिम् [सा०]। २. 'गा न व्राणा अवनीः' ऋ० १, ६१, १०=रक्षणहेतुभूता अपः [सा०]। 'सनात् सनीळा अवनीः'–ऋ० १, ६२, १०=अङ्गुलयः। अवनयोऽङ्गुल्यो भवन्त्यवन्तिकर्माणि [निरु० ३,९]। विशेषणं यथा—'यो रायोऽवनिः'–ऋ० १, ४, १०=रक्षकः स्वामी वा [सा०]।

सान्तोऽवस्-शब्दोऽपि दृश्यत ऋग्वेदे प्रीति-गमन-रक्षण-तृप्ति-स्वीकृत्यन्नवचनः। प्रीतौ–'सक्षदवसे महे मित्रं नावसे'–ऋ० १, १२९, १०=त्वत्प्रीतये [सा०]। गमने–'वक्षदवसे'–ऋ० १, १३५, ४=गमनाय रक्षणाय वा [सा०]। रक्षणे—'त्वामवस्युरा चक्रे'–ऋ० १, २५, १९=रक्षणेच्छुः [सा०]। तृप्तौ—'हवतेऽवसे हविष्मान्'–ऋ० १, १८३, ५=रक्षणाय युष्मत्तर्पणाय वा [सा०]। स्वीकृतौ—'दाष्ट्यवसेऽग्नये दाष्ट्यवसे'–ऋ० १, १२७, ४=स्वीकाराय [सा०]। अन्ने—'जुहूरेऽवसे महि'–ऋ० १, ४८, १४='अवः' इत्यन्ननाम। अवसे=अन्नाय [सा०]।

अविशब्दस्य सूर्यार्थमतिरिच्य कूप-शैल-मूषिक-वायु-कम्बल-प्रकारार्था मननीयाः। कूपस्यानेकेऽर्था भवितुं शक्नुवन्ति—खननम्, अधिकारः (स्वाम्यर्थः), आधारः, प्रवेश इत्यादयः। एवमेव शैल-मूषिक-वायु-कम्बल-प्राकाराणामपि व्यापारान् अभिलक्ष्य तादृशा अर्था विज्ञेयाः। अविकाशब्द ऋग्वेदे मेषवाचको वा योनिवाचको वा—'गान्धारीणामिवाविका'–ऋ० १, १२७, ७=अवयो मेषाः। यद्वा 'अविका'=अत्यर्थं तर्पयन्ती योनिरिव [सा०]।

भारोपीयभाषायां मूलधातुरस्ति—अउ्=श्रवणे, रक्षणे, अवधाने च। पुरातन-चर्चस्लावोनिकभाषायाम् 'उम' इति शब्दो ज्ञान-(निर्णय)-रूपार्थकः। लैतिन—अवुस्=पितामहः। तुलनीयः संस्कृतभाषामयो नाट्योक्तौ पितृवाचक आवुकशब्दः।

४. § √आप् (आप्लृ) ५/१४ व्याप्तौ (प०)। अस्य धातोर्मूले संनिविष्टोऽन्तरिक्षवाचकोऽपशब्दः, जलवाचकोऽप्शब्दश्च[1]। वियद आपश्च व्याप्नुवन्ति विश्वमिति ता व्याप्त्यर्थिकाः। यद्यपां व्यापाराः सन्ति भूयिष्ठाः पालन-तृप्त्यानन्दगतिप्रभृतयः, तथापि पाणिनिनेह जलस्य व्याप्तिरूपोऽर्थो[2] मुख्यतो गृहीतः।

जलस्य गत्यर्थकतारूपं व्यापारमभिलक्ष्य धातुरेष प्रापणे प्रयुज्यते। ऋग्वेदे (९, ११४, ११) 'यत्राप्ताः कामाः' इत्यत्र प्राप्त्यर्थकः√आप्-धातुः[3]। धनस्य प्रापयितारो बन्धवो भवन्तीति तस्मिन्नर्थे वेदात् प्रभृति प्रयुक्तोऽयम्[4]। ऋग्वेदे (२, २९ ४) इत्यत्र 'हये देवा यूयमिदापयः' इति मन्त्रव्याख्यायां सायणो लिखति—'धनस्य प्रापयितारो बन्धवः' इति। तत्रायं शब्दः पुत्रार्थको[5] मित्रार्थकश्चापि[6]। मनुस्मृतौ (८, ६४) 'नार्थसम्बन्धिनो नाप्ताः' इत्यत्र 'आप्त'-शब्दो मित्रार्थकः[7]। पुत्रा मित्राणि वा खलु पालयन्त्याज्ञामिति तत्राज्ञार्थकोऽपि—'पुरुषैराप्तकारिभिः' (९, १२)। मनुष्यैः सह बन्धुत्वे[8] यथार्थदर्शिता यथार्थवादिता वा नातिक्रामति मनुष्यमित्याप्तशब्दो दृश्यते

---

१. द्रष्टव्य उभयोः संक्रमः—'आप्त्यः'–ऋ० १, १०५, ९=अपां पुत्रः [सा:०]; पनित आप्त्यो यजतः—ऋ० ५, ४१, ९=आप्तव्यः [सा०]; आप्त्यो अभ्ययुध्यत्—ऋ० १०, ८, ८=आप्त्यस्य पुत्रोऽपां पुत्रो वा [सा०]। य उस्रिया अप्याः—ऋ० ९, १०८, ६= अप इत्यन्तरिक्षनाम।

२. आप—ऋ० १, १२२, ९=व्याप्नोति [सा०]। एमेनमाप—ऋ० १०, ३२, ८= आभिमुख्येन व्याप्नोति [सा०]। बोध्यापिरवसो नूतनस्य—ऋ० ३, ५१, ६=व्याप्तः [सा०]; नासुष्वेरापिर्न सखा न जामयः—ऋ० ४, २५, ६=व्याप्तः [सा०]। द्रष्ट० १०, ११४, ७; १, १३२, २।

३. सद्य आप—ऋ० ४, ५१, ७। द्रष्ट० ४, १, ९; ४, २३, २; ५, ४२, ६; ७, ९९, २। आपिः पिता प्रमतिः—ऋ० १, ३१, १६=प्रापणीयः [सा०]।

४. पृणन्नापिः—ऋ० १०, ११७, ७=बन्धुः [सा०]; ८, ४५, १८; पितापिर्यजत्यापये—ऋ० १, २६, ३=आपिः=बन्धुः, आपये=बन्धवे [सा०]; ६, २१, ८; ८, २०, २२; ८, २१, १३; ८; ६, ४४, १०; ६, ४५, १७। [आप्तः शक्तोऽर्थदः—मनु० २, १०९= बान्धवः (मन्वर्थं०)]।

५. य आपिर्नित्यो वरुण प्रियः—ऋ० ७, ८८, ६=बन्धुः। औरसः पुत्र इत्यर्थः [सा०]।

६. आपिः—ऋ० ३, ५१, ९=सखा [सा०]।

७. कुर्वन्तो हवमाप्तानाम्—भट्टि० ७, ६१=स्निग्धानाम् [जय०]।

८. परावतो ये दिधिषन्त आप्यम्—ऋ० १०, ६३, १=ज्ञातेयम्=मनुष्यैः सह बन्धुत्वम् [सा०]।

तदर्थकः[1]। यथार्थदर्शने दक्षता[2]। अप्सु रक्षणशीलतायाः सत्त्वात् क्वचिदयं धातुर्लभ्यते पालनार्थे। यथा मनुस्मृतौ—

**स्वायम्भुवाद्याः सप्तैते मनवो भूरितेजसः।**
**स्वे स्वेऽन्तरे सर्वमिदमुत्पाद्यापुश्चराचरम्॥ १, ६३।**

यद्यपि रघुवंशे (५, ४) 'यतस्त्वया ज्ञानमशेषमाप्तम्' इत्यत्र मल्लिनाथेन 'प्राप्तम्=स्वीकृतम्' इत्यर्थो लिखित आप्धातोः, तथापि नायं साक्षाद् धात्वर्थः, किन्तु तात्पर्यार्थो वेदितव्यः। मनुस्मृतौ (१, १५६) 'आचारादीप्सिताः प्रजाः' इत्यत्र कुल्लूकभट्टेन 'ईप्सिताः' इत्यस्यार्थो विहितः 'अभिमताः' इति। वस्तुतोऽस्मिन्नुदाहरणे धात्वर्थः प्रत्ययार्थेनाभिभूतोऽस्ति। सन्-प्रत्ययस्येच्छार्थ एवेह व्यक्तः। ऋग्वेदे (१, २४, ६) बलार्थेऽपि प्रयोगः—'नेमा आपो अनिमिषं चरन्तीः'=बलम् [सायणः]।

एवं तावदेष धातुः सप्तस्वर्थेषु लक्ष्यते प्रयुज्यमानः—१. व्याप्तौ, २. प्राप्तौ, ३. बन्धुत्वे, ४. यथार्थदर्शितायां यथार्थवादितायां वा, ५. दक्षतायाम्, ६. पालने, ७. बले चेति। भारोपीयभाषायामस्ति मूलधातुः √अप्=प्राप्तौ; उपस्थितौ; √एप् प्राप्तौ, उपस्थितौ, ग्रहणे चेति। अवेस्ताभाषायाम्—अपयेइति=आपयति—वाल्देपाकर्नीः। आपयंतहे—अवेस्ता (यस्न ९, ३१)=आपयतः। आयप्तम्—अवेस्ता (यस्न ९, ३)= आप्तम्।

५. § √आस् (आस) २/११ उपवेशने (आ)। गतिनिवृत्त्यर्थकस्य स्था-धातोरर्थात् स्तोकमान्तर्यम्। 'तत्रासीनः स्थितो वापि' इति। मनुस्मृतेः (८, २) उदाहरणेन तत्स्पष्टता 'आसीनः' इत्यस्यार्थः 'उपविष्टः' इति (मन्वर्थः)। इह 'आसीनः' इति पदेन 'उपवेशनम्', 'स्थितः' इति पदेन च गतिनिरोध उत्थानावस्थेत्यर्थः। भट्टिकाव्ये (८, ९३) 'आसाञ्चक्रे दशाननम्' इत्यत्र, आख्यातचन्द्रिकायाम् (१, १, ५) 'आस्ते' इत्यत्र च √आस्-धातोरर्थो गतिनिवृत्तिः।

उपवेशनं निर्व्यापाराद् उपेक्षासूचकम्—'यानमासनमेव च' (मनु० ७, १६०) उपेक्षणम् (मन्वर्थ०)। गतिनिवृत्तावपि तथा। गीतायां स्तब्धशब्देन गर्वोऽभिव्यज्यते (१६, १७)। आपूर्वकस्थाधातोः 'था' इति वर्णविगमेन √आस्-धातोः कल्पना, अस्योपवेशनार्थेन सह स्थित्यर्थस्यापि सत्त्वात्। आ+√'स्था' √आस्[3] 'आ+√सद्' इत्येषां ध्वनिग्रामा विवेचनीयाः। आपूर्वकसद्-धातोरप्युपवेशनमर्थः—'आ वो वहन्तु सीदता'—ऋ० १, ८५, ६=उपविशत (सा०)।

एतस्य सप्तस्वर्थेषु दृश्यते प्रयोगः। ऋग्वेदे (७, ५५, ६; ९, २५, ४; १०, १७, ४; १, ४८, ६; १०, २५, २; १०, ६५, ७) १. गतिनिवृत्तिरर्थः। तत्रैव (७,

---

१. 'रघुराप्तैः समियाय योगिभिः'—रघु० ८, १७—आप्ताः=यथार्थदर्शिनो यथार्थवादिनश्च [संजी०]। 'हिंस्रेषु दीप्तास्त्रधनुः कुमारः'—भट्टि० १, २४=अविसंवादि [जय०]।

२. प्राजकश्चेद् भवेदाप्तः—मनु० ८, २९४=कुशलः [मन्व०]।

३. तुलनीय आस्धातोर्वर्तनरूपोऽर्थः (ऋ. १, १०५, ११)।

३२, २; १०; ६३, १; ९, १०, ७) २. उपवेशनमर्थः। ऋग्वेदे (१०, २१, ३) 'त्वे धर्माण आसते' इत्यत्र ३. सेवनार्थ उपासनार्थो वा धर्मशब्दसंनिधानकारणात्। 'यत्रामृतास आसते' (ऋ० ९, १५, २) इत्यत्र (ऋ० २, १३, ४) इत्यत्र च ४. निवासरूपोऽर्थो विहितः सायणेन। 'सुपर्णा एत आसते' (ऋ० १, १०५, ११) इत्यत्र ५. वर्तनमर्थः, गतिनिवृत्त्याद्यर्थस्य सत्तार्थतोऽभिन्नत्वात्। तत्रैव (३, ४, ११) ६. आश्रयरूपोऽर्थोऽपि। ७. मनु० (७, १६०) उपेक्षणम्।

भारोपीयभाषायां सेद, *ए_-स् इति धातू उपवेशनार्थकौ सूचितौ। ग्रीक्-भाषायाम् 'एँस्तै' (=उपविशति) इति, होम० 'एइति' (=उपविशति), इति च। अवेस्ताभाषायाम् 'अंहॅन्ते (= आसते) इति, आङ्हते (<आस्ते) इति च—यस्न ९, २२। पालिभाषायामयम् √अच्छ्-रूपेणोपलभ्यत इति 'अच्छति' (विनय० १, २८९) प्रयोगो विज्ञेयः। प्राकृतभाषायां तु 'आस' (पि० ५७८) इति, 'अच्छ' (णाया० १, १) इति चोभे सुरक्षिते प्रकृती। भारतीयासु भाषासु प्रायः' स> छ्' इति, ईरानीयभाषासु च (स्> ह्) इति विकासो लक्ष्यते।

६. § √इ (इण्) २/३४ गतौ (प)। सर्वेषु सकर्मकधातुषु लक्ष्यते गति-रशनहरणकरणादिषु, ध्यानस्मरणादिष्वपि सा मानसी। आगमननिर्गमनोर्ध्वगमना-दीनि गतिविशेषाः। गतिरित्ति सामान्योऽर्थः। सामान्यानाम् अर्थानां विशेषोऽर्थो नाम—'अर्थापकर्षः'। विशेषाणामर्थानां सामान्यमर्थं प्रति संक्रमो नाम—'अर्थोत्कर्षः'। ऋग्वेदे (२, ३६, ६) 'नम एत्यावृतम्' इत्यत्र १. गमनमर्थः। 'पुरस्तादेति मायया' (ऋ० ३, २७, ७) इत्यत्र २. आगमनमर्थः (तुल० ४, २२, १)। 'त्वदेति द्रविणं वीरपेशा' (ऋ० ४, ११, ३) इत्यत्र 'त्वत्' (=त्वत्तः) इति पदसंनिधानेन 'एति' इत्यस्य ३. 'निर्गच्छति' इत्यर्थः। तात्पर्यार्थं च कल्पयति सायणः—'उत्पद्यत इत्यर्थः' इति। एवं तावन्निर्गमनं नामोत्पत्तिः। भट्टिकाव्ये (११, १७) 'दुःखेन लोकः परवानिवागात् समुत्सुकः स्वप्ननिकेतनेभ्यः' इत्यत्रापि 'निकेतनेभ्यः' इति पञ्चम्यन्त-पदोपस्थितेः 'अगात्' इत्यस्यार्थः 'निर्गतवान्' इति (जय०) (तुल० ऋ० १, १००, ३)। 'अर्यो विशां गातुरेति' (ऋ० १०, २०, ४) इत्यत्र ४. ऊर्ध्वगमनमर्थः, गातोर्गमनशीलस्याग्नेरूर्ध्वगमनशीलत्वात्। अत एव 'तनूनपात्' इति, 'शिखावान्' इति च नामनी। 'वधूरियं पतिमिच्छन्त्येति' (ऋ० ५, ३७, ३) इत्यत्र ५. 'अनुगमनमर्थः, पत्न्याः पत्युरनुगमनशीलत्वात्। शिष्यो गुरोरनुगमनशील इति भट्टिकाव्ये (६, ५५) 'इत्यः शिष्येण गुरुवत्' इतीहाप्यनुगमनमर्थः (द्रष्ट० जय०)। मनुस्मृतौ (१२, २२) 'तान्येव पञ्च भूतानि पुनरप्येति भागशः' इत्यत्र ६. अधिष्ठानमर्थः, जीवस्य तत्राधिकरणपूर्वकं स्थितत्वात्। ये ये धातवो गत्यर्थास्ते ते प्राप्त्यर्थाः, ऋग्वेदे (६, ४७, ११) 'वितर्तुराणो अपरेभिरेति' इत्यत्र ७. प्राप्त्यर्थः 'अपरेभिः' इति संनिधानेन, अपरेभिः=अपरैः सख्यं प्राप्नोतीति प्रसङ्गात्। भट्टिकाव्ये (१०, ५८) 'जलनिधिमीयुरतः समेत्य मायाम्' इतीह ८. ज्ञानमर्थः, सर्वे गत्यर्था ज्ञानार्था इति जयमङ्गलः। तत्र तत्र पदार्थेषु बुद्धेर्गतिर्भवति ज्ञानम्। एतेषु सर्वेष्वष्टस्वर्थेषु

धातुः स्वकीयं सामान्यमर्थं न जहाति। ऋग्वेदे (४, ५०, ८) 'तस्मै विशः स्वयमेवा नमन्ते यस्मिन् ब्रह्मा राजनि पूर्व एति' इत्यत्र सायणेन 'एति' इत्यस्य ९. 'वर्तते' इत्यर्थः कृतः, 'यस्मिन् राजनि ब्रह्मा वर्तते' इत्यस्यैवौचित्यात्। एवमेव प्रसङ्गतोऽन्येऽप्यर्था ऊहनीयाः। अनुयुञ्जानेन सह गत्यर्थकधातौ[1] प्रयुक्ते सति तस्याभिगमनमेवार्थः[2], पृच्छतः संमुखं स्थितेरुचितत्वात्, पृष्ठादिदेशस्थस्य पृच्छां कुर्वाणस्य शिष्टाननुगृहीतत्वात् (मनु० २, १९५)।

यूरोपीयभाषासु ईरानीयभाषायां चैष धातुर्गमनार्थक एव। *एइ्=गमने। लिथुआनी—'एइमि (एइनु)। अवेस्ता—अएइति, पु० पर्सि०—ऐतिय्=गमने। ई√ √अय्, √अज्, √या इत्येते चत्वारो धातव इधातुमभिसंबध्नन्ति।

७. § √इन्ध् (ञिइन्धी) ७/११ दीप्तौ (प)। यद्यपि √इन्द् (इदि) परमैश्वर्ये, √इन्ध्, √एध् चेत्येतेषां त्रयाणां धातूनां मिथो विकासरेखा सुस्पष्टा, तथापि √इन्ध् √एध् इत्यनयोः शाब्दिकम् आर्थिकं च संक्रमणं मननीयम्, √इन्ध् धातोर्वर्धनार्थेऽपि प्रयुक्तत्वात्। ऋग्वेदे (८, ७४, ४) 'इध्यते' इत्यस्य स्थाने 'एधते' इति पाठभेदोऽपि दृश्यते। माध्यन्दिनसंहितायां (२०, २३) सान्तः 'एधः' इति शब्दो लभ्यते (तुल० मैसं० १, ३, ३९; तैसं० १, ४, ४५, ३; शौसं० ७, ९४, ४)। अस्मिन्नेधश्शब्दे वृद्ध्यर्थकस्य √एध्-धातोः संक्रान्तिः सुस्पष्टा। करणेऽसुन् (उणा० ४, १८९)। इह पाणिनीयेन केनचित् सूत्रेण √इन्ध्-धातुगस्य नकारस्य लोपो न शक्यते कर्तुमित्यगत्या तल्लोपो निपातनात् क्रियते। पद्धतिरेषाऽपि नैधश्शब्दं निसर्गतः √इन्ध्-धातोर्व्युत्पाद्यमानं बोधयति। दीप्त्यर्थकत्वादेष शब्दो हठाद् √इन्ध्-धातुना सह संबध्यते। भानुजिदीक्षितेन त्वयमेध्-धातुतो व्युत्पादितः। तेनेदमेव तथ्यमभिलक्ष्य तादृशं व्युत्पादितम् आहोस्विद् (√इन्ध्—बाहुलकाद् नलोपो गुणश्च) इति रायमुकुटकृतपदचन्द्रिकागतवचनस्य प्रत्याख्यानतत्परतायां प्रयासोऽयमनुष्ठितः स्यादिति नैतदर्निविवादम्। 'वध्यस्य देहे स्वयमेधितश्चेत्' (भट्टि० १२, २४) इत्यत्र णिचि नकारस्य लोपत्वादेध्-धातो रूपस्य प्रतीतिः। 'अग्निरेधितः' इत्यस्य अग्निर्वर्धितः' इत्यर्थकरणेनापि नासङ्गतिः, दीप्त्यर्थस्य प्रसङ्गतो लभ्यत्वात्। भट्टिकाव्ये (६, ३७) 'समिन्धानोऽस्त्रकौशलम्' इत्यत्र जयमङ्गलेन सुस्पष्टं १. 'संवर्धयन्' इत्यर्थः कृतः। ऋग्वेदे सर्वत्र २. दीप्त्यर्थकोऽयं धातुः (तुल० १, ४४, ८; ३, १३, ५; २, २५, १०; ४, ८, ५; ६, २, ३; ७, ८, १; १०, १२८, १)।

---

१. डॉ० स्मिथः सर्वानिव ग्रीकशब्दान् 'ए' इत्यस्माद् धातोर्व्युत्पादयति, सर्वान् लैटिनशब्दांश्च 'हि' इत्यस्माद् धातोः। द्रष्ट० एफ्० मैक्स् मूलर : दी लेक्चर्स ऑन् दि साइन्स् ऑव् लैंग्वेज् (प्रथमभागः) ४४२ पृष्ठ०।

२. यं सूरिरर्थी पृच्छमान एति—ऋ० ७, १, २३=अभिगच्छति [सा०]।

८. § इष् (¹इष) ६/७२ इच्छायाम् (प)। इह धातौ 'इण् गतौ' इत्ययं संनिविष्टो धातुरिति दैवादिक इषधातुर्गत्यर्थकः। ये ये गत्यर्थास्ते ते ज्ञानार्था इतीहेच्छार्थके धातौ ज्ञानेच्छाक्रियाणां कामं समन्वयः। गतिः=प्राप्तिः। ऋग्वेदे (१०, १७७, १) 'मरीचीनां पदमिच्छन्ति वेधसः' इत्यत्र 'मरीचीनां पदं तदुपासनया प्राप्नुवन्ति' इत्यर्थं इतीहेच्छा नाम १. प्राप्तिः। मनुस्मृतौ (१२, ३६)—

**येनास्मिन् कर्मणा लोके ख्यातिमिच्छति पुष्कलाम्।**
**न च शोचत्यसंपत्तौ तद् विज्ञेयं तु राजसम्॥**

इत्यत्रापीच्छा नाम प्राप्तिः। ऋग्वेदे (१, १०९, १) 'मनसा वस्य इच्छन्' इत्यत्र २. कामनार्थः[2] (तुल० ऋ० ५, ३०, ७; मासं० ३४, १८; तैसं० १, ६, ७, ३; जैसं० ३, ७, ९)। प्रार्थनाऽप्यभिलाष एव। ऋग्वेदे (१०, १०८, १) 'किमिच्छन्ती सरमा' इत्यत्र ३. प्रार्थनारूपोऽर्थः। प्रार्थनोत्तरं याचनोत्तरं वा दानस्य स्वीकारः। 'आम्' 'ओम्' 'बाढम्' वेत्यादिरूपेणाभ्युपगमे निश्चयोऽपि क्रियाऽपि च। यथा 'इच्छ स्नेहेन दीव्यन्ती'—(भट्टि० ७, ७८)=४ अङ्गीकुरु (जय०)। 'वि तिष्ठध्वं मरुतो विक्ष्विच्छत' (ऋ० ७, १०४, १) इत्यत्र सायणे ५. 'अन्विच्छत' इत्यर्थो विहितः (तुल० ५, ३०, १; २; ७, ९८, १)। अन्विच्छा तु चतुर्ष्वर्थेषु दृश्यते—(क) उद्यमः (मनु० ४, १३७), (ख) निश्चयः (मनु० ८, १८७), (ग) निरूपणम् (मनु० ८, १९०), (घ) करणम् अनुष्ठानं[3] वा (मनु० १०, ५३; गीता० २, ४८)। इत्थं चैष धातुर्ज्ञानेच्छाक्रियासु पर्यवसितः।

इच्छति-गच्छति-पृच्छति-यच्छत्यादिगतं 'च्छ'-वर्णव्रजं मन्यन्ते भाषातत्त्वविदः स्वतन्त्रप्रत्ययम्। तं तु ते 'स्को'-रूपेणोपस्थापयन्ति। इह प्रत्यये ककारस्तालव्यो न तु कण्ठ्यः। पुरातनबल्गारिया-भाषायां संस्कृतभाषाया इच्छतिः 'इस्कति'-रूपेण दृश्यते प्रयुज्यमानः। अवेस्ताभाषायां तु 'च्छ' इति नावलोक्यते—'इसैति'=इच्छति [इसैति=अन्विष्यति]। पालिभाषायां [धातुमञ्जरी ४६०, सद्दनीति ८७२] लक्षण-ग्रन्थानुसारेण 'इच्छति' इत्यस्य स्थाने 'इस्सति' इत्यस्यापि प्रयोगः (तुल० अवेस्ता-भाषायाः 'इसैति') इति।

९. § √ईक्ष् (ईक्ष) १/६०५ दर्शने (आ)। इह गत्यर्थकस्य √ई १/३१७ इत्यस्य, गतिहिंसादर्शनार्थकस्य च √ईष् (ईष) १/६०६ इति धातोर्लक्ष्यते संक्रमः।

---

१. इहोदितपाठो न समीचीनः, 'तीषसहलुभरुषरिषः' (पा० अ० ७, २, ४८) इत्यत्र विकल्पात् 'यस्य विभाषा' (७, २, १५) इत्यनेन 'क्ते' इडभावः सिद्ध एव। द्रष्ट० तीषसहेत्यत्र महाभाष्ये प्रदीपोद्द्योतः।

२ 'तेषामिष्टानि विहितानि धामशः' (ऋ० १, १६४, १५) इत्यत्रेष्टशब्दस्याभिमतमर्थः। इह √यज्–धातोः क्ते प्रत्यये निष्पन्नस्य 'इष्ट'-शब्दस्यार्थस्य च संक्रान्तिर्ध्यानीया (तुल० ऋ० १, १६२, १५ 'इष्टं वीतमभिगूर्तम्')।

३. 'बुद्धौ शरणमन्विच्छ'—गी० २, ४८=प्रार्थयस्व (शां० भा०), अनुतिष्ठ (श्री० व्या०)।

१. दर्शनम्[1] = ज्ञानम् । 'दृशेश्च' इति वार्त्तिके सुस्पष्टमिदम् । 'नेता चेत् साधु पश्यति' इत्यत्र मनुस्मृतौ (७, २५) ज्ञानमर्थो दर्शनस्य । 'एकान्ते पश्य भगवन्' (वा० रा० २, ५४, २६) इत्यत्र 'ज्ञात्वा निर्दिश' इति तिलकटोका (तुल० महाभारते १२, १३, ११; १३, १९, ९६) । ज्ञानानन्तरमिच्छा संकल्पो वा 'ईक्षतेर्नाशब्दम्' (ब्र० सू० १, १, ५) इत्यत्र, छान्दोग्योपनिषदि च तन्मूलम्—'तदैक्षत बहु स्यां प्रजायेयेति'—(६, २, ३) । वाल्मीकीयरामायणेऽपि वाञ्छार्थः—

**तत्त्वेतत् समतिक्रम्य निरयं गन्तुमिच्छसि ।**
**मैथिलीमपि या हि त्वमीक्षसे चीरवासिनीम्** ॥ २, ३८, ११ ।

इह तिलकटीकायां 'वाञ्छसि' इत्याकूतम् । दर्शनस्य ३. पर्यालोचनमप्यर्थः (द्र० महाभारते ४, ७, १६; १२, १७९, १० नील०) । 'राधीक्ष्योर्यस्य विप्रश्नः' (पा० अ० १, ४, ३९) इति पाणिनीये सूत्रे शुभाशुभं पर्यालोचयतीत्यर्थः काशिकायाम् । दर्शनं नाम ४. सामर्थ्यम् ऐश्वर्यं वा । सायणेन 'ईक्षे हि वस्व उभयस्य राजन्' इत्यत्रर्ग्वेदीये मन्त्रे 'ईशिसे' इत्यर्थो व्यधायि ।

भारोपीयभाषायां मूलधातुः √'ऑक्'=दर्शने । ऑक्-स्=अक्षि । तत्र 'अक्षि'-शब्दोऽस्य धातोर्मूले दर्शितः । अवेस्ताभाषायाम् 'अशि'=अक्षि (तुल० लिथुआ०—अकि, पुरा० बुल्गा०—ओसि, अर्मे०—अस्-क्' इति, ग्रीक—'ओस्सि' इति) । तुल० अवे० ऐवि-आक्स्शयेइन्ति (<ईक्षयन्ति), ऐवि-आक्स्श्तर (<ईक्षितर्) । 'अक्' इत्यस्य द्वित्वप्रवृत्त्या धातुरेष इति जूलियसपाकर्नीः (७७६ पृ०) ।

१०. § √ईर् (ईर) २/८ गतौ कम्पने च (आ) । √ईड्, √ईर्, √ईश्-प्रभृतिधातुषु गत्यर्थकः √ई धातुः संनिविष्टः । क्षेपणार्थे वर्तमानश्चौरादिक ईर-धातुर्गत्यर्थकस्यास्यैव प्रपञ्चो वेदितव्यः । कम्पनमपि गतेर्भेद एव । 'रुशदीर्ते पयो गौः' (ऋ० ९, ९१, ३) इत्यत्र १. गतिरर्थः[2] । 'ईरते घृतं वा[3]' (ऋ० १०, ९९, ४) इतीह २. प्रेरणारूपोऽर्थः । 'यस्य सुभ्वः साकमोरते' (ऋ० १, ५२, १) सुभ्वः = स्तोतारः स्तुतौ प्रवर्तन्त इति ३. प्रवृत्तिरर्थः । 'अमृतत्वमीरिरे' (ऋ० ३, ६०, ३) इह सायणः—देवत्वं प्रापुरिति ४. प्राप्तिरर्थः । चुरादौ स्वार्थणिजन्तस्य ५. उच्चारणमर्थः—'चन्द्ररथा सूनृता ईरयन्ती' (ऋ० ३, ६१, २); 'महीं सुष्टुतिमीरयामि' (ऋ० २,

---

१. ईक्षेण्यासो अह्यो न चारवः—ऋ० ९, ७७, ३—ईक्षणीयाः=दर्शनीयाः (सा०) ।
२. ध्वसयन्तो वृथेरते—ऋ० १, १४०, ५ = सर्वतो गच्छन्ति [सा०] ।
३. अस्मे वाजास ईरताम्—ऋ० ४, ८, ७ = यज्ञार्थं प्रेरयन्तु [सा०] ।
(तुल० भट्टि० १२, ६; १५, ९३ )
गिरः स्तोमास ईरते—ऋ० ८, ४३, १ = प्रेरयन्ति [सा०] ।
ईरय गा इषण्यन्—ऋ०, ९, ९६, ८ = प्रेरय [सा०] ।
वाच ईरयन्—ऋ० ९, ६२, २६ = प्रेरयन् [सा०]; १, ११३, १२ ।

३३, ८) = प्रकर्षेणोच्चारयामीति सायणः। मनुस्मृतौ (११, ३५) 'न शुष्कां गिरमीरयेत्' इत्यत्राप्युच्चारणमर्थः। रघुवंशे (९, ८) 'अपरुषा परुषाक्षरमीरिता' इत्यत्र 'उक्ता' इति मल्लिनाथः। वस्तुत इह धातोः प्रेरणारूपोऽर्थ एव 'सुष्टुतीम्' 'गिरम्' इत्यादिकर्मसंनिधानेनोच्चारणे पर्यवसितः, गिर ईरणस्योच्चारणाभिन्नत्वात्। 'ये अग्ने नेरयन्ति' (ऋ० ५, २०, २) इत्यत्र ६. दानमर्थः, 'हे अग्ने! ये जना वृद्धाः पश्वादिलक्षणैर्धनैः समृद्धाः सन्तः, 'ते = तुभ्यं नेरयन्ति' इति प्रसङ्गेन चतुर्थ्यन्तयुष्मच्छब्दोपात्तत्वाद् दानार्थकत्वस्यौचित्यात्।

११. § √कृ (डुकृञ्) ८/९ करणे (उ)। हिंसार्थकयोः √कृ ५/ √कॄ ९/ इत्यनयोः, विक्षेपार्थकस्य √कॄ (कॄञ्) इत्यस्य चेह संक्रमः। करणार्थकोऽयं √कृधातुः क्रियासामान्यवाची (द्रष्ट० वाक्यप० उपग्र० १४ प्रकीर्णटोका) इति सर्वेषु धातुष्वनुगतस्तेषां विवरणं कर्तुमर्हति—पचति = पाकं करोति, गच्छति = गमनं करोति, भवति = सत्तां करोति, शेते = शयनं करोतीति। इत्थं करोतिना सर्वधात्वर्थानुवादः शक्यते कर्तुम्। संस्कृतवाङ्मय एष द्वेधा प्रयुज्यमानो विविधानर्थानाख्याति—१. कस्यचिदुपपदस्य साहाय्येन, २. उपपदस्य साहाय्यं विना चेति। इह तावत् प्रथममुपपदसाहाय्येन जाता विविधा अर्था विविच्यन्ते—

११–१. ऋग्वेदे (८, ९३, ८) 'इन्द्रः स दामने कृत ओजिष्ठः' इत्यत्र दामने = स्तोतृभ्यो धनादिदानायैव, कृतः = प्रजापतिना सृष्ट इति प्रसङ्गात् कृधातोरुत्पादनमर्थः।

**ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।**
**ऊरू तदस्य यद् वैश्यः पद्भ्यां शूद्रो अजायत॥**

(ऋ० १०, ९०, १२)

मन्त्रेऽस्मिन् 'कृतः' इत्यस्य 'बाहुत्वेन निष्पादितः' इत्यक्षरार्थः। वस्तुतस्तु 'बाहुभ्यामुत्पादितः' इत्यर्थः, अन्तिमचरणे 'अजायत' इति क्रियया तथैव दर्शनात्। 'सहश्चित् सहीयान् देवो जीवातवे कृतः' (ऋ० १०, १७६, ४) इत्यत्र जीवातवे = जीवनहेतवे यागाय, कृतः = ब्रह्मणा सृष्ट इति प्रासङ्गिकोऽर्थः। व्यापारो भावना सैवोत्पादनापि च सा क्रिया' इति वैयाकरणभूषणसारे भट्टोजिदीक्षितकारिकागतस्य क्रियाशब्दस्योत्पादनमर्थः। 'तयोर्नित्यं प्रियं कुर्यात्' (मनु० २, २२८) इह यद्यपि 'कुर्यात्' इत्यनेन पूर्णतया जायते भावाभिव्यक्तिः, तथाप्यभिप्रेतक्रियायाश्चित्रोपस्थापने कुर्यादिति नितरामसमर्थं पदम्। एवं स्थितौ कृधातुसंबद्धस्य 'प्रिय' इत्यस्य भावचित्रमुपस्थापनीयम्। सेवादिभावोत्तरं प्रीतिरुत्पद्यत इति कृधातुरिहोत्पादनार्थकः। प्रियं कुर्यात् = प्रीतिमुत्पादयेद् इति तदर्थः।

११–२. हविष्पदसंनिधानेन कृतशब्दः पक्वार्थमभिव्यनक्ति—'दक्षिणे संगृभीता कृतानि' (ऋ० १, १००, ९)। अन्नपदसंनिधानेनापि तथार्थो मनुस्मृतौ (९, २१९)—

**वस्त्रं पत्रमलङ्कारं कृतान्नमुदकं स्त्रियः।**
**योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते॥**

कृतम्=संस्कृतं (सिद्धं) च तदन्नं चेति कृतान्नमिति तात्त्विकोऽर्थः। इह कृतान्नपदेन खल्वोदनसक्त्वादि गृह्यते मन्वर्थमुक्तावल्याम्। 'सर्वान् रसानपोहेत कृतान्नं च तिलैः सह' (मनु० १०, ८६) इत्यत्रापि तथैव वेदितव्यम्।

११-३. ऋग्वेदे (१, २४, ९) 'कृतं चिदेनः प्र मुमुग्ध्यस्मत्' इत्यत्र पापपद-संनिधानेनानुष्ठानमर्थः कृधातोः (द्रष्ट० ऋ० १, २४, १४)। 'धर्मक्रियात्मचिन्ता च' (मनु० १२, ३१) इत्यत्र धर्मपदसांनिध्येन क्रियाया अभिप्रायस्तावद् अनुष्ठानम्। आचरणरूपार्थस्यापीहैव गतार्थता (द्रष्ट० ऋ० १०, १३५, ६)।

११-४. रज्जुपदसांनिध्येन कृधातोरर्थो बन्धनमिति। तथा चर्ग्वेदे (१, १४१, ८) 'रथो न यातः शिक्वभिः कृतः' इत्यत्र सायणः—'कृतः=बद्धः' इति। 'अस्पृश्योदकं सम्यङ् मुनिः स्थित्वा कृताञ्जलिः' (वा० रा० १, ३, २) इतीह करयोजन-पूर्वकमञ्जलिरचनारूपव्यापारे ग्रथनं बन्धनं वाऽभिलक्ष्यत इति 'बद्धाञ्जलिः' 'रचिताञ्जलिः' वा तदर्थः। वा० रा० (२, २५, ३८)—

**औषधीं च सुसिद्धार्थां विशल्यकरणीं शुभाम्।**
**चकार रक्षां कौशल्या मन्त्रैरभिजजाप च॥**

इत्यत्र 'रक्षाहेतुत्वेन बबन्ध' इति तिलकटीकायां रामः।

११-५. ऋग्वेदे (६, २०, ३) 'कृतब्रह्मेन्द्रो वृद्धमहाः' इत्यत्र कृतम्=दत्तं ब्रह्म=अन्नं येन स्तोतृभ्यः स इति दानरूपोऽर्थः कृधातोर्दृश्यते, स्तोतृभ्य इति चतुर्थ्यन्तपददर्शनात्। 'अयोध्यां प्रेषयामास धर्मात्मा कृतशासनान्' (वा० रा० १, ६७, २७) इत्यत्र 'दत्तकल्याणसंदेशपत्रान्' इति तिलकटीका। इह शासनं नाम कल्याणसंदेशपत्रादि। तत्संबद्धा प्रासङ्गिकी विशिष्टा क्रियाऽस्ति 'दानम्' इतीत्यस्मात् कारणात् कृधातोर्दानमर्थः। एवमेव 'सलिलस्योदकस्य वा करणम्'[1] इत्यत्र सलिल-पदसमभिव्याहारात् क्रियासामान्यवचनस्य कृधातोर्दानमर्थः[2]; सलिलपदसंबद्धाया-

---

१. 'कुरुष्व सलिलं राजन् प्रतिज्ञामपवर्जय'—वा० रा० १, ४४, ७।
'भगीरथस्तु राजर्षिः कृत्वा सलिलमुत्तमम्'—वा० रा० १, ४४, १७।
'कृतोदकः शुची राजा स्वपुरं प्रविवेश ह'—वा० रा० १, ४४, १८।

२. 'कृत्वोदकं ते भरतेन सार्धम्'—वा० रा० २, ७६, २३।
'उत्तिष्ठ पुरुषव्याघ्र क्रियतामुदकं पितुः'—वा० रा० २, १०२, ७।
'अहं चायं च शत्रुघ्नः पूर्वमेव कृतोदकौ'—वा० रा० २, १०२, ७।
'योगक्षेमं च संप्रेक्ष्य वणिजां कारयेत् करान्'—महाभार० ४, ९, १८=दापयेत् [नी०]।
'कृतान्तः कुरुते फलम्'—महाभार० २, ३२, १२=ददाति [नी०]।
'कृतोत्तरोऽस्मिन्'—भट्टि० १२, २३=दत्तोत्तरः [जय०]।

स्तादृश्या एव क्रियाया औचित्यात् । क्रियासामान्यवाचकः कृधातुः सर्वेषां धातूनामर्थान् प्रकटयितुं प्रभवति, किन्तु तदितरे धातवः कृधातोरर्थं दर्शयितुं न क्षमा याथातथ्येन तेषां निश्चितार्थकत्वादिति क्वापि 'दत्त्वोदकम्' 'उदकं दत्त्वा' 'दीयतामुदकं पितुः' इत्येतादृशानि वचनानि नोपलभ्यन्ते । उपलब्धौ सत्यां च तादृशविस्तृतार्थस्य विरहः स्यात्, क्रियासामान्यवचनेन कृधातुनैव प्रकरणागतानामन्येषामप्यर्थाना-मुपस्थापनसौकर्यात् ।

११–६. ऋग्वेदे (७, ६२, १) 'क्रत्वा कृतः सुकृतः कर्तृभिर्भूत्' इत्यत्र क्रत्वा= सर्वस्य कर्ता, कृतः=संपादित इत्यर्थः । वाल्मीकिरामायणे (२, १, २२) 'लौकिके समयाचारे कृतकल्पो विशारदः' इत्यत्र कृतः=संपादितः, कल्पः=सामर्थ्यं येन स इति । महाभारते (२, ८३, २) 'कारितः' इत्यस्यार्थो नीलकण्ठेन कृतः 'संपादितः' इति ।

११–७. ऋग्वेदे (७, ११, ४) 'अग्निरीशे बृहतो अध्वरस्याग्निर्विश्वस्य हविषः कृतस्य' इत्यत्र संस्कारोऽर्थः[१], 'हविषः' इति पदसंनिधानात् । एवमेव 'प्र यत्कृते चमसे मर्मृजद्धरी' (ऋ० १०, ९६, ९) इत्यत्रापि, 'चमसे' इति प्रसङ्गात् संस्कारार्थो ज्ञायते । 'दक्षिणे संगृभीता कृतानि' (ऋ० १, १००, ९) इत्यत्र हवींषीति पदसंनि-धानात् तथार्थः । तुल० 'कृतमुखः' (अ० को० ३, १, ४) = कृतम् = संस्कृतं मुखमस्य [भानु०] ।

११–८. ऋग्वेदे (६, ५८, ३) 'कामेन कृत श्रव इच्छमानः' इत्यत्र श्रवः= हविर्लक्षणमन्नम् इच्छमानः=इच्छन् सन्, कामेन=पश्वादिविषयेण स्तोतृभिः कृतः=वशीकृतोऽसीति प्रसङ्गः । इह कामपदसंनिधानेन तथार्थः । वा० रा० (२,९,३१) 'रूढश्च कृतमूलश्च शेषं स्थास्यति ते सुतः' इति कुब्जायाः कैकेयीं प्रति वचनम् । चतुर्दश-वर्षाणि वनं प्रति रामे प्रव्राजिते तव सुतो भरतो दृढमूलः=वशीकृतमूलबलः स्था-स्यतीति प्रसङ्गः । एवमेव 'ऐहिष्ट तं कारयितुं कृतात्मा' (भट्टि० १, ११) इत्यत्र वशीकृतात्मेत्यर्थः । 'कामेन कृतो अभ्यानलर्कम्' (ऋ० ६, ४९, ८)=वशीकृत इति सायणः, कामेन=काम्यमानेन फलेनेति प्रसङ्गात् । [तुल० 'वशक्रिया संवननं मूलकर्म तु कार्मणम्'—अमर० ३, २, ४ इत्यत्र 'मूलैः=ओषधिभिर्यद् वशीकरणम्' इति क्षीरस्वामी मूलकर्मेत्यर्थमाह । 'मूलकारिका' इति च वात्स्यायनः कामसूत्रे] ।

११–९. 'यत्रा नरः समयन्ते कृतध्वजः' (ऋ० ७, ८३, ३) इत्यत्र ध्वजपद-संपर्कात् कृधातोरुच्छ्रयरूपोऽर्थो युक्तियुक्तः ।

---

१. 'केशान् जानाम्यहं कर्तुं पिषे साधु विलेपनम्'—महाभार० ४, ९, १८=संस्कर्तुम् [नी०] । 'शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति । शरीरमेतत् कुरुते यद् वेदे कुरुते तनुम् ॥' —महाभार० १२, २७०, २=संस्कुरुते [नी०] ।
'गुरुणाऽथर्वविदा कृतक्रियः'—रघु० ८, ४=कृताभिषेकसंस्कारः [संजी०] ।

२

११-१०. 'कृते योनौ वपतेह बीजम्' (ऋ० १०, १०१, ३) इत्यत्र योनिः = सीता। सीतायां बीजवपनस्य प्रसङ्गादिह कृधातोः कर्षणमर्थः[1]। तथा च 'सप्त ग्राम्याः कृष्टे सप्तारण्या अकृष्टे' इत्यापस्तम्बमुद्धरन् सायणो द्रष्टव्यः।

११-११. ऋग्वेदे (८, ४, ३) 'यथा गौरो अपा कृतम्' इत्यत्राप्संनिधानात् कृधातोरर्थः संपूर्णता। 'अपा=अद्भिः, कृतम्=संपूर्णम् इति सायणः। 'कोष्ठागारायुधागारैः कृत्वा संनिचयान् बहून्' (वा० रा० २, ३, ४४) इत्यत्रापि कृधातुः संपूर्त्यर्थकः।

११-१२. ऋग्वेदे (१, २८, २) 'यत्र द्वाविव जघनाधिषवण्या कृता' इत्यत्र जघनपदसंनिधानाद् विस्तारोऽर्थः कृधातोः।

११-१३. 'येनेमा विश्वा च्यवना कृतानि' (२, १२, १४) इत्यृग्वेदे 'नश्वराणि भुवनानि' इति प्रसङ्गात् कृधातोः स्थिरीकरणमर्थः।

११-१४. 'प्र वां मन्मानृचसे नवानि कृतानि ब्रह्म जुजुषन्निमानि' (७, ६१, ६) इत्यृग्वेदे स्तोत्राणीति प्रसङ्गात् कृधातोः समूहीकरणमर्थः।

११-१५. 'असौ यः पन्था आदित्यो दिवि प्रवाच्यं कृतः' (१, १०५, १६) इत्यृग्वेदे 'पन्थाः' इति प्रसङ्गात् कृधातोर्निर्माणमर्थः। हरिवंशे 'मायया मायिनां वरः' इति प्रसङ्गान्निर्माणमर्थः—

**आकाशे दिक्षु सर्वासु योत्स्यामहमरिन्दम।**
**इत्युक्त्वाऽथ रथं चक्रे मायया मायिनां वरः॥**
(२, ९६, ४३)

उक्तपदप्रसङ्गाभावेऽर्थनिर्णयस्यासम्भवः स्यादुपनतः, स्थापनाद्यर्थानामपि प्रसङ्गोपात्तत्वात्। नैषधे (२२, ११४) तु स्पष्टं निर्माणमर्थः कृधातोः—

**निरन्तरत्वेन विधाय तन्वि! तारासहस्राणि यदि क्रियेत।**
**सुधांशुरन्यः स कलङ्कमुक्तस्तदा त्वदास्यश्रियमाश्रयेत॥**

तारासहस्राणि निरन्तरत्वेनैकीकृत्य यद्यन्यः सुधांशुः क्रियेत = निर्मीयेतेति भावः। अस्यार्थस्योत्पादनार्थेन गतार्थता विज्ञेया।

११-१६. ऋग्वेदे (१, १३६, ४) 'तथा राजाना करथो यदीमहे' इतीह सेवनमर्थः, अस्मिन् मन्त्रे 'तं देवासो जुषेरन्' इत्यंशगतसेवनरूपस्यार्थस्य प्रसङ्गात्।

११-१७. क्रिया खलु व्यापारमात्रम्। 'समासेन चिकीर्षितम्' (मनु० ७, २०२) इत्यत्र कृधातोरर्थं इच्छार्थकसन्प्रत्ययार्थाभिभूतः। चिकीर्षितम् = अभिप्रायम् इति कुल्लूकभट्टः।

---

१. अकृतं च कृतात् क्षेत्रात्—मनु० १०, ११४—अकृतम् = अनुप्तसस्यम्, कृतात् = उप्तसस्यात् (मन्व०)। फालाहतमपि क्षेत्रं न कुर्याद् यो न कारयेत्—याज्ञ० २, १५८—कुर्यात्=कृषेत्, कारयेत् = कर्षयेत्।

११–१८. 'अभिषह्य तु यः कन्यां कुर्याद् दर्पेण मानवः' (मनु० ८, ३६७)। यो मनुष्योऽहङ्कारेणाङ्गुलिप्रक्षेपमात्रेणैव कन्यां विकुर्वीत=नाशयेदित्यर्थः। कुर्यादित्यनेन विकृतिरूपाभीष्टक्रियायाश्चित्रोपस्थापनं नैव जायते। कन्यारूपोपपदस्य साहाय्येन तस्य व्यज्यते तादृशोऽभिप्रायः। 'अङ्गुलिप्रक्षेपमात्रेण नाशनम्' इत्येतादृशस्यार्थस्य प्रकल्पना तु 'तस्याशु कर्त्ये अङ्गुल्यौ दण्डं चार्हति षट्शतम्' इत्युत्तरार्धश्लोकेन जायते। एवमेव (मनु० ८, ३६९) 'कन्यैव कन्यां या कुर्यात्' इत्यत्राप्यङ्गुलिप्रक्षेपेण विकारापादनमर्थः। लोकेऽप्येतादृशोऽर्थो दृश्यते।

११–१९. 'वर्णानां संकरं चक्रे कामोपहतचेतनः' (९, ६७) इति मनुस्मृतौ 'चक्रे' इत्यस्यार्थः—'प्रावर्तयत्' इति। वेनद्वारकस्य भ्रातृभार्यागमनरूपवर्णसंकरस्य प्रारम्भात्। 'योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते' (मनु० १२, १२) इत्यत्रापि तादृश एवार्थः। अत एव 'कारयिता=प्रवर्तयिता' इति कुल्लूकभट्टः।

११–२०. कृधातोरर्थो विवाहः, दारपदस्य संनिधानेन दारार्थक्रियायाः पाण्युपपीडनार्थकत्वात्। तथा च वाल्मीकीये रामायणे (१, १८, ३७)—

**अथ राजा दशरथस्तेषां दारक्रियां प्रति।**
**चिन्तयामास धर्मात्मा सोपाध्यायः सबान्धवः॥**

इत्यत्र दारक्रियाया विवाहार्थोऽवगन्तव्यः। रघु० (५, ४०) 'दारक्रियायोग्यदशं च पुत्रम्' इत्यत्रापि मल्लिनाथेन दारक्रियाया विवाह इत्यर्थो व्यधायि। 'तथा नित्यं यतेयातां स्त्रीपुंसौ तु कृतक्रियौ' (मनु० ९, १०२) इत्यत्र दारपदाभावेऽपि स्त्रीपुंसयोर्विशेषणात् तादृशोऽर्थः।

११–२१. 'तस्मिंस्तावत् तपः कुर्याद् यावत् तुष्टिकरं भवेत्' (मनु० ११, २३३) इत्यत्र कृधातोरावर्तनमर्थः, पूर्वतः क्रियमाणस्य तपसः पुनः करणं नाम—आवर्तनम् इति।

११–२२. 'रामस्य चरितं कृत्स्नं कुरु त्वमृषिसत्तम' (वा० रा० १, २, ३२) इत्यत्र कृधातोर्वर्णनमर्थः[1], चरितपदसमभिव्याहारेण तस्य वर्णनरूपस्यार्थस्यौचित्यात्।

११–२३. 'प्रसादनं च रामस्य पितुश्च सलिलक्रियाम्' (वा० रा० १, ३, १६) इत्यत्र 'सलिलेन क्रिया' 'सलिलरूपा क्रिया' 'सलिलस्य क्रिया' वेत्यनेन विग्रहेण न जायते सुस्पष्टताऽर्थस्य। कृधातोः सामान्यमर्थमभिलक्ष्य विशिष्टार्थसंगतिर्न भवति सर्वजनकल्प्या। एवं स्थितौ कृधातोः पूर्वं प्रयुज्यमानविशेषणशब्दस्य क्रियया तद्रूढ्या वा नार्थबोधदुरूहता। वेणीसंहारे (पुण्यपत्तनसं० १८६७ ई०) 'वृकोदरस्योदकक्रियां कुरु' इत्यत्र 'उदकक्रिया'-शब्दप्रयोगः। उदकक्रियायाः सामान्यतोऽर्थो

१. निबन्धनमर्थो वा। यथा वा० रा० (१, ३, ३९) 'तच्चकारोत्तरे काव्ये वाल्मीकिर्भगवानृषिः' इत्यत्र तिलकटीकायां निबबन्धेत्यर्थः।

भवन्ति—आचमनम्, जलपानम्, स्नानम्, पादप्रक्षालनमित्यादयः। जलक्रियाया विशिष्टोऽर्थो भवति `जलाञ्जलिः, तिलाञ्जलिरिति वा। क्रियाशब्दात् पूर्वं तत्र सलिलशब्दप्रयोगः। इह तस्य प्रासङ्गिकी क्रिया दानमिति। कृधातोः क्रियासामान्य-वाचकत्वाज्जलदानस्य सामान्यमुपकरणम् अञ्जलिरिति। मरणोत्तरजलाञ्जलि-(जलदान)-साहचर्येण तिलानामपि ग्रहणम् इत्यनेन प्रकारेण सलिलक्रियाया अर्थो जलाञ्जलिस्तिलाञ्जलिश्चेति।

११–२४. 'अश्वहर्तारमासाद्य कृतार्थाश्च निवर्तत' ( वा० रा० १, ४०, ११ ) इत्यत्रार्थशब्दः प्रयोजनपरकः। कृताः=सम्पन्ना[1] अर्थाः प्रयोजनानि येषां ते कृतार्था इति तत्सांनिध्येन कृधातुः संसिद्ध्यर्थकः। अयमर्थो द्वितीयप्रघट्टकीयस्यार्थस्य प्रायः संवादी।

११–२५. यद्यप्यमरसिंहेन ( ३, ३, १५७ ) क्रियायाः शिक्षार्थो दर्शितः[2], तथापि स्वातन्त्र्येण प्रसङ्गमन्तरा प्रयुक्तः स न तमर्थं प्रकाशयतीत्यनुभवः। 'कृता-स्त्रमकृतास्त्रं वा नैनं शक्ष्यन्ति राक्षसाः' (वा० रा० १, २१, ९) इत्यत्रास्त्रपदसमभि-व्याहारेण कृतशब्दार्थोऽभ्युपेयते 'शिक्षित-' इति। इह कृधातोः शिक्षार्थः। एवमेव 'सम्पूर्णा कृतविद्यानां गुहा केसरिणामिव' (वा० रा० १, ६, २१) इत्यत्र 'अभ्यस्तशस्त्रशास्त्रादिविद्यानाम्' इति तिलकटीकायां विद्यापदसांनिध्येन कृधातो-रभ्यासोऽर्थः। 'रामः कृतात्मा भरतं समाश्वासयदात्मवान्' (वा० रा० २, १०५, १४) इत्यत्र 'कृतात्म'-शब्दगत आत्मशब्दो बुद्धिवाचक इति कृधातुः संस्कारार्थपरः। संस्कारश्चेह शिक्षा। यद्यपि रघु० (३, २९) 'क्रिया हि वस्तूपहिता प्रसीदति' इत्यत्र क्रियाशब्दस्यार्थः प्रसङ्गमन्तरा स्वातन्त्र्येण शिक्षेति प्रतीयते, तथापि न शक्यते वक्तुं तथा, 'विनिन्युरेनं गुरवो गुरुप्रियम्' इति द्वितीये श्लोकपादे विपूर्वकनीधातोः शिक्षार्थपरकत्वात् तत्प्रसङ्गेनेहापि क्रियाशब्दार्थः शिक्षेति। तुल० 'कृतहस्तः (अ० को० २, ८, ६८)—कृतः=अभ्यस्तो हस्तो यस्य (भानु०)। 'कृतपुङ्खः' (अ० को० २, ८, ६८)—कृतः=अभ्यस्तः पुङ्खः=पुङ्खयुक्तः शरो येन (भानु०)।

११–२६. वा० रा० (२, ६२, ६) 'राजा च कृतकार्यः स्यादहं दीर्घायुरव्ययः' इति शुनःशेपवचनं विश्वामित्रं प्रति। राजा=अम्बरीषः कृतकार्यः=समाप्तकार्यः स्यात्। इदानीम् इन्द्रद्वारा यज्ञपशोरपहरणेन यज्ञोऽसमाप्तः। तत्समाप्त्यर्थं शुनः-शेपक्रयस्तत्पितुः सकाशात्। स च शुनःशेपः प्राणरक्षार्थं विश्वामित्रं प्रार्थयते। इह प्रसङ्गादेव समाप्तिरूपस्यार्थस्यावगमः।

---

१. 'कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्'—यो० सू० २, २२।

२. आरम्भो निष्कृतिः शिक्षा पूजनं सम्प्रधारणम्।
उपायः कर्म चेष्टा च चिकित्सा च नव क्रियाः॥

आख्यातं तूपचारादिति व्याख्यातवता क्षीरस्वामिनेतरेऽर्था ऊरीकृताः। वस्तुतस्तूपपद-सान्निध्यादनन्ता अर्था इति कः शक्नुयात् कर्तुं गणनाम्।

११–२७. वा० रा० (२, ६६, ६) 'एतद् दर्शय भद्रं ते कृतकामौ नृपात्मजौ' इति विश्वामित्रवचनं जनकं प्रति। जनको विश्वामित्रमाजुहाव। पृष्टेन च तेन रामलक्ष्मणकर्तृका धनुषो दिदृक्षा प्रकटिता—'नृपात्मजौ प्राप्तकामौ स्त इति धनुर्दर्शय' इति। इह कृधातोरर्थः प्रापणमिति। एवमेव 'कृतदाराः कृतास्त्राश्च सधनाः ससुहृज्जनाः' (वा० रा० १, ७७, १४) इत्यत्र रामलक्ष्मणभरतशत्रुघ्नानां लब्धभार्यत्वं लब्धास्त्रत्वं च विज्ञापितम्।

११–२८. वा० रा० (२, ७६, १४) 'सोऽहं गुरुवचः कुर्वन् पृथिव्यां न वसे निशाम्' इति परशुरामवचनं रामं प्रति। यदा पूर्वं मया काश्यपाय वसुन्धरा दत्ता, तदा मां सोऽब्रवीत्—मम विषये न वस्तव्यमिति। अहं परशुरामो गुरुवचः कुर्वन्=पालयन् पृथिव्यां न वसे निशामिति भावः। एवं तावदिह प्रसङ्गाद् वचःपदसन्निधानाच्च कृधातुः पालनार्थकः। एवमेव 'बालो बतायमैक्ष्वाकश्चिरं राज्यमकारयत्' इति वा० रा० (२, १२, ६५) ज्ञेयम्।

११–२९. तमसातटे सुप्तान् पौरजनान् हित्वा रामस्य ससीतलक्ष्मणस्य प्रस्थानसमये सारथिस्तं रथम् उदङ्मुखं स्थापयामासेति वा० रा० (२, ४६, ३४) 'उदङ्मुखं तं तु रथं चकार' इत्यत्र कृधातोरर्थः स्थापनमिति[1]।

११–३०. वा० रा० (२, ४९, १६) 'काले कृतां तां मनुजैर्धन्विनामभिकाङ्क्षिताम्' इत्यत्र स्वीकरणमङ्गीकरणं वार्थः। 'निशोऽपि सोमेतरकान्तशङ्कामोङ्कारमग्रेसरमस्य कुर्याः' इति नैष० (२, ७५) 'कुर्याः' इत्यस्याङ्गीकुर्वित्यर्थः प्रकाशटीकायां समीचीनः, प्रणवमस्य वेदस्याग्रेसरं स्वीकुर्वित्यर्थस्यौचित्यात्।

११–३१. 'नाराजके जनपदे कारयन्ति सभां नराः' इति वा० रा० (२, १२, ६५) 'आयोजयन्ति' इत्यर्थस्तादृशप्रसङ्गात्।

११–३२. 'न मन्त्रं बहुधा कुर्यादेवं राज्ञः प्रियो भवेत्' इति महाभारते (४, ४, ४८) कृधातोर्भेदनमर्थः, बहुधा=बहुप्रकारेणेति पदसमभिव्याहारात्।

११–३३. महाभारते (५, ४२, ३१)—

यत्राकथयमानस्य प्रयच्छत्यशिवं भयम्।
अतिरिक्तमिवाकुर्वन् स श्रेयान् नेतरो जनः॥

इह कृधातोः प्रकाशनमर्थः। एवमेव तत्रैव (१२, १२०, ८) 'अर्थकामः शिखां राजा कुर्याद् धर्मध्वजोपमाम्' इत्यत्र राजधर्मस्य साररूपतया वर्णनप्रसङ्गे धर्मध्वजोपमायाः शिखायाः प्रकाशनं प्रकटनं वाऽभिप्रेतम्।

---

१. निक्षेपणे चापि दृश्यते—कटे कुरु, घटे कुरु, अश्मानमितः कुरु, स्थापयेति गम्यते (महाभाष्ये १, ३, १) इति।
'कुरु करे गुरुमेकमयोघनं बहिरितो मुकुरं च कुरुष्व मे'—नैष० ४, ५९=स्थापय [पु०]
'पुनः करे कर्तुमना गलन्तिकाम्'—नैष० १६, ८३।
'दुधाव निर्नमस्कारान् राक्षसेन्द्रपुरस्कृतान्—भट्टि० ९, ६०=अग्रतः स्थापितान् [जय०]

११–३४. 'हर्षेण महता युक्तः कृतसंज्ञो वृकोदरे' इति महाभार० (७, १३७, ४०) कृधातोर्ग्रहणं ज्ञानं वार्थः, संज्ञायाः = सङ्केतस्य गृह्यमाणत्वात् ।

११–३५. नियमपूर्वकविद्यास्वीकारे वक्तुरपादानसंज्ञा भवतीति 'आख्यातोपयोगे' (१, ४, २९) इति पाणिनीयसूत्राज्ज्ञायते । महाभार० (१२, २, ४)—

**स बालस्तेजसा युक्तः सूतपुत्रत्वमागतः ।**
**चकाराङ्गिरसां श्रेष्ठाद् धनुर्वेदं गुरोस्तदा ॥**

इह 'अङ्गिरसां श्रेष्ठाद् गुरोर्धनुर्वेदं चकार' इति पञ्चमी । गुरुरूपवक्तुरपि सुस्पष्टमुल्लेखः । धनुर्वेदपदाद् विद्याया अपि निर्देश इत्येतेषां सर्वेषां साहाय्येन कृधातोरर्थः—'अध्ययनम्'[1] इति निश्चीयते ।

११–३६. 'स्तम्बशकृतोरिन्' (३, २, २४) इति पाणिनीये व्याकरणेऽनुवृत्तः कृधातुर्विसर्गे वेदितव्यः, शकृत्पदसंनिधानात् ।

११–३७. 'शब्ददर्दुरं करोति' इत्यत्राष्टाध्याय्याम् (४, ४, ३४) प्रकृतिप्रत्ययविभागपूर्वकं ज्ञानार्थकः कृधातुः । वैयाकरणसिद्धान्तकौमुद्यास्तत्त्वबोधिनीटीकाकारस्तु 'प्रकृतिप्रत्ययविभागेन व्युत्पादयतीत्यर्थः, अभिधानस्वाभाव्याद् व्युत्पादन एवायं प्रत्ययः' इत्यभिहितवान् । अयमर्थो मद्दर्शितार्थेन सह संवदत्येव । इह शब्दपदसंनिधानेनैतादृशार्थः, शब्दमुच्चारयतीत्यर्थे वैयाकरणार्थकस्य शाब्दिकरूपशब्दस्य प्रयोगाभावात् ।

११–३८. 'हाहेति कुर्वतस्तस्य प्रहृष्टास्ता वराङ्गनाः' इत्यत्र हरिवंशे कृधातोरर्थ आविष्करणं प्रकटनं वा, हाहेति पदसंनिधानाच्चीत्काराद्यर्थानामसंभवात् ।

११–३९. 'भूवादयो धातवः' (१, ३, १) इति सूत्रे 'बह्वर्था अपि धातवो भवन्ति' इति प्रसङ्गे महाभाष्यकारेण निर्दिष्टम्—'करोतिरभूतप्रादुर्भावे दृष्टो निर्मलीकरणे चापि वर्तते—'पृष्ठं कुरु' 'पादौ कुरु' उन्मृदानेति गम्यते' इति । स्नानवेलाप्रसङ्गेऽयमर्थो विज्ञेयः[2] ।

११–४०. 'जयस्तम्भं चकार सः' (रघु० ४, ५९) इत्यत्र परिवर्तनरूपोऽर्थः कृधातोः, जयस्तम्भत्वेन परिवर्तनात् ।

११–४१. 'वप्रक्रियामृक्षवतस्तटेषु' (५, ४४) इति रघु० कृधातोरर्थः क्रीडेति । कविकुलगुरुणा कालिदासेन मेघदूतस्य द्वितीये श्लोके तु 'क्रिया' इत्यस्य स्थाने क्रीडाया एव प्रयोगं कृतवता साधीयोऽर्थो दर्शितः–'वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श' इति ।

११–४२. 'कथां प्रमत्तः प्रथमं कृतामिव' (४, १) इत्यभिज्ञानशाकुन्तले कृधातोरभिधानमर्थः संजायते, कथापदसमभिव्याहारात् (तुल० वा० रा० २,९७, ५) ।

---

१. 'कलापिवैशम्पायनान्तेभ्यश्च' (पा० अ० ४, ३, १०४) इत्यत्र काशिका—'प्रत्यक्षकारिणो गृह्यन्ते, न तु शिष्यशिष्याः' इति । तत्र च पदमञ्जरी—'अत्र करोतिरध्ययने वर्तते' इति ।

२. विशेषस्तु 'बुन्देलखण्ड की प्राचीनता' इत्यस्मदीयग्रन्थे 'करना की तूती' इत्यत्र (१०१ पृ०) द्रष्टव्यः ।

रघु० (३, २१) 'चकार नाम्ना रघुमात्मसंभवम्' इत्यत्र 'नृपेण चक्रे युवराजशब्दभाक्' (३, ३५) इत्यत्र च ख्यापनार्थः कृधातोः, नामशब्दयोः[1] समभिव्याहारात्। किरातार्जुनीये 'भवता तस्य कृतः कृतावधेः' (२, ४६)=परिभाषितकालस्य [घण्टा०]। इति परिभाषार्थः√कृधातोः।

११–४३. '(मद्गुरोः) क्रियाविघाताय कथं प्रवर्तसे' (३, ४४) इत्यत्र रघुवंशे कृधातोर्यज्ञार्थः, गुरुपदसंनिधानेन क्रियायाः क्रतुहोमप्रभृतयोऽर्थाः। सति दुर्जनादिसांनिध्ये तदर्थाः स्युः परपीडादयः।

११–४४. 'तदोजसस्तद्यशसः स्थिताविमौ वृथेति चित्ते कुरुते यदा यदा' (१, १४) इत्यत्र नैषधीये चरिते चित्तपदसंनिधानात् कृधातोरर्थो विचारो विवेचना वा संपद्यते।

११–४५. नैषधीये चरिते (१८, ६०)—

**पीततावकमुखासवोऽधुना भृत्य एष निजकृत्यमर्हति।**
**तत् करोमि भवदूरुमित्यसौ तत्र संन्यधित पाणिपल्लवम्॥**

इत्यस्मिन् पद्ये 'ऊरुम्' इति पदसंनिधानेन, 'तत्र संन्यधित पाणिपल्लवम्' इति च प्रसङ्गेन कृधातोरर्थः संवाहनं जायते। नैष० (१८, १३४) 'सेवया व्यजनचालनाभुवा भूय एव चरणौ करोतु वा' इत्यत्र मल्लिनाथो जीवातुटीकायामाह— 'धातूनामनेकार्थत्वात् सेवताम् इत्यर्थः' इति। प्राचीनैराचार्यैर्विश्लेषणमविधाय खल्वेतावन्मात्रं व्याख्याय कृतकृत्यता स्वकीया समाश्रुता।

११–४६. भट्टि० (११, २३)—

**चकार कान्तोऽप्यधरोऽङ्गनानाम्।**
**सहोषितानां पतिभिर्लघुत्वम्॥**

इह कृधातोरर्थः सूचनं लघुत्वपदसामर्थ्यात्। यद्यप्येतेन पदेन कृधातुः प्रकाशनरूपमर्थमपि शक्नोति सूचयितुम्, तथापि 'आबद्धनेत्राञ्जनपङ्कलेशस्ताम्बूलरागं बहुलं दधानः' इति दर्शनात् पैशुन्यरूपार्थस्यैवौचित्यात्।

**एवं तावदन्यपदसंनिधानलभ्याः षट्चत्वारिंशदर्थाः परीक्षिता इह कृधातोः—** १. उत्पत्तिः, २. पाकः, ३. अनुष्ठानम्, आचरणम्, ४. बन्धनम्, ५. दानम्, ६. संपादनम्, ७. संस्कारः, ८. वशीकारः, ९. उच्छ्रयः, १०. कर्षणम्, ११. संपूर्णता, १२. विस्तारः, १३. स्थिरीकरणम्, १४. समूहीकरणम्, १५. निर्माणम्, १६. सेवनम्, १७. इच्छा, १८. नाशः, १९. प्रवर्तनम्, २०. विवाहः, २१. आवर्तनम्, २२. वर्णनम्, २३. अञ्जलिः, २४. संसिद्धिः, २५. शिक्षा (अभ्यासः), २६. समाप्तिः, २७. प्रापणम्, २८. पालनम्, २९. स्थापनम्, ३० अङ्गीकारः, ३१. आयोजनम्, ३२. भेदनम्, ३३. प्रकाशनम्, ३४. ग्रहणम् (ज्ञानम्), ३५. अध्ययनम्, ३६. विसर्गः, ३७. प्रकृति-

---

१. कृतलक्षणः—अ० को० (३, १, १०)–कृतम्=उच्चारितम्, लक्षणम्=नामास्य [भानु०]।

प्रत्ययविभागपूर्वकं ज्ञानम्, ३८. आविष्करणम्, ३९. निर्मलीकरणम्, ४०. परिवर्तनम्, ४१. क्रीडा, ४२. अभिधानम्, ४३. यजनम्, ४४. विचारः, ४५. संवाहनम्, ४६. पैशुन्यं चेति ।

निदर्शनमात्रा अर्था इमे । कृधातोरर्थानां नास्तीयत्ता । तादृशानां तादृशानामुपपदानां संनिधानेन तादृशास्तादृशा अर्था[1] जायन्ते ।

सांप्रतमुपपदसंनिधानमन्तरा कृधातोर्विशुद्धा अर्था निर्दिश्यन्ते । तेषामुपपदानां संनिधानाभावे विशुद्धा अर्थास्ते प्रतीयन्ते । वस्तुतः क्रियासामान्यवाचकस्य कृधातोः स्फटिकस्येव रङ्गराहित्यमिव स्वार्थेतरार्थराहित्यम्—

११–१. (अ) उपपदमन्तरा कृधातोर्हननमर्थः प्राथम्यं भजते । हिंसार्थककृधातोः संक्रान्तिरादावेव प्रत्यपादि मया । ऋग्वेदे (१, १६८, ३) 'हस्तेषु खादिश्च कृतिश्च सं दधे' इत्यत्र कृतेरर्थः कर्तनी । 'इन्द्रस्य वोचं प्र **कृतानि** वीर्या' (ऋ० २,२१, ३)='वृत्रहननादिरूपाणि' इति सायणः । 'अभाग्या तत्र जीवामि कर्तव्ये सति पाण्डव' (महाभार० ४,२०,२९) इत्यत्र 'मर्तव्ये' इति नीलकण्ठेनार्थः कृतः । हिंसार्थककृधातोरपि सिध्यतीदं रूपम् । एवमेव 'एष मे **क्रियमाणाया** भारतेन तदा विभो' (महाभार० ५, १७७, ४१ इत्यत्र 'हिंस्यमानायाः' इति 'संभूय तस्य नृपतेः समारब्धाश्चि**कीर्षितुम्**' (महाभार० ७, ५५, २८) इत्यत्र 'अपकारं कर्तुम्' इति, 'आशाकृतश्च राजेन्द्र तपो दीर्घं समाश्रितः[2]' (महाभार० १२, १२८, ४) इत्यत्र च '–हतः' इति नीलकण्ठेनार्था दर्शिताः, व्युत्पत्तिस्तु हिंसार्थकात् क्रैयादिकात् कृधातोर्दर्शिता । एतेषु रूपेषूभयोर्धात्वोरविभाज्ये सत्यपि संक्रमणे प्रयोगभूयिष्ठस्य करणार्थकस्य कृधातोः प्रवेश उद्गाढं प्रतीयते । महाभारते (५, ७८, ५) एक एव तादृशो लभ्यते प्रयोगो येन करणार्थककृधातोर्हिंसार्थकत्वं सिध्यति निर्भरम्—

**'कुर्वन्ति तेषां कर्माणि येषां नास्ति फलोदयः ।'**

नीलकण्ठेनेह 'कृण्वन्ति=हिंसन्ति' इत्यर्थं प्रतिपादयताऽस्य व्युत्पत्तिरपि हिंसार्थकात् कृधातोर्मता, तन्न समीचीनम्, तनादौ हिंसार्थकस्य कस्यापि कृधातोरसत्त्वात् ।

११–२. (अ) रूढ्या केचिच्छब्दाः स्वकीयमर्थं हित्वा नवीनमर्थं प्रकाशयन्ति । 'कृतम्' इत्यस्यार्थो भवति—विहितम्, अनुष्ठितम् इत्यादिः । एतादृशी प्रवृत्तिरपि दृश्यते तत्रार्थपरिवर्तनमूले । कृते सति पर्याप्तता जायते । पर्याप्ततायां च सत्यां निषेधप्रवृत्तिः सांसिद्धिकी । रघुवंशे (११, ४१) 'सारतोऽयमथवा गिरा कृतम्' इत्यत्र पर्याप्तमर्थः । अलंशब्दयोगे तृतीयावच्चेह तृतीया विभक्तिः, निषेधक्रियां

१. 'एष देवो विपा कृतोऽति ह्वरांसि धावति'—ऋ० ९, ३, २, इत्यत्र प्रासङ्गिकसोमपदसंनिधानेन कृधातोरर्थः—'अभिषवः' ।
'वीतहोत्रा कृतद्वसू' (ऋ० ८, ३१, ९) =याचमानकृतधनौ [सा०] ।

२. कृतकौतूहलस्तेषु मुक्तश्चर यथासुखम्'—महाभार० १२, २८८, ११=छिन्न-[नील०] ।

प्रति करणत्वात्। धूर्तविटसंवादे (७८ पृ०) 'कृतमञ्जलिना' इति शोभनः प्रयोगः। तत्रैव (८९ पृ०) 'कृतं पाद्येन' इत्ययं प्रयोगोऽपि तथैव। 'अथवा कृतं सन्देहेन' शाकुन्तले 'कृतमश्वेन' इत्यत्र च कृतशब्दस्य पूर्वं प्रयोगः। 'कृतमाविष्कृतपौरुषैर्भुजैः' (२, १७) इत्यत्र च किरातार्जुनीयेऽपि यथास्थिति प्रयोगः। 'कृतमिति निषेधार्थमव्ययं चादिषु पठ्यते' इति मल्लिनाथः, किन्तु नोपलभ्यते गणपाठेऽयं शब्दः। गणरत्नमहोदधौ (१, ५) दृश्यते चादिगण एषः। तद्वृत्तौ च 'कृतमिति निवारणनिषेधयोः, वत्स कृतं साहसेन' इत्यपि व्याख्यातम्। रघुवंशटीकायां (११, ४) सोऽवश्यं निर्दिशति वर्धमानम्—"कृतं निवारणनिषेधयोः' इति गणव्याख्याने" इति। वाल्मीकीयरामायणे (१, १९, ७) 'कृतश्रमो निरुत्साहः' इत्यत्र 'कृतवृथाप्रयासः' इति तिलकटीकया निर्दिश्यमानं तस्य बीजं दृश्यते। गणरत्नमहोदधौ चादिगणे पठितत्वादस्यासमस्तता ज्ञायते। इह वाल्मीकीयरामायणे तु समासो दृश्यते।

११–३. (अ) कदाचित् सादृश्येन जायतेऽर्थविस्तारः। निमित्तार्थकश्चतुर्थ्यर्थकश्च 'कृते' इति शब्दो दृश्यते प्रयुज्यमानः परत ऋग्वेदात्। क्तान्तकृतशब्दस्य सप्तम्यन्तं रूपमिदमसंशयम्। अस्य योगे षष्ठीविभक्तिरपि 'कर्तृकर्मणोः कृति' इति सूत्रेण विधीयते कृदन्तमभिलक्ष्य[1]। क्वचिच्च सा समस्यतेऽपीत्येतस्याव्ययत्वं कादाचित्कं सप्तम्यन्तप्रतिरूपकम्। 'अर्थे' इत्यस्य शब्दस्य सादृश्येन प्रयोगारम्भः[2]। क्तान्तकृतशब्दस्यार्था भवन्ति—कार्यम्, फलम् इत्यादयः।

११–४. (अ) क्तान्तकृतशब्दो भाववचनो मूलतः कार्यार्थकः। तच्च कार्यं साहाय्यरूपमनुग्रहरूपं वा कालेनोपकारपरं संजातम्। अयमुपकारार्थ आधिक्येन 'कृतज्ञ'-शब्दे दृश्यते—'शास्त्रज्ञश्च कृतज्ञश्च पुरुषान्तरकोविदः' (वा० रा० २, १, २५) इत्यत्र 'परेणाल्पमपि कृतम्=उपकारं जानाति तथा' इति तिलकटीकायाम्। जानातेरभावे केवलस्य कृतशब्दस्याप्युपकाररूपोऽर्थो विद्यत एव, यथा वाल्मीकीये रामायणे (२, ३९, २३)—'न कुलं न कृतं विद्या न दत्तं नापि संग्रहः' इत्यत्र।

११–५. (अ) 'यद्येष हेतुस्तव खादने स्यान्न ते वेदः कारणं नार्यधर्मः' इति महाभारते (१२, १४१, ८९) कारणम्=प्रमाणम् इत्यर्थः। यद्यपि प्रसङ्गतो वेदानां प्रामाण्यं शक्यते ज्ञातुम् इत्ययमर्थादेशः, तथापि कारणशब्दः प्रमाणपरो न प्रसिद्धः।

---

१. सत्कारार्हा कृते तव—वा० रा० २, १२, १७।

२. नहि ते स्त्रीवधकृते घृणा कार्या नरोत्तम—वा० रा० १, २५, १७।
यत्कृते पितरः पुत्रान् जनयन्ति शुभार्थिनः—वा० रा० १, ६२, ९।
स्त्रीकृते यः प्रियं पुत्रं वने प्रस्थापयिष्यति—वा० रा० २, १२, ८३।
यत्कृते व्यसनं मम—वा० रा० २, १३, १९।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते—भगवद्गी० १, ३५।

३. यदा व्रजति संग्रामं ग्रामार्थे नगरस्य वा—वा० रा० २, २, ३६।
सर्वा देवान् नमस्यन्ति रामस्यार्थे मनस्विनः—वा० रा० २, २, ५२।

११–६. (अ) हरिवंशपुराणे (२, ५०, २) 'कन्यार्थे चागतः कृष्णस्तत्रापि न कृतोऽतिथिः' इत्यत्र कृधातुः क्रियासामान्यबाचक इति विशिष्टमर्थं नाभिव्यनक्ति। अतिथिं प्रति प्रयुज्यमानो भाव आतिथ्यम्। अतिथिं प्रति प्रेर्यमाणया क्रियया तस्य आसनोदकदानादिरूपयाऽर्चनं विधीयत इत्यातिथ्येनार्चनरूपस्तदर्थः।

११–७. (अ) हरिवंशपुराणे (२, ६५, ३२) 'कृतिरेषा हि भद्रं ते पारिजातस्य सुप्रभे' इत्यत्र कृतिशब्दार्थो न सारल्येन शक्यो व्याख्यातुम्। 'पारिजातस्य एषा कृतिः' इत्यनेन कार्यम्, चेष्टा, व्यापार इत्यनेकेऽर्थाः प्रतीयन्ते। पारिजातस्य शक्तिमत्ता सुविज्ञातेति सामर्थ्यं कृतेरर्थः। स्वभावोऽपि तदर्थो विज्ञेयः।

व्याख्याताः सर्वेऽप्यर्थाः प्रायो विशेषीकृता इत्यर्थसंकोचो नामेह वेदितव्यः। विशिष्टानामर्थानां साधारणीकरणे त्वर्थविस्तारो जायते। अर्थबाहुल्यमूलेऽस्य धातोः क्रियासामान्यवाचकत्वं[1] निमित्तमिति नास्तीयत्ताऽर्थानामेतदीयानाम्।

भारोपीयभाषायामस्य मूलरूपं √*'कुएर्' इति। एष धातुस्तत्र करणे निर्माणे चार्थे प्रयुक्तः। लिथुआनिया-भाषायां 'कुर्ति' इति 'केरेत्ति' इति च प्रयोगद्वयं करणेऽर्थे लभ्यते। अवेस्ताभाषायां 'कॅरॅनओइति' ( <कृणोति–वैदि० ) इति प्रयोगोऽपि तथा। यथा—'स्कन्नं से मनो कृनूइदि' (अवेस्ता, यस्न), कृनूइदि ( <कृणुधि—वैदि० )। अत्र मनसो दौर्मनस्यं व्याख्यातम्।

१२ § √कृप् (कृपू) १/७५४ सामर्थ्ये (आ)। प्रकृतधातोः संबन्धः कृधातुना सुस्पष्टं ज्ञायते। एतस्य बहुत्र करणरूपोऽर्थोऽपि दृश्यते। √कृ+प्, √कृ+ष्, √कृ+ड्, √कृ+त्, √कृ+श् इत्येतादृशेषु धातुषु लभ्यते वर्णोपजनः। चुरादौ पठितौ दौर्बल्यावकल्कनार्थकौ कृपधातू अस्यैव प्रपञ्चरूपौ।

१२–१. 'कृतिरेषा हि भद्रं ते पारिजातस्य सुप्रभे' इत्यत्र हरिवंशपुराणे (२, ६५, ३२) क्रियासामान्यवाचकस्य कृधातोः सामर्थ्यमर्थो दर्शितपूर्वः। भौवादिकः सामर्थ्यार्थिकः कृप् धातुरकर्मकः, कृधातुस्तु सकर्मक इति तयोर्भेदः। स्वार्थणिजर्थकस्तु प्रकाममभिव्यनक्ति कृधातोरर्थम्। ऋग्वेदे (१०, १८४, १) 'विष्णुर्योनिं कल्पयतु' इत्यत्र 'ऋतून् कल्पयाति' (१०, २, ४) इत्यत्र च 'करोतु' इति सायणः[2]। 'पुनरेहि वृषाकपे सुविता कल्पयावहै' (ऋ० १०, ५२, ४) इत्यत्र 'पर्यालोच्य कुर्याव' इत्यर्थः। ऋग्वेदे (१, १७०, २) सकर्मकतयापि प्रयोगः—'तेभिः कल्पस्व साधुया'=साधुत्वं कल्पयेत्यर्थः[3]। अयं करणार्थो रचनोत्पादनरूपो वेद्यः। ऋ० (१०, ११४, ५) 'एकं

---

१. तुल० 'कृञ्चानुप्रयुज्यते लिटि' इत्यनेन विहितोऽनुप्रयोगः। तथा—भ्रमयाञ्चकार (रघु० ६, १३); आनयाञ्चक्रे (वा० रा० २, ३, २४) इत्यादौ।

२. द्रष्ट० नैषध० (४, ८८; १६, ९४; २०, १४७) इत्यत्र प्रकाशटोका; मनु० (७, १२५) इत्यत्र मन्वर्थ०; रघु० १७, ९ इत्यत्र च सञ्जीवनी।

३. तुल० महाभारते (२, २९, ७) 'क्लृप्तानि'=कृतानि (नील०)।

सन्तं बहुधा कल्पयन्ति' इत्यत्र 'कुर्वन्ति' इत्यर्थे रचनोत्पादनं वा दृश्यते। 'यथापूर्वं प्रजाः कल्पेरन्' (तैसं० ७, २, ७, १) इत्यत्र, 'कल्प्ता प्रीतिं परां प्रभुः' (भट्टि० ९, ४५) इत्यत्र च जननमर्थः। मनुस्मृतौ (१, ८७) 'पृथक् कर्माण्यकल्पयत्' इत्यत्र निर्माणरूपोऽर्थः। 'इदं शास्त्रमकल्पयत्' (मनु० १, १०२) इत्यत्र रचनार्थः। ऋग्वेदेऽपि (८, ५८, १) दृश्यते सः 'यमृत्विजो बहुधा कल्पयन्तः' इत्यत्र।

१२–२. क्षौरकर्मादिना वेषादि[1] रचनाप्रसङ्गेऽयं छेदनार्थकोऽपि जातः। अत एवैष छेदनार्थः केशनखश्मश्रूणां प्रसङ्ग एव दृश्यते। मनु० (७, १२५) 'क्लृप्तकेशनखश्मश्रुः' इत्यत्र कल्पनम्=छेदनमर्थः। चरकसंहितायाम् (५, ९९) 'केशश्मश्रुनखादीनां कल्पनं संप्रधानम्' इत्यत्रापि कर्तनमर्थः कल्पनस्य। मृच्छकटिके (१७ पृ०) 'कप्पिज्जन्त < कल्प्यमानम्' इत्यस्य च्छेद्यमानमित्यर्थः। तत्रैव (२३२ पृ०) 'केसकप्पणा' इत्यस्य कर्तनादिना रचनार्थः। अयं छेदनार्थो हिन्दीभाषायां विच्छिद्यापाकरणरूपेण खुण्टनरूपेण वा प्राप्यते '√कपटना' इति धातोः। 'कल्पना' इति धातुस्तु द्वैधीकरणार्थकः सकर्मकः। पश्चान्नापितार्थे जातो रूढः कल्पकशब्दः (द्रष्ट० शब्दमाला), कर्तन्यर्थे कल्पनीति शब्दः कोशेषु दृश्यते, न तु संस्कृतवाङ्मये। प्राकृतभाषायाः पण्ह० (प्रश्नव्याकरणसूत्रे), विपाकश्रुते (१, ४), अपभ्रंशभाषायाश्च समराइच्चकहा-नामके ग्रन्थे (३७१) कर्तन्यर्थकः कप्पणीशब्दो लभ्यते रूढः।

१२–३. अपरतश्च क्षौरादिना वेषादिरचनाप्रसङ्गे द्वितीयोऽर्थो हस्तिसज्जनारूपोऽपि। कल्पना=हस्तिसज्जनेति। किन्तु केशनखादीनां प्रसङ्ग एव कल्पनस्य च्छेदार्थ इव नायमर्थोऽत्रैव रूढः। रघु० (५, २८) 'रथं रघुः कल्पितशस्त्रगर्भम्' इत्यत्र केवलं सज्जार्थः। भट्टि० (१४, ८९) 'चक्लृपे चाश्वकुञ्जरम्' इत्यत्र 'सज्जीकृतम्' इति जयमङ्गलः। द्राविडादिप्रदेशेष्वपि रचनाया गृहप्राङ्गणादिसज्जनाया अर्थेऽद्यापि कल्पना-शब्दप्रयोगो विधीयते।

१२–४. पाणिनिना दर्शितोऽर्थस्तु सामर्थ्यम्। संपन्नतेत्यनर्थान्तरम्। ऋग्वेदे नोपलभ्यतेऽस्य धातोरकर्मकप्रयोगः। 'अन्येन मत्प्रमुदः कल्पयस्व' (ऋ० १०, १०, १२); 'यथावशं तन्वं कल्पयस्व' (ऋ० १०, १५, १४) इत्यादौ समर्थयस्वेत्यर्थः। अथर्ववेदे (५, १९, १५) 'नास्मै समितिः कल्पते' इत्यत्र भौवादिकः प्रयोगः सामर्थ्यार्थकः। मनु० (७, १५) 'भयाद् भोगाय कल्पन्ते' इत्यस्य 'समर्था भवन्ति' इत्यर्थः 'ब्रह्मभूयाय कल्पते' (मनु० १, ९८) इत्यत्र 'संपद्यते' इत्यर्थः। णिजन्तः प्रयोगस्तु संपादनार्थकः—'केवलेन चरणेन कल्पितम्' (रघु० १९, ७)। वस्तुत एष सत्तार्थक एव। अत एव 'सामर्थ्यमिह कल्पते' (वा० रा० २, ४३, २०) इत्यत्र तिलकटीकायां 'विद्यते' इत्यर्थः कृतः। भट्टि० (८, ६९) 'अकल्प्स्यद्द्युतिः सर्वा' इत्यत्र जयमङ्गलायाम् अभविष्यदित्यर्थः।

---

१. कल्पना=हस्तिसज्जना (अ० को० २, ८, ४२)। पञ्च क्लृप्ता महायज्ञाः—मनु० ३, ६९=अनुष्ठेयतया स्मृताः (मन्वर्थ०)।

१२–५. 'षट् त्रिंशांश्च चतुरः कल्पयन्तः' (ऋ० १० ११४, ६) इत्यत्र सोमप्रसङ्गात् पूरणार्थः। तथा च 'एतांश्चत्वारिंशत्संख्याकान् ग्रहान् कल्पयन्तः=सोमेन पूरयन्तः' इति सायणः। एवमेव 'विद्वान्येभिर्देवाँ ऋतुभिः कल्पयाति' इत्यत्राप्यापूरणमर्थः।

१२–६. एतस्य धातो रचनार्थः क्रियार्थो वा पूर्वं दर्शितः। इदानीं विधिविधानं वार्थो दर्श्यते। विधानं नाम व्यवस्थापनम्। मनु० (१, ११२) 'महायज्ञविधानं च श्राद्धकल्पं च शाश्वतम्' इत्यत्र कल्पशब्दस्यार्थो विधिरिति। एवमेव (द्र० ३, १४७)। यद्यप्यस्य धातोः करणार्थेनैवास्यार्थस्य गतार्थता, तथापि व्यवस्थापनार्थस्य वैशिष्ट्यादिह पार्थक्येन कृतं व्याख्यानम्। इत एव कारणाद् व्यवस्थाप्रधानं शास्त्रं कल्पशास्त्ररूपेण प्रथितम्। इयमेव व्यवस्था न्याये संवर्ते ब्रह्मणो दिने च दृश्यते। प्राकृतभाषायाम् (आचा० सू०, अ० १, २) अयमर्थः 'कप्पिय' इत्यत्र द्रष्टव्यः।

१२–७. अविधौ विधिना, अव्यवस्थायां व्यवस्थया सादृश्यप्रतीतिर्जायत इत्ययमेव विधिरूपोऽर्थः पश्चात् सादृश्यार्थजनको जातः। पाणिनिना तदर्थकः प्रत्ययो विहितः 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' (५, ३, ६७) इति सूत्रेण। नायमर्थो लभ्यत ऋग्वेदे। वाल्मीकीयरामायणे (२, २, २७) 'देवकल्पस्य' इत्यत्र देवसदृशस्येत्यर्थः। (रघु० ५, ४१) 'बभूवुरुद्यानविहारकल्पाः' इतीह कल्पाः=सदृशा इति मल्लिनाथः। प्राकृतभाषायां 'केवलकप्पं' इत्यत्रापि सदृशम् इत्यर्थः (आवम; पण्ह० २, २)। नूनमयमर्थः परतो विकासं प्राप्तः।

१२–८. प्रवर्तनरूपोऽर्थो वाल्मीकीयरामायणे (२, ६७, २७), महाभारतादौ (१२, ३२८, ८) च लभ्यते—

**नाराजके जनपदे माल्यमोदकदक्षिणाः।**
**देवताभ्यर्चनार्थाय कल्प्यन्ते नियतैर्जनैः॥**

यद्यपीह नानार्थाः कल्पयितुं शक्यन्ते दानादयः, तथापि तत्रैव चतुर्विंशे श्लोके वाल्मीकिनैवार्थो निर्णीतः—'नाराजके जनपदे योगक्षेमः प्रवर्तते' इति श्लोकयता। महाभारते (१२, ३२८, ८)—

**अवतीर्य महीं तेऽथ चातुर्होत्रमकल्पयन्।**
**संयोजयन्तो विप्रांश्च राजन्यांश्च विशस्तथा॥**

इत्यत्रापि चातुर्होत्रप्रवर्तनरूपोऽर्थः सुस्पष्टः।

१२–९. पालनार्थकोऽयं वाल्मीकीयरामायणे (२, ९१, ६५) एव लभ्यते—

**कुञ्जराश्च खरोष्ट्राश्च गोऽश्वाश्च मृगपक्षिणः।**
**बभूवुः सुभृतास्तत्र नातो ह्यन्यमकल्पयन्॥**

अकल्पयन्=अभुञ्जन् (तिलकः)।

१२–१०. वा० रा० (२, ५२, ६३) 'एष मे प्रथमः कल्पो यदम्बा मे यवीयसी' इत्यत्र रामचन्द्रोक्तौ प्रयोजनरूपोऽर्थो निर्विवादं ज्ञायते (तुल० महाभारते २, ४०, ३७ प्रयोगार्थे कल्पशब्दः)।

१२–११. महाभारते (५, ३६, ५७)—

**न वै तेषां स्वदते पथ्यमुक्तम्।**
**योगक्षेमं कल्पते नैव तेषाम्॥**

इत्यत्रौचित्यार्थकोऽयं धातुः। 'कल्पते=युज्यते' इति नीलकण्ठः। अयमर्थः प्राकृतभाषाया गच्छाचारपयन्नो (१) इति ग्रन्थे, व्यवहारसूत्रे (८) च लभ्यते 'कप्पिय' इत्यत्र। पंचासकप्रकरणे (१८, ३०) कप्पशब्दोऽप्युचितार्थकः।

१२–१२. षष्ठे प्रकोष्ठेऽस्माभिर्व्यवस्थार्थो दर्शितः। व्यवस्थार्थकोऽयं धातुः परतो निश्चयार्थको जातः। महाभारते (५, ३३, ५) 'अहं हि विदुरस्यास्य नाकल्पो जातु दर्शने' इत्यत्र कल्पशब्दोऽसंशयार्थकः।

१२–१३. रघु० (१०, ४५) 'अचिराद् यज्वभिर्भागं कल्पितं विधिवत् पुनः' इत्यत्र 'उपहृतम्' इत्यर्थो यज्ञप्रसङ्गाद् विज्ञेयः।

१२-१४. रघु० (१२, ४)—

**तस्याभिषेकसंभारं कल्पितं क्रूरनिश्चया।**
**दूषयामास कैकेयी शोकोष्णैः पार्थिवाश्रुभिः॥**

इत्यत्र कल्पितम्=संभृतम् इत्यर्थः संभारशब्दसाहचर्यात्।

१२–१५. मनु० (७, १२८) 'तथावेक्ष्य नृपो राष्ट्रं कल्पयेत् सततं करान्' इत्यत्र ग्रहणम्=स्वीकरणमर्थः। नैषध० (२१, १०) 'कल्प्यमानममुनाऽऽचमनार्थं गाङ्गमम्बु चुलुकोदरचुम्बि' इत्यत्रापि ग्रहणम्=स्वीकरणमर्थः।

प्राकृतभाषायां केचन नवीना अर्था उपलभ्यन्ते संस्कृतवाङ्मये दुर्लभाः—

१२–१६. कप्प=अधिवासः (बृह० १)।

१२–१७. कप्प=प्रक्षालनम् (पिंड० २६६; २७१; ३०५; गच्छ० २, ३२)।

१२–१८. कप्प=आचारः, व्यवहारः (वव० १; पव० ६९)।

इह प्रसङ्गतो भौवादिकस्य √कृप् < √क्रप् धातोः, चौरादिकयोश्च चिन्तन-दौर्बल्यार्थकयोर्धात्वोरर्था अपि परीक्ष्यन्ते। एतेषां त्रयाणां धातूनां विभागः कारण-वशात् कृतः। घटादौ कृपा-गत्यर्थकस्य पाठः षित्त्वार्थमिति 'षिद्भिदादिभ्योऽङ्' (३, ३, १०४) इति कृपाशब्दनिष्पत्तिः। अर्थोऽपि कृप् (कृपू) धातुवद् दृश्यते। ऋ० (१, ११३, १०) 'अनु पूर्वाः कृपते वावशाना' इत्यत्र 'अनुकृपते=अनुकल्पते=समर्था भवति' इत्यर्थः। 'वेनानामकृपन्त पूर्वीः' (ऋ० ९, ८५, ११) इत्यत्र 'उपकल्पन्ते' इत्यर्थः। एवं प्रकारेणेह कृपार्थको गत्यर्थको वा धातुः सामर्थ्यार्थे लभ्यते। अवल्कनार्थ-कस्य चिन्तनार्थकस्य वा चौरादिकस्य कृपधातो रूपाणि लकारविशिष्टान्येवेति तेषां सन्निवेशः पूर्वमेव कृतः, अर्थभेदश्च वर्णितः। दौर्बल्यार्थकश्चौरादिकः कृपधातुरदन्त इति तत्र 'कृपो रो लः' (८, २, १८) इति सूत्रं न प्रवर्तते। अतस्तस्य लत्वहीनानि कृपयतीत्यादीनि रूपाणि भवन्ति। तेषामर्थः सामर्थ्यमपि भवति।

अथेदानीं कृपा-(क्रपा)-नुपूर्वीकस्य धातोरर्था लिख्यन्ते—

'क्रक्षमाणमक्रपेताम्' (ऋ० ८, ७६, ११)=अनुकल्पयेताम् इति सायणः। 'गिरो वेनानामकृपन्त पूर्वीः' (ऋ० ९, ८५, ११)=उपकल्पन्ते (सा०)। 'उतो कृपन्त धीतयः' (ऋ० ९, ९९, ४)=कल्पयन्ति=समर्था भवन्ति (सा०)। 'मर्तानां चिदुर्वशीरकृप्रन्' (ऋ० ४, २, १८)=ताभिरानीताभिर्गोभिः क्लृप्ताः समर्था अभवन् (सा०)। 'अया कृपा न जीर्यति' (ऋ० १, १२८, २)=अनया सामर्थ्यलक्षणया कल्पनया (सा०)। 'देवो देववाच्या कृपा' (ऋ० १, १२७, १)=कृपया सामर्थ्यलक्षणया (सा०)। 'यं कृपा सूदयन्त इत्' (ऋ० ८, २३, ८)=स्वसामर्थ्येन (सा०)। एतेषु सर्वेषूदाहरणेषु सामर्थ्यार्थो लक्ष्यते। चतुर्थेऽनुच्छेदे प्रतिपादितोऽयमर्थः।

१२–१९. 'विश्वे देवा अकृपन्त' (ऋ० १०, २४, ५)=युवामस्तुवन् (सा०)। 'जानन्तो रूपमकृपन्त विप्राः' (ऋ० १०, १२३, ४)=स्तुवन्ति (सा०)। 'गिरो वेनानामकृपन्त पूर्वीः' (ऋ० ९, ८५, ११) इत्यत्रापि 'गिरः' इति प्रसङ्गाद् अभिष्टुवन्तोत्यर्थः। 'त्वं कृपा पावक रोचसे' (ऋ० ६, २, ६)=अभिमुखीकरणसमर्थया स्तुत्या (सा०)। 'कृपमाणमकृणुतं विचक्षे' (ऋ० १, ११६, ४)=स्तुवन्तम् (सा०)। 'अगच्छतं कृपमाणम्' (ऋ० १, ११९, ८)=स्तुवन्तम् (सा०)। एतेषु सर्वेषूदाहरणेषु स्तुतिरूपोऽर्थो लभ्यते। 'कृपणे परादात्' (ऋ० १०, ९९, ९) कृपणे=स्तोत्रे (सा०)।

'ज्योतिश्चकृपन्त धीभिः' (ऋ० ४, १, १४) इत्यत्र 'यज्ञमकुर्वन्' इति सायणः। यद्यपि सोऽत्र सामर्थ्यार्थकस्य कृपूधातो रूपमूरीकरोति, तथापि घटादिपठितस्य धातोर्ध्वनिरिह स्वीकर्तुमुचितः। 'कृपयतो नूनमत्यथ' (ऋ० ८, ४६, १६) इत्यत्र करोतेरर्थः। 'युद्धं कल्पयतः शत्रोः' इति सायणः। 'कृपनीलम्' (ऋ० १०, २०, ३) इत्यत्र कृपशब्दस्य कर्मार्थः।

१२–२०. 'बृहस्पतिनाकृपयद्वलो गाः' (ऋ० १०, ६८, १०) इत्यत्र 'प्रायच्छत्' इति सायणः। 'सर्वताता ये कृपणन्त रत्नम्' (ऋ० १०, ७४, ३)='प्रयच्छन्ति याचन्ते वा' इति सायणः।

१२–२१. दीप्त्यर्थकोऽप्ययम्। ऋग्वेदे (६, १५, ५) 'पावकया यश्चितयन्त्या कृपा' इत्यत्र कृपाशब्दस्तृतीयान्तो दीप्त्यर्थकः। 'कृपा तन्वा रोचमानः' (ऋ० ७, ३, ९)=दीप्त्या (सा०)। 'स्तवानो देव्या कृपा' (ऋ० ८, २३, ५) इत्यत्र देव्या=द्योतमानया कृपा=ज्वालयेत्यर्थः।

१२–२२. दैन्ये कार्पण्ये वा वृत्तिः—'कृपणम्' (पैसं० १९, ४१, ५)। तुल० सैंटपीटर्सवर्गसंस्कृतकोशप्रभृ०। वा० रा० (२, १२, ७२) 'कृपणं बत वैदेही' इत्यत्र कृपणशब्दस्य 'कष्टम्' इत्यर्थः। तत्रैव (२, ३२, २८) द्विजेभ्यो बालवृद्धेभ्यः कृपणेभ्यो ह्यदापयत्' इत्यत्र 'दीनेभ्यः' इत्याकूतम्। प्राकृतभाषायां खिप्पधातुर्दौर्बल्यार्थकः—खिप्पइ (संक्षि० ३५) इति।

१२–२३. दैन्यं दृष्ट्वा दयोद्भूत इति दयार्थकोऽयं जातः। कृपाशब्दो दयानुकम्पार्थकः प्रसिद्धः। घटादयः षितः। षित्त्वात् 'षिद्भिदादिभ्योऽङ्' (३, ३, १०४)।

कृपाणशब्दे कृपेति दयार्थकः। क्षीरस्वामी त्वेतस्य व्युत्पत्तिप्रसङ्ग आहामरकोशोद्घाटने—कल्पत इति कृपाणः। सुधायां भानुजिदीक्षितस्तु—'कृपां नुदति' इत्याह। वस्तुतस्तु कृपायाम् अणकः=कुत्सितः (तु० 'पापाणके कुत्सितैः'—पा० २, १, ५४) इति कृपाणः, कृपाणकः। ऋग्वेदे (१०, २२, १०) 'कार्पाणे शूर वज्रिवः' इत्यत्र कृपाणेन साध्ये युद्धे कार्पाणशब्दप्रयोगः।

१२–२४. दैन्याक्रान्ते याचनाभावना। कृपणशब्दस्य नामधातोर्याचनार्थः—'तत्तदग्निर्वयो दधे यथा यथा **कृपण्यति**' (ऋ० ८, ३९, ४)=स्तोतृभिर्याच्यत इति सायणः। तुल० 'सर्वताता ये **कृपणन्त** रत्नम्' (ऋ० १०, ७४, ३)।

१२–२५. तृतीयान्तस्य 'कृपा' इति धारार्थकस्याद्वितीयमुदाहरणम् ऋग्वेदे (९, ६४, २८) 'दविद्युतत्या रुचा परिष्टोभन्त्या कृपा। सोमाः शुक्रा गवाशिरः' इति। अस्मिन्नर्थे वैमत्यं दृश्यते व्याख्यातृणाम्। सायणेन तु धारार्थः कृतः, न तु दीप्त्यर्थः। 'दविद्युतत्या रुचा' इत्यनेन द्योतमानदीप्त्यर्थस्य प्रतिपादनात्, सोमानां प्रसङ्गाच्च 'कृपा' इत्यस्य धारयेत्यर्थः समीचीनः। सा च धाराऽऽकारोऽपि।

एवं तावत् पञ्चविंशतिरर्था अस्य धातोः। ते चेमे—१. करणम् (रचना, उत्पादनम्), २. छेदनम्, ३. सज्जा, ४. सामर्थ्यम्, ५. पूरणम्, ६. विधिः, ७. सादृश्यम्, ८. प्रवर्तनम्, ९. पालनम्, १०. प्रयोजनम्, ११. औचित्यम्, १२. निश्चयः, १३. उपहारः, १४. संभारः, १५. ग्रहणम् (स्वीकरणम्), १६. अधिवासः, १७. प्रक्षालनम्, १८. आचारः (व्यवहारः) १९. स्तवः, २०. दानम्, २१. दीप्तिः, २२. दैन्यम् (कार्पण्यम्), २३. दया, २४. याचना, २५. धारा चेति।

जूलियसपॉकर्नीमहोदयेन √*स्कॅल्(ऍ)प्–इति भारोपीयधातुर्दर्शितः। लातिनभाषायामेतस्यार्थद्वयी—'स्कल्पो'=लालसा गात्रविघर्षणं चेति। लिथुआनियाभाषायां दीप्त्यर्थकः—'स्क्लेम्ति'=दीप्तिः (घर्षणोज्ज्वलनम्)। अवेस्ताभाषायां क्लृप्त्यर्थकः—'हु-कॅरॅप्त' (hu kərəpta) <सुक्लृप्तम्। तत्रान्योऽप्यर्थो लभ्यते 'आकारः इति—हु-कृफस् (यस्न ९, १६) <सुकृप्=शोभनाकारः (पुरुषः)। अयं शब्द ऋग्वेदीयेन दीप्त्यर्थकेन कृप्-शब्देन तुलनीयः।

१३ § √कृष् (कृष) १/९७५ विलेखने (प)। अयं तौदादिकोऽपि वर्तते। एतेन धातुना करणार्थककृधातोः संबन्धो घनिष्ठः। विकरणाभावे लटो लोटश्च मध्यमपुरुषैकवचने 'कृषे' (ऋ० ८, ३२, ३; १०, ४९, ७; १०, ५०, ५) इत्यत्र, 'कृष्व' (ऋ० २, २३, १४) इत्यत्र चानुपूर्व्या कृष्धातोर्भ्रान्तिर्जायते। कृधातुवर्णनप्रक्रमे वर्णोपजनोदाहरणानि प्रस्तुतानि सन्ति, तानि तत्रैव विलोकनीयानि।

१३–१. इह √कृष्धातुर्विलेखनरूपस्यार्थस्य प्राधान्यं भजते। पाणिनिनापि प्रतिपादित एष एवार्थः। विलेखनमाकर्षणम्। ऋग्वेदे 'दिवि यवं वृकेण कर्षथः' (८, २२, ६) इत्यत्र 'पुनश्च तस्मै विलेखनं कुरुथः' इत्यर्थः। 'कृषन्नित्फाल आशितम्, (१०, ११७, ७) इत्यत्र च कृषिकरणरूपोऽर्थः। (तु० आख्यातच० २, ४,

१७२)। फालाद्याकर्षणेन कृषिकरणरूपमर्थं हित्वा केवलमाकर्षणार्थकोऽयं जातो धातुर्ऋग्वेदे 'दृतिं सु कर्ष विषितं न्यञ्चम्' (ऋ० ५, ८३, ७)–दृतिम्=मेघं वृष्ट्यर्थमाकर्षयेति तदर्थः।

एवमन्यत्रापि कृष्यन्तराकर्षणार्थे प्रयुक्त एषः—'गोधा तस्मा अयथं कर्षदेतत्' (ऋ० १०, २८, १०; ११) इति। 'कृष्णया बाधितो विशा'—ऋ० ८, ७३, १८= आकर्षया (सा०)। गीतायां (१५,७) 'प्रकृतिस्थानि कर्षति' इत्यत्रापि कृतिभिन्न-माकर्षणम् (द्र० शाङ्करभाष्यम्)। 'अनुत्वा रोदसी उभे क्रक्षमाणमकृपेताम् (ऋ० ८, ७६, ११)=शत्रून् विलिखन्तम् इत्यर्थः।

१३–२. कृषिभिन्नस्य विलेखनस्य प्रयोगादेव पश्चात्तन ऋग्वेदांशे कृषधातोः सगर्भ्यकर्मकप्रयोगोऽवाप्यते—'अक्षैर्मा दीव्यः कृषिमित्कृषस्व' (ऋ० १०, ३४, १३) **कृषिं कृषस्व'** इति कृषिशब्द इह स्पष्टप्रतिपत्त्यर्थमुपात्तो वेदितव्यः। आङ्गलभाषाया-मिदं 'कॉग्नेट आब्जेक्ट' इति कथ्यते। यथा—'ही रेन ए रेस्', 'आई ड्रीम्ट ए ड्रीम', 'राम फौट् ए गुड फाइट्'। इह 'रेस्' 'ड्रीम्' 'फाइट्' च तादृशानि कर्माणि येषां क्रिया अपि साधीयस्तदाकृतयस्तदर्थबोधिकाश्च। संस्कृतभाषायामेतादृश्यः क्रियाः स्वकीयमर्थं हित्वा क्रियासामान्यवाचककृधातोरर्थं प्रकाशयन्ति। यथा— 'युद्धं युद्धवान्', 'चितिं चितवान्' 'सृतिं सृतवान्' इत्यादयः। 'सहस्रशोऽसौ शपथा-नशप्यत' (भट्टि० ३, ३२) इत्यत्र यद्यपि √शप् धातुराक्रोशार्थकस्तथापि सगर्भ्यकर्मणा सहोपस्थितत्वात् क्रियासामान्यवाचकस्य कृधातोरर्थे प्रयुक्तः। 'हुत्वाऽग्नौ विधि-वद्धोमान्' (मनु० ११, ११९) इत्यत्रापि हुधातुः कृधात्वर्थको विज्ञेयः। एवमेव 'कृषिं कृषस्व' इत्यत्र 'कृषस्व=कुरु' इत्यर्थमाह सायणः।

१३–३. कृषिप्राधान्येन पश्चात् तन्मयी संस्कृतिर्जाता। कृष्या खलूत्कृष्टता-बोधो जायते स्म। ऋग्वेदे (१०, ५०, ५) 'त ओमात्रां कृष्टयो विदुः' इत्यत्र कृष्टि-शब्देन मनुष्य [1]ऋषिर्वा गृह्यते। 'दिवीव पञ्च कृष्टयः' (ऋ० १०, ६०, ४; ११, ११९, ६)=निषादपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः। यद्वा देवमनुष्यादयः (सा०)। 'शवसा पञ्च कृष्टीः (ऋ० १०, १७८, ३) इत्यत्र 'पञ्चविधान् कृष्टीन् मनुष्यान् प्रति' इति तदर्थः। शत्रूणां कर्षकत्वादपि कृष्टिशब्दप्रयोगः—'भरेभरे पुरोयोधा भवतं कृष्ट्योजसा' (ऋ० ७, ८२, ९) इति। लौकिकसंस्कृते विद्वदर्थकोऽयं जातः—'कृती कृष्टिर्लब्धवर्णो विचक्षणः' (अ० को० २, ७, ६)। यूरोपदेशेऽपि संस्कृतेर्विकासोऽजनि कृषिमास्थाय। लातिनभाषायां कुल्तूरशब्दो दृश्यते संस्कृतिवाचकः। स च कृष्यर्थकात् 'कुल्त' इति धातोर्व्युत्पन्नः। आङ्गलभाषायां कल्ट्, कल्टिवेट्-इत्यादयः शब्दाः सन्ति कृष्यर्थकाः। कल्चरशब्दस्तु विद्यते संस्कृत्यर्थकः।

१३–४. कृष्-धातोर्व्युत्पन्नस्य कृष्णशब्दस्य श्यामवर्णरूपोऽर्थो मननीयः। ऋग्वेदे (१, १४०, ३) 'कृष्णप्रुतौ वेविजे अस्य सक्षिता उभा तरेते अभि मातरा

१. तु० अयं वा कृष्णोऽश्विना (ऋ० ८, ८५, २)=कृष्णो नाम मन्त्रद्रष्टा ऋषिः। एवमेव ८, ८५, ४ इत्यादौ द्रष्टव्यम्।

शिशुम्' इत्यत्र सायणव्याख्या पर्यालोचनीया—'अस्य=अग्नेः, मातरा=मातृस्थानीये उत्पादयित्र्यौ, उभा=उभे अरण्याख्ये मातरौ, वेविजे=चलतः; **मथनोपक्रमे, कृष्णप्रुतौ=अग्निसंपर्कात् कृष्णवर्णतां प्राप्नुवत्यौ** प्रापयन्त्यौ वा भूमिं तथा, सक्षितौ= समानकार्यमग्न्युत्पादनं गच्छन्त्यौ, एवंभूते मातरौ' इति। इहाग्निसंपर्कात् कृष्णवर्णता प्रतिपादिता। अग्नेः सप्त जिह्वाः सन्तीत्थं प्रसिद्धाः—

**काली कराली च मनोजवा च**
**सुलोहिता चैव सुधूम्रवर्णा।**
**उग्रा प्रदीप्ता च कृपीटयोनेः**
**सप्तैव कीलाः कथिताश्च जिह्वाः॥** इति।

इह काली, सुलोहिता, सुधूम्रवर्णा चेति जिह्वात्रयी कृष्णवर्णं विवृणोति। अतिलोहितवर्णः खलु कृष्णतामुपैति। कालीत्यनेनाग्नेः कृष्णता सुस्पष्टा। पश्चादेषा कृष्णता धूमे समारोपिता। यद्यपि धूमस्य पर्यायः क्वापि नास्ति कृष्ण इति, तथापि नामलिङ्गानुशासने (१, १, ५४) 'कृष्णवर्त्मा' इत्यग्निपर्यायस्य व्याख्यायां क्षीरस्वामी—'कृष्णः=धूमो वर्त्माऽस्य' इति प्रतिपादयति। 'वृश्चद्वनं कृष्णयामं रुशन्तं वीती होतारं दिव्यं जिगाति' (ऋ० ६, ६, १) इत्यत्र तु वनस्य दग्धृत्वात् कृष्णवर्त्मा मः। 'अग्निः शोचिष्माँ अतसान्युष्णन्कृष्णव्यथिरस्वदयन्न भूम' (ऋ० २, ४, ७) इत्यत्र 'कृष्णवर्णं प्राप्ता दग्धा व्यथाकराः कण्टकादयो येन तादृशः सन्' इति कृष्णव्यथिपदस्यार्थः। दाहे सर्वेषां पदार्थानां जायते कर्षणमित्यग्नेर्मार्गस्य कर्षणरूपत्वादादौ स कृष्णवर्त्मा समाख्यातः (द्र० ऋ० १, १४०, ४; १, १४१, ७; ७, ८, २; ८, २३, १९)। पश्चाद् इङ्गालेषु धूमे वा सा समारोपिता श्यामतेति तादृशं वर्णं दृष्ट्वा तत्रापि कृष्णशब्दप्रयोगो विधीयते काकादिषु—'यत्ते कृष्णः शकुन आतुतोद' (ऋ० १०, १६, ६), 'कृष्णः श्वेतोऽरुषो यामः' (ऋ० १०, २०, ९), 'आ कृष्ण ईं जुहुराणो जिघर्ति'='कृष्णवर्णो मेघः' इति, 'कृष्णो नोनाव वृषभो यदीदम्' (ऋ० १, ७९, २)= 'कृष्णवर्णः, वृषभः=मेघः' इति। कृष्णवर्णत्वाद् रात्रेर्नामधेयं कृष्णीति वर्तते— 'रिणक्ति कृष्णीररुषाय पन्थाम्' (ऋ० ७, ७१, १) इतीह। तादृशवर्णत्वाद् राक्षसानामपीदमभिधानं लभ्यते—'यः कृष्णगर्भा' (ऋ० १, १०१, १); 'इयानः कृष्णो दशभिः सहस्रैः' (ऋ० ८, ९६, १३) इत्यादौ। पश्चात् स वर्णपरकः कृष्णशब्दो निकृष्टार्थको जातः—'स वृत्रहेन्द्रः कृष्णयोनीः' (ऋ० २, २०, ७)='निकृष्टजातीः' इत्यर्थं इति।

यूरोपीयासु कासुचिद् भाषासु नप्रत्ययविधुरा अपि शब्दा दृश्यन्ते। लिथुआनियाभाषायाः 'केर्शिस्' इति शब्दस्यार्थः कृष्णश्वेतचिह्नयुक्तम्' इति। 'केर्शे' इत्यस्य चार्थः—'चित्रवर्णा गौः' इति, 'केर्शिस्'=चित्रवर्णो वृषभः इति, 'केर्शुलिस्'= 'गोलकपोतः' इति। 'कृष्णप्रुतौ वेविजे अस्य सक्षिता' इति (१, १४०, ३) ऋग्वेदीयेनाभिप्रायेण लिथुआनियाभाषागतस्य 'किर्शिलस्' इति शब्दार्थस्य सुसंवादः। एत-

स्यार्थोऽस्ति—**'अग्नेर्भस्म'** इति। स्वीडिश्-नार्वे-भाषयोः 'हर्' इति शब्दोऽप्यग्नि-भस्मार्थकः। एँग्लो-सैक्सन्भाषायाम् –हेअर्ड-हर,, हेयर्ड्; नवीनोच्चजर्मनभाषायां हॉलैण्डभाषायां च 'हर्डर्, हेर्डर्' इति शब्दा वडवानलज्वालार्थकाः।

इदानीं तत्रत्यानामन्यासां भाषाणां शब्दास्तुलनीयाः। पुरातनप्रशन्-भाषायाम्—'किर्सनन्'=कृष्णम्; पु० बुल्गा०–क्रश्न (Crsnɐ) इति, कुरुवर्षीयभाषायाम्—'स्योर्येन' (Cerenɐ) इति, सेर्बो-क्रोटन्-भाषायाम्—'क्रन्' इति सर्वे कृष्णार्थकाः (द्रष्ट० इन्दो-गर्मनिशेस् ऐतिमोलोगिशेस् वर्तरबूख् इति कोशो जूलियस्पाकर्नीसंगृहीतः)। हिन्दो-रूसीशब्दकोशे वरान्निकोवसंपादिते कालिका-(श्यामता; कज्जल)-वाचकः 'कोलॉत' इति शब्दोऽपि तुलनार्हः।

१३–५. विलेखनं नामाऽऽकर्षणम्। फालाकर्षणपूर्वकं वापेन धान्योत्पत्तिः। उत्पादनरूपोऽयं परिणामः कृष्धातुनैव प्रकटीक्रियते। ऋग्वेदे (१०, ११९, ११) **'दिवि मे अन्यः पक्षोऽधो अन्यमचीकृषम्'** इत्यत्र 'उदपादयम् आस्थापयम्' इत्यर्थः।

१३–६. कृष्धातुर्विलेखनरूपं स्वकीयं विशिष्टमर्थं जहाति। विलेखने फालाकर्षणसादृश्येन कृष्यर्थत्यागपूर्वकं सामान्यं कर्षणं गृह्यते। मनु० (३, ६६)—

**मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि।**
**कुलसंख्यां च गच्छन्ति कर्षन्ति च महद् यशः॥**

'महद् यशः कर्षन्ति' इत्यत्र विलेखनरूपमुख्यार्थस्य बाधे यशःप्रसङ्गादन्योऽर्थो लक्ष्यते। यद्यपि महाभारतेऽयं श्लोको मनाग् विपर्यस्ततया पठितः[१], तथाप्य-न्तिमं पादद्वयं नास्ति भिन्नम्। तत्र 'कर्षन्ति च महद् यशः' इत्यत्र 'कर्षन्ति' इत्यस्यार्थोऽकारि नीलकण्ठेन 'आहरन्ति' इति। अयमर्थो धातोर्मूलार्थात् कामं भिन्नो नास्ति। कुल्लूकभट्टेन मनुस्मृतिटीकायामर्जनरूपोऽर्थः प्रतिपादितः—'अर्जयन्ति' इति। न भवत्याहरणं यशसः। नीलकण्ठकृत एषोऽर्थस्त्वाकर्षणस्य पर्यायतां दर्शयति। आदौ कीर्तनं तत आहरणमन्ततश्च समर्जनम्।

१३–७. कृषौ फालाऽऽकर्षणे विभिन्ना व्यापारा लक्ष्यन्ते। तत्र फालाऽऽकर्षणाद् भूदरविदारणरूपो व्यापारो लभ्यते। ततश्च पीडार्थः। तथा च मनु० (७, १११)—

**मोहाद् राजा स्वराष्ट्रं यः कर्षयत्यनवेक्षया।** इति
**तथा राज्ञामपि प्राणाः क्षीयन्ते राष्ट्रकर्षणात्**[२] ॥ ७, ११२।
**अवृत्तिकर्षिता हि स्त्री प्रदुष्येत् स्थितिमत्यपि।** ९, ७४।

इह सर्वत्र स्वार्थे णिज् बोध्यः।

१३–८. आकर्षणेनाग्रदेशस्य सामीप्यं पृष्ठदेशस्य च दवीयस्त्वम् इति नेदीयसि देशे भूभागसंकोचो निर्विवादम्। एष संकोच इतोऽन्यत्राऽऽरोप्यते। भगवद्गीतायां

१. वृत्ततस्त्वविहीनानि कुलान्यल्पधनान्यपि।
कुलसंख्यां च गच्छन्ति कर्षन्ति च महद् यशः॥ ५, ३६, २९।

२. कर्षणं भीषणं चैव युद्धे चैव बलक्षयम्—महाभार० १५, ७, ४।

(१५, ७) 'मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति' इत्यत्र कर्षतीत्यस्य संकोचयतीत्यर्थः कृतो नीलकण्ठेन। शाङ्करभाष्ये तु 'आकर्षति' इति।

१३–९. महाभाष्यकृता भगवता कृषेरर्थः प्रतिविधानरूप आख्यातः—'यदसौ भक्तबीजबलीवर्दैः प्रतिविधानं करोति स कृष्यर्थः। आतश्च प्रतिविधानेऽपि वर्तते' यदहरेवासौ न प्रतिविधत्ते तदहरेव तत् कर्म न प्रवर्तते' इति (महाभाष्ये ३, १, २६; ८८ पृ०)।

१३–१०. क्वचित् सादृश्येऽपि न भवति तादृशोऽर्थः। धनुष आकर्षणं भवति प्रत्यञ्चायाम्। तत्सादृश्यं भ्रुवोः कल्प्यते कविभिः। एवं सत्यपि तत्र तादृशमाकर्षणं न भवति। भट्टि० (११, २६)—

नेत्रेषुभिः संयुतपक्ष्मपत्रैः कर्णान्तकृष्टैरुरुकेशशूलाः।

इत्यत्र धनुषः साम्येऽपि कृष्टपदं विश्रामार्थपरम्, कर्षणरूपस्य तादृशव्यापारस्याभावात्। अत एव जयमङ्गलो व्याख्यत्—'कर्णान्तकृष्टैः=कर्णान्तविश्रान्तैः' इति।

१३–११. कृषौ विलेखनप्रसङ्ग उपतिष्ठमानेष्वनेकेषु व्यापारेषु हलादिकृतं खननमप्यन्यतमम्। शतपथब्राह्मणे (१, ८, १, ३; १३, ८, ३, १०) कर्षूशब्दः खातकस्य कुल्याया वा वाचकः (द्र० अ० को० ३, ३, २२१)। महाभाष्ये (६, १, १५९) हलरेखार्थे 'हलकर्षः' इति शब्दः लौकिके संस्कृते कर्षूशब्दो जीविकार्थे च प्रयुक्तः (द्र० अ० को० ३, ३, २२१)। वार्ताऽत्र कृषिरिति रमानाथः, जीविकेति भरतः।

१३–१२. क्रीडादिषु कृता रेखादयो भवन्ति लक्ष्यार्थकाः। आँग्लभाषायां तद् गोल (Goal) इति भण्यते। ऋग्वेदे (१, ११६, १७; ९, ३६, १; ७४, ८) काष्मर्शब्दो मूलतो हलरेखार्थकस्ततो लक्ष्यार्थको[1] जातः। सायणस्तु 'आ वां रथं दुहिता सूर्यस्य काष्मेवातिष्ठदर्वता जयन्ती' (ऋ० १, ११६, १७) इत्यत्र काष्मर्शब्दः काष्ठवाचीति प्रत्यपादयत्। अन्यत्र (ऋ० ९, ३६, १) तु स काष्मर्=युद्धमितरेतरकर्षणादिति व्याख्यत्। तन्मतानुसारेण स संग्रामो यज्ञाख्यः। इतरत्र (ऋ० ९, ७४, ८) तु स काष्मर्शब्दं काष्ठावचनम् आख्याति—'आजिं धावन्तो यां गन्तुमिच्छन्ति तस्यां काष्ठायाम्। सोमः काष्ठायाम्=द्रोणकलशे पततीत्यर्थः' इति।

१३–१३–मनु० (२, २१५) 'बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति' इत्यत्र देहाद् भिन्नमात्मानम् इन्द्रियग्रामोऽधरीकर्तुं नार्हतीति मुख्यार्थस्य बाधे सति प्रसङ्गात् पारवश्यरूपोऽर्थो लक्ष्यते। यतोऽतिबल इन्द्रियगणः शास्त्रनियमितात्मानमपि पुरुषं परवशं करोति।

१३–१४. महाभारते (१३, ९४, ३४)—

ग्रामे चाधिकृतः सोऽस्तु खरयानेन गच्छतु।
शुनः कर्षतु वृत्त्यर्थे यस्ते हरति पुष्करम्॥

---

१. द्रष्ट० रल्फ टी० एच्० ग्रिफिथ् : हिम्न्स् ऑव् दि ऋग्वेद।

इत्यत्र वहनं नयनं वार्थः। बुन्देलीयभाषायामेतदर्थकः 'कड़ोरबौ' इति धातुः। अस्यार्थः—कस्यचन वस्तुनस्तादृशं नयनं यत् तस्य कोऽप्यंशः पृथिवीं स्पृशन् गच्छेत्, कश्चिदंशश्च नेतुर्हस्तेऽङ्गान्तरे वा लग्नो भवेत्।

१३–१५. महाभारते (३, २७८, २१)—

**चकर्ष महदध्वानं रामस्तं बुबुधे ततः।**
**निशाचरं विदित्वा तं राघवः प्रतिभानवान्॥**

इत्यत्र कृष्धातुर्गत्यर्थकः। चकर्ष=चचालेत्यर्थः।

१३–१६. महाभारते (१, १५२, ३०)—

**अद्य गात्राणि ते कङ्काः श्येना गोमायवस्तथा।**
**कर्षन्तु भुवि संहृष्टा निहतस्य मया मृधे॥**

इत्यत्र कृष्धातुर्विदारणार्थः। कर्षन्तु=विदारयन्त्वित्यर्थः। निहतस्य प्राणिनो गात्राणि श्येनादयो विदारयन्ति।

१३–१७. महाभारते (३, ६१, ११)—

**पीड्यमानः क्षुधा तत्र फलमूलानि कर्षयन्।**
**प्रातिष्ठत ततो राजा दमयन्ती तमन्वगात्॥**

इत्यत्र स्वार्थे णिजन्तः कृष्धातुस्त्रोटनार्थकः। कर्षयन्=त्रोटयन्नित्यर्थः।

१३–१८. कर्षणाधारेण भिन्नभिन्नानां पदार्थानां संज्ञा क्रियते। मासं० (६, २८); कसं० (२, १६) कर्षिः (पाभे० कार्षिः) इत्याज्यवाचकः[1]। **कर्षः**=१. षोडशमाषकपरिमाणम् (कर्षः>खरोंच–हिं०), २. विभीतकवृक्ष इति शब्दरत्नावली; कर्षणिः='असती' इत्युणादिकोषः। (कर्षणी) कर्षिणी वा=१. क्षीरिणीवृक्षः, २. खलीनः। महाभाष्ये (३, १, २६) 'दृश्यन्ते कंसकर्षण्यश्च' इत्यत्र कर्षणीशब्दो रज्जुवाचकः। बुन्देलीयभाषायां 'कसन' इति व्यपदिश्यते। कर्षणी=पतद्ग्रह इति (द्र० अमरकोषोद्घाटने २, ६, १३९)। मनःकर्षणात् कर्षिणीशब्दो मनोहारिण्यर्थकः (अयं त्रिलिङ्गः)। रघुवंशे (१९, ११) 'घ्राणकान्तमधुगन्धकर्षिणीः पानभूमिरचनाः प्रियासखः' इत्यत्र तादृशोऽर्थः।

१४. § √कॄ ६।१२८ विक्षेपे (प)। करणार्थककृधातोरत्र संक्रान्तिः, चकार, करिता, करिष्यति, अकारीदित्यादौ 'कर्' इत्यस्योपलम्भात्। 'यो अश्वस्य दधिक्राव्णो अकारीत् समिद्धे अग्ना उषसो व्युष्टौ' (४, ३९, ३) इत्यत्रर्ग्वेदे दधिक्राव्णः=देवस्य (स्तुति-)प्रसङ्गेऽकारीदित्यस्याकार्षीदित्यर्थः। यद्यपि 'सर्वे विधयश्छन्दसि वैकल्पिकाः' इति सिजभावे सति रूपमिदं कृधातोर्भवितुमर्हति, तथापि प्रथमप्राप्तस्य कॄधातोरकारीद् इति रूपस्य दर्शनादर्थस्य संगतत्वाच्च कॄधातोरेव स्वीकर्तव्यं रूपं तदिति।

---

१. कृषायवः (पैसं० ९, ६०, ११)=अनड्वहः।

१४–१. मूलतोऽयं विक्षेपणार्थकः। किरणानां प्रक्षेपणं प्रसिद्धम्। ऋ० (१०, २७, ५) 'किरणः समेजात्' इत्यत्रान्तर्णीतमत्वर्थत्वाद् आदित्योऽर्थः किरणस्य 'यां मिहमकिरत्' (ऋ० १, ३२. १३) इत्यत्र वृष्टेः प्रक्षेपणमभिहितम्[1]। प्रक्षेपणं गतिविशेषः।

१४–२. 'गामश्वं रथ्यमिन्द्र सं किर' (ऋ० ६, ४६, २) इत्यृग्वेदे दानमर्थः कृधातोः, गोरश्वस्य च प्रक्षेपणं नाम दानम्। परहस्तगमनरूपो गतिविशेषः सोऽपि। एवमेव 'आ यथा मन्दसानः किरासि नः' (ऋ० ८, ४९, ४) इत्यत्रापि दानमर्थः; 'नः= अस्मभ्यं यजमानेभ्यः' इति चतुर्थीविभक्त्युपादानात्।

१४–३. प्रशंसायाः करणम्=किरणं नाम स्तुतिः। कथनादौ मुखाद् वायोः प्रक्षेपणं भवत्येव। 'ध्रुवासो अस्य कीरयो जनासः (ऋ० ७, १००, ४) इत्यत्र 'कीरयः=स्तोतारः' इति स्तवनमर्थः कृधातोः। एवमेव 'कीरिश्चिद् हि त्वा हवते (ऋ० ६, ३७, १) इत्यत्रापि स्तुतिकर्तृत्वेन भरद्वाजः प्रोच्यते। अस्मादेव विक्षेपणार्थकात् कृधातोः संशब्दनार्थकस्य √कृत् धातोर्विकासो निश्चेयः, तकारोपजनस्यानेकत्र दर्शनात्। √कृ+त्=√कृत्(कृती)छेदने। करणार्थककृधातोर्हिंसार्थस्तत्रैव द्रष्टव्यः।

१४–४. कीर्यते(=श्रूयते ?)शब्दोऽस्मिन्निति कर्णः (ऋ० ६, ७५, ३; १०, ८०, ३)। (उणा० ३, १०) इति 'न' प्रत्ययः कृधातोः। चुरादौ तु भेदनार्थस्य √कर्ण्[2] इति धातोः पाठः।

१४–५. 'दिशश्च पुष्पैश्चकर्विचित्रैः' (भट्टि० ३, ५) इत्यत्र च्छादनमर्थः कृधातोः, तृतीयान्तपुष्पशब्देन तथैव प्रतीतेः।

१४–६. 'दृष्ट्यैव चित्तप्रशमं किरन्तम्' (भट्टि० १२, १) इत्यत्र जयमङ्गलः 'किरन्तम्=प्रकाशयन्तम्' इत्याह, चित्तप्रशमस्य दृष्टवस्तुवद् विकिरणाभावे प्रकटनरूपस्यार्थस्य सङ्गतत्वात्। एवमेव कथनमपि वाण्याः प्रकाशनमात्रम् इति नैषधकारेण प्रकटनार्थे 'कथयेत्' (३, ५९) इति प्रयोगो व्यधायि।

१४–७. प्राकृतभाषायामेष प्रसारणार्थकोऽपि (सेतुबन्ध० ४, ५८; १४, ५७)।

१४–८. विक्षेपणस्य सूक्ष्मा भवन्ति विविधाः प्रकाराः। बाणवृष्टिः, वृष्टिः, जलसेचनम्, पुष्पाणां विकिरणमित्यादयः सर्वे भावा भवन्ति प्रकाशिता विक्षेपणार्थकेन कृधातुना। 'किरञ्छरसहस्राणि पर्जन्य इव वृष्टिमान्' (महाभार० ४,५८,७३), 'किरन्तमेव स शरान् ददृशे पावकाशनिः' (महाभार० १४, ७४, १८) इत्यादिना बाणवृष्टिः; 'तत्र सागरगा ह्यापः कीर्यमाणाः' (महाभार० ३, १४३, २०), 'वारिधरस्य वारि किरतः' (अमरु० ११) इत्यादिना वृष्टिः, 'किरद्भिरिव तत्रस्थान् नागान् पुष्पाम्बुवृष्टिभिः' (महाभार० १, २७, ७) इत्यादिना पुष्पादिविकिरणभावा व्यक्तीभवन्ति। हिन्दीभाषायां

१. तुल० 'मृदु तस्य मुदेऽकिरद् गिरः'—नैष० २, ५०=उवाच।

२. तुल० 'किरतौ लवने' (पा० अ० ६,१,१३६)। 'हिंसायां प्रतेश्च' (पा० अ० ६,१,१३७)।

शूर्पोत्पवनार्थे √'केराना' इति क्रियोपलम्भः। अस्यां क्रियायां शूर्पान्दोलनपूर्वकं तत्रत्यमन्नं तथा विकीर्यते तत्रैव, यथा महल्लघुकणविभागः स्यात्।

भारोपीयभाषायां √*(स्)केर्–, (स्) केर्‌–, स्क्रे[1] इति मूलधातुः। तदर्थश्च–उच्छालनम्, सर्वतश्चोत्कूर्दनम् इति। आसेतनभाषायां 'क़लिन' (Kalin) इत्यस्यार्थो भवति [2]राशिरिति।

१५. § √क्रम् (क्रमु) १/४६९ पादविक्षेपे (प)। गतिविशेषोऽयम्। सीमिता गतिः सा पादविक्षेपणार्थिकैव। तेन 'ये ये गत्यर्थास्ते ते ज्ञानार्थाः' इति सामान्य-गत्यर्थभावान्नैष ज्ञानार्थ उपलभ्यते क्वचित्।

१५–१. ऋ० (८, ६३, ९) 'उरु क्रमिष्ट जीवसे' इत्यत्र क्रम्धातोः पदनिधान-रूपोऽर्थः। 'उरु क्रमिष्टोरुगायाय जीवसे' (ऋ० १, १५५, ४) इत्यत्रापि स एवार्थो विक्रमणरूपः। श्रीमद्भागवतपुराणे (८, १०, २१) 'पृष्ठे त्वधर्मं क्रमणेषु यज्ञम्' इत्यत्र पादविक्षेपोऽर्थोऽवगन्तव्यः।

चरणार्थे पदार्थे वायं प्रयुज्यमानो लभ्यत ऋग्वेदे—'द्वे इदस्य **क्रमणे**' (ऋ० १, १५५, ५) इति। मनु० (१२, १२१) 'मनसीन्दुं दिशः श्रोत्रे, क्रान्ते विष्णुं बलं हरेत्' इत्यत्र क्रान्तशब्दश्चरणवाचकः।

१५–२. ऋ० (२, ११, ८) 'मातृभिर्वावशानो अक्रान्' इत्यत्र क्रमधातोरर्थः—इतस्ततः संचारकरणम् इति। इतस्ततो भ्रमणार्थको महाभारतेऽयं प्रयोगो लभ्यते 'नागः प्रभिन्न इव नड्वलेषु चङ्क्रम्यते कच्चिदेनं स्मरन्ति' इति (५, २३, २३) इतस्ततो गमनार्थे भट्टिप्रयोगः (८, २५) 'क्रममाणैर्निशाचरैः' इति।

१५–३. एष धातुः क्रमणे गमनेऽर्थे वा दृश्यते—'अक्रान् देवो न सूर्यः' (ऋ०, ९. ६४, ९) इति, 'हरिरक्रान्' (ऋ० ९, ६९, ३) इति, क्रमणाय (ऋ० ६, ७०, ३) इति च। भट्टि० (९, २३) 'हत्वा रक्षांसि लवितुमक्रमीत्' इत्यत्र 'अक्रमीत् = गतवान्' इति जयमङ्गलः। गोक्रमणात् (भूशुद्धिः) इति याज्ञ० (१, १८८)।

१५–४. 'सोमासो राये अक्रमुः' (९, १०, १) इत्यृग्वेदे क्रम्धातोरर्थः आगमनम् इति।

१५–५. 'आ' इत्युपसर्गपूर्वकस्य क्रम्धातोराक्रमणरूपोऽर्थः प्रसिद्धः, न तूप-सर्गमन्तरा। यद्यप्युपसर्गा द्योतका एव भवन्तीति धातूनामेव ते तेऽर्था भवन्ति न तूपसर्गाणाम्, तथापि प्रायस्तेषां साहाय्येन प्रकटयन्ति धातवस्तथार्थान्। ऋ० (१०, ७७, २) 'आदित्यासस्ते अक्रा न वावृधुः' इत्यत्र 'अक्राः' = 'आक्रमणशीलाः' इत्यर्थः। रघु० (१, १४) 'क्रान्त्वा मेरुरिवात्मना' इत्यत्र 'आक्रम्य' इति मल्लिनाथः। रघु० (१४, १७) 'संकल्पमात्रोदितसिद्धयस्ते क्रान्ता यथा चेतसि विस्मयेन' इत्यत्र

---

१. संस्कृतभाषायाम् 'अवस्करः' इत्यत्र 'स्कर्' इति लभ्यते।

२. संस्कृतभाषायाम् 'उत्करः' इति शब्दो राश्यर्थकः।

'क्रान्ताः=आक्रान्ताः' इति (संजी०)। 'लोकः सर्वाश्रयः **क्रमः**' (महाभार० १३, १७, १२९) इत्यत्र सर्वाक्रमणाद् रुद्रस्य नामधेयं क्रम इति। महाभार० (१३, १४९, २२) 'मेधावी विक्रमः क्रमः' इत्यत्र त्रिपादेन सर्वाक्रमणाद् विष्णोर्नामधेयं क्रम इति।

१५–६. अत्युपसर्गपूर्वकस्य क्रम्धातोरतिक्रमणरूपोऽर्थ उपसर्गमन्तरैव दृश्यत ऋग्वेदे (९, ९७, ४०) 'अक्रान्त्समुद्रः' इत्यत्र।

१५–७. पादविक्षेपणेन प्रवर्तनरूपस्यार्थस्य प्रक्रमः। ऋ० (१०, १२३, ३) 'चक्रमाणाः' इत्यस्य 'प्रवर्तमानाः' इत्यर्थो व्यधायि सायणेन। महाभारते (१३, ८३, ४०) 'न तत्र क्रमते मृत्युर्न जरा न च पावकः' इत्यत्र क्रम्धातोः प्रवृत्तिरूपोऽर्थो विज्ञातव्यः। महामुनिपाणिनिना 'वृत्तिसर्गतायनेषु क्रमः' (१, ३, ३८) इति सूत्रेण वृत्त्युत्साहवृद्ध्यर्थेषु विहितमात्मनेपदं क्रम्धातोः। तत्र सूत्रे वृत्तिरप्रतिबन्धः। स च प्रवृत्तिरेवेत्यृग्वेदे महाभारते चोभयत्र लभ्यत आत्मनेपदम्। 'क्रममाणोऽरि संसदि' इति भट्टिकाव्ये (८, २२) 'अप्रतिबन्धेन प्रवर्तमानः' इति जयमङ्गलः।

१५–८. एकतस्तु पादविक्षेपणस्य लाक्षणिकोऽर्थः—प्रवर्तनमिति, अपरतश्चोत्साह इति। उत्साहसूचकं पादविक्षेपणं विघ्नबहुलक्षेत्रे प्रतीति क्रम्धातोरुत्साहरूपोऽर्थः। ऋ० (१, १२१, १) 'प्र यदानड्विश आ हर्म्यस्योरु **क्रंसते अध्वरे** यजत्रः' इत्यत्र 'क्रंसते=क्रमते, स्वयमेवोत्सहते' इत्यर्थः। उत्साहार्थे विद्यमानस्य क्रम्धातोरात्मनेपदं विधीयते 'वृत्तिसर्गतायनेषु क्रमः' (१, ३, ३८) इति पाणिनीयेन सूत्रेण। 'कष्टाय क्रमणे' (३, १, १४) इति पाणिनीये सूत्रे 'क्रमणे' इत्यस्यार्थः 'उत्साहे' इति।

१५–९. उत्साहस्ततोऽप्रतिबन्धेन प्रवृत्तिस्ततश्च वृद्धिरिति। क्रमते (आ० च० १, १, ११; ३, ३, ७०) वृद्धाविति भट्टमल्लः।

१५–१०. उत्पूर्वकस्य क्रम्धातोरुत्क्रमणमर्थः। उत्क्रमणम्=उपरिगमनम्, उल्लङ्घनम् उत्पतनं वा। उपसर्गाद् ऋतेऽपि दृश्यत उल्लङ्घनरूपोऽर्थः—

**सागरक्रमणे मन्त्रं मन्त्रयामः परन्तप!**
**नाध्यवास्यद् यदा कश्चित् सागरस्य विलङ्घनम्॥**

—महाभार० ३, २८२, ५८।

हनूमद्भीमसेनयोः संवादे भीमो हनूमन्तमाह महाभारते (३, १४७, ९)—

**'क्रमेयं त्वां गिरिं चैव हनूमानिव सागरम्'** इति।

कृष्णस्य स्तवनप्रसङ्गेऽर्जुनस्तमाह महाभारते (३, १२, २६)—

**शिशुर्भूत्वा दिवं खं च पृथिवीं च परन्तप!**
**त्रिभिर्विक्रमणैः कृष्ण! क्रान्तवानसि तेजसा॥** इति।

१५–११. भट्टि० (२, ९) 'क्रमं बबन्ध क्रमितुं सकोपः' इत्यत्र क्रम्धातोरुत्पतनमर्थः।

१५–१२. यद्यपि क्रम्धातोः पादविक्षेपणमर्थस्तथापि सगोत्रीये कर्मणि (कॉग्नेट ऑब्जेक्ट) तस्य क्रियासामान्यवाचकता जायते। यथा भागवतपुराणे (३, १६, २)—

एतौ तौ पार्षदौ मह्यं जयो विजय एव च।
कदर्थीकृत्य मां यद्वो बह्वक्रातामतिक्रमम् ॥ इति।

१५–१३. 'कल्पे विधिक्रमौ' इत्यमरात् क्रमशब्दः कल्पार्थकः। क्रमः=क्रमणम्। अयमेव क्रमो नाम विधिः।

१५–१४. क्रमः=अनुक्रमः=पर्यायः। अनूपसर्गमन्तराऽनुक्रमरूपोऽर्थ इह व्यज्यते। रघु० (११, २४) 'लोकमन्धतमसात् क्रमोदितौ' इत्यत्र क्रमशब्दः पर्यायवाचकः। मेदिनीकोशे (मे ४) 'क्रमश्चानुक्रमे शक्तौ कल्पे चाक्रमणेऽपि च' इत्यत्र क्रमशब्दस्य चत्वारोऽर्थाः प्रदर्शिताः।

१५–१५ मेघदूते (उ० ४६) 'नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण' इत्यत्र क्रमशब्दः परिपाटीवाचकः, अनुक्रमेण परम्पराबोधात्। एवमेवान्येऽर्था अपि बोद्धव्या गवेषणेन।

१५–१६. प्राकृतभाषायां संस्कृतभाषातिरिक्ताश्चत्वारोऽन्येऽर्था लभ्यन्ते—१. प्रसरणम्, २. सत्ता (विसे० २४६); ३. संगतिः, ४. आधिक्यं च—'कमइ' (पिंड. २३१; पव. ६१) इति।

एवं तावद् एकोनविंशतिरर्था दृश्यन्ते क्रम्धातोः—१. पदनिधानम् (पादविक्षेपः), २. इतस्ततो भ्रमणम्, ३. गमनम्, ४. आगमनम्, ५. आक्रमणम्, ६. अतिक्रमणम्, ७. प्रवर्तनम्, ८. उत्साहः, ९. वृद्धिः, १०. उल्लङ्घनम्, ११. उत्पतनम्, १२. करणम्, १३. विधिः (कल्पः), १४. पर्यायः, १५. परिपाटी, १६. प्रसरणम्, (१७. सत्ता, १८. संगतिः, १९. आधिक्यम्) चेति।

१६. § √क्रुश् (क्रुश) १/८४१ आह्वाने रोदने च (प)। √कु+√रु+√शंस् (स्तुतौ) इत्येतेषां त्रयाणां धातूनां संक्रान्तिरिह लक्ष्यते। एते त्रय एव शब्दार्थकाः। यद्यपि शब्दार्थकस्य √कु इति धातोः, रोषार्थकस्य √रुष् (श्) इति धातोश्च संयोगेनैष क्रुश्धातुर्निष्पन्नो भवितुमर्हति; रोषश्च हिंसायां परिणमते, तथापि कातन्त्रधातुपाठस्य चुरादिगणे √क्रुंश् (१६५ P) धातोरवाप्तिः √कु+√रु+√शंस् इत्येतेषां संक्रमणं पुष्णाति। एवं तावत् √क्रुश्धातोः क् [कु] इत्यंशो रोदनम् [तुल० कुररशब्दः], रुश् इत्यंशश्चाऽऽह्वानं व्यनक्ति। आह्वानं च द्वेधा—रक्षार्थम्, युद्धार्थं वेति। 'कृष्णश्चाणूरमाह्वयते' इत्यत्रत्यमाह्वानं स्पर्धासूचकम्। इह प्राधान्यतो लक्ष्यते रोषः।

अवेस्ताभाषायामेष संस्कृतभाषावदाह्वानक्रन्दनार्थयोः प्रयुक्तः—'क्सुरओसइति' इति। भारोपीयमूलधातुरस्ति—√*(स्)क्(ऑ)रौक्—जू० पाकर्नीः।

१६–१. ऋ० (१०, २७, १८) 'क्रोशनासः' इत्यत्र प्रजापतेराह्वानमर्थः। 'इन्द्रं क्रोशन्तोऽविदन्नना मधु' (ऋ० १०, ९४, ४) इत्यत्रापि 'इन्द्रम् आह्वयन्तः [एते

ग्रावाणः]' इत्यर्थः। 'अनु क्रोशन्ति क्षितयो भरेषु' (ऋ० ४, ३८, ५) इत्यत्र 'तद्वैरिणोऽनुक्रोशन्ति' इत्यर्थः। इहानुक्रोशे स्पर्द्धात्मकमाह्वानं लक्ष्यते। धातुरूपेषु नोपलभ्यते क्वापि रोदनमर्थः। 'रुदती च क्रोशन्ती' (१,५४,७) इत्यत्र वाल्मीकीये रामायणे [क्रुष्टाः (९, ७, ९) इत्यत्र च महाभारते (=आहूताः-नील०)] √रुद् इति धातोः पार्थक्येन कृतः प्रयोग इति रोदनार्थः पश्चात्तनो ज्ञायते। वस्तुत इमावर्थौ क्रमिकौ सन्तावपि निर्भरं संक्रान्ताविति सरलतया विश्लेषणं तयोर्दुःशकम्। रक्षार्थक आह्वाने क्रन्दनस्य संसर्गो नैसर्गिकः। आह्वानस्य तनीयानपि परिवर्तितो भावः क्रन्दनाय कल्पते।

क्रोशनं नाम 'हा पितर्भ्रातरनाथाहं ह्रिये' इत्येतादृशं क्रन्दनम्। मनु० (३,३३) 'हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं गृहात्' इत्यत्र कुल्लूकभट्टेन कृतं तादृशं व्याख्यानम्। अव्यक्तशब्दादिष्वप्यस्य प्रयोगो वाल्मीकीयरामायणे (२, ५६, ९) 'एष क्रोशति दात्यूहस्तं शिखी प्रतिकूजति' इति। महाभारते—

उदक्रोशन् परित्रस्तास्तारप्रभृतयस्तदा।
तानुच्चैः क्रोशतः सैन्यान् श्रुत्वा स हरियूथपान्॥ ३, २८७, ७।
मयैषा तपसा प्राप्ता क्रोशतस्ते जलाधिप।
इत्युक्त्वा तामुपादाय स्वमेव भवनं ययौ॥ १३, १५४, ३१।

इत्यत्र प्रथमे श्लोके क्रोशनेन सह 'उच्चैः'-शब्दप्रयोगः स्यात् स्पष्टार्थः, आह्वाने तारस्वरस्य प्राधान्यात्। द्वितीये श्लोके तु वाल्मीकीयरामायणवदव्यक्तशब्दकारिणः समुद्रस्य क्रन्दनेऽस्य प्रयोगः।

१६–२. महाभारते (१३, ३४, २५) 'अथ यो ब्राह्मणान् क्रुष्टः पराभवति सोऽचिरात्' इत्यत्र 'क्रुष्टः' इत्यस्य 'रुष्टः' इत्यर्थः इत्यनेन रोषोऽभिव्यज्यते। एवं तावदिह धातौ √रुश् (ष्)-धातोः संक्रमणस्य नूनं पुष्टिः।

१६–३. ऋ० (१०, १४६, ४)—

गामङ्गैष आह्वयति दार्वङ्गैषो अपावधीत्।
वसन्नरण्यान्यां सायमक्रुक्षदिति मन्यते॥

'सायंकाले=रात्रौ, अरण्यान्याम्=महारण्ये निवसन् मनुष्यो नानाविधं पक्षिमृगादिशब्दं शृण्वन्, अक्रुक्षत्=कश्चित् तस्करादिः आक्रोशति, इति भीतः सन् मन्यते' इति प्रासङ्गिकोऽभिप्रायः। रात्रौ महारण्येऽसहायो मनुष्यो भयात्[1] परुषवचनानि वदति, शापं (=गालिदानं) च करोत्येव। ऋग्वेदीयोऽयमेव प्रयोगो धातोरस्य रोदनार्थे मूलम्। 'क्रोष्टा वराहं निरतक्त कक्षात्' (ऋ० १०, २८, ४) इत्यत्र सुस्पष्टं क्रोष्टा=शृगाल इति। तस्य च 'फे' इत्यव्यक्तशब्दपूर्वकं रोदनं प्रसिद्धमेव (तुल० फेरुफेरवशब्दौ)।

---

१. तुल० 'यतो यदि क्लोशमनु ष्वणि'—ऋ० ६, ४६, १४–क्लोश इति भयनाम।

भयपूर्वक आह्वाने विह्वलतयाऽश्रूण्यपि मुञ्चति मानव इति क्रुश् धातू रोद-नार्थकः। महाभार० (१, १२६, २९)—

चुक्रुशुः पाण्डवाः सर्वे भीष्मः शान्तनवस्तथा।
विदुरो ज्ञातयश्चैव चक्रुश्चाप्युदकक्रियाः॥

इत्यत्र √क्रुश् धातू रोदनार्थः। लोकेऽपि मृतसंबन्धिनो रोदनेन सह तस्य नाम-ग्राहमाह्वानमपि कुर्वन्ति। तत् 'आह्वानपूर्वकं रोदनम्' नाम। इहापि खलु विवादः— लोके रोदनपूर्वकमाह्वानम् उत वाऽऽह्वानपूर्वकं रोदनमिति।

१६–४. हिन्दीभाषायां √कोसना इति धातुर्दुर्वचनार्थकः (शापार्थकः)। संस्कृतभाषायां त्वाङ्पूर्वकस्य क्रुश्धातोरेतादृशोऽर्थः, न तु तद्विकलस्य—'शापाक्रोशौ दुरेषणा' इत्यमरः। हिन्द्यामयमर्थविस्तारः। बुन्देलीयभाषायां √खुंस (बौ०) [<√खुंस अक्कोसे—धातुमञ्जरी ८६७ (पालिधातुः), धातुपा० ६२५; <√क्रुंश्— कातन्त्रे १६५<√क्रुश्] इति धातुर्नाम क्रोधार्थे प्रयुज्यते।

१७ § √क्षिप् (क्षिप) ६/५ प्रेरणे (उ)। निवासगत्यर्थकस्य √क्षिधातोः संक्रान्तिरिह विज्ञेया। पकारस्योपजनताऽन्यत्रापि लभ्यते—√कृप्, √रुप्, √लुप् इत्यादिषु।

१७–१. ऋ० (४, ४०, ४) 'क्षिपणिम्' इत्यत्र क्षेपणमर्थः। 'क्षिपः' (ऋ० ३, २३, ३) इत्यत्र 'अङ्गुलयः' इत्यर्थः, क्षिप्यन्ते कर्मकरणार्थमिति व्युत्पत्तेः। 'क्षिप्ता जूर्णिर्न वक्षति' (ऋ० १, १२९, ८) इत्यत्र जूर्णिः=सेना, क्षिप्ता=प्रेरितेत्यर्थः।

१७–१. (क) प्रेरणमिदं विविधं भवति। व्युत्पत्त्यनुसारेण शस्त्रं तथा न प्रेर्यते यथा खल्वस्त्रम्। हस्तावलग्नमेव शस्त्रं शत्रोः शिरःकर्त्तनाय प्रभवति, अस्त्रं तु प्रक्षिप्तं सत् तथा कर्तुं पारयति। इह क्षिप्धातोर्विविधाः प्रयोगाः प्रस्तूयन्ते तथाविधाः—

(अ) धनुषो ज्यायाः सकाशाद् इषुक्षेपणे—ऋ० (१०, ५१, ६) 'गौरो न क्षेप्नो-रविजे ज्यायाः' इत्यत्र 'क्षिप्नुः=इषुक्षेप्ता' इत्याकूतम्। ऋ० (४, ५८, ६) 'मृगा इव क्षिपणोरीषमाणाः' इत्यत्र क्षेपकाद्=व्याधाद् इत्यर्थः। वा० रा० (१, ५६, ६) 'ऐषीकं चापि चिक्षेप कुपितो गाधिनन्दनः', महाभार० (४, ३३, ३०) 'सुशर्मा सायकां-स्तीक्ष्णान् क्षिपते च पुनः पुनः', वा० रा० (१, ३०, १७) 'चिक्षेप परमक्रुद्धो मारीचो-रसि राघवः' इत्यत्र बाणप्रेरणम्। 'तं क्षिपन् योजनं मृतम्' इति भट्टि० (६, ११५) 'प्रेरयन्' इति जयमङ्गलः।

(आ) भुजचरणादिप्रेरणेऽप्येष दृश्यते—'भुजांश्च पीनानभितः क्षिपन्ती' (वा० रा० ५, ११, ११ सैण्ट पीटर्स०), 'चरणौ क्षिपन्ती' (मृच्छक० ९, १९) इति। शरीरस्थं सदपि भुजचरणं क्षिप्यते प्रेर्यत इत्यर्थः। हरिवंश०[1] (२, ३०, ३३) 'क्षेपणैः' इत्यस्य 'आस्फालनैः' इत्यर्थमाह नीलकण्ठः कृष्णचाणूरयोर्मल्लयुद्धप्रसङ्गे।

---

१. तावुभावपि संश्लिष्टौ यथा शैलमयौ तथा। क्षेपणैर्मुष्टिभिश्चैव वराहोद्भूतनिःस्वनैः॥

१७–२. मौर्व्या धनुष्कोटावायोजने क्षिप्धातोर्व्यवहारः—ऋ० (४, २७, ३) 'क्षिपज्ज्यां कृशानुरस्ता मनसा भुरण्यन्' इत्यत्र 'ज्यां (धनुषः कोटौ) मौर्वीं क्षिपत्=चिक्षेप' इत्यर्थः।

१७–३. ऋ० (१०, १८२, १–३) 'क्षिपदशस्तिमप दुर्मतिम्' इत्यत्र 'अशस्तिम्=अयशस्विनं शत्रुम्, क्षिपत्=क्षिपतु=अस्मत्तः प्रेरयतु' इति दर्शनेन दूरीकरणरूपोऽर्थो विज्ञायते। महाभार० (१२, ३, ७) 'न चैनमशकत् क्षेप्तुं हन्तुं चापि गुरोर्भयात्' इत्यत्र 'क्षेप्तुम्=दूरीकर्तुम्' इति नीलकण्ठः परशुरामसेवापरस्य कर्णस्य प्रसङ्गे। भट्टि० (१०, ६७) 'अधिजलधि तमः क्षिपन् हिमांशुः' इत्यत्र 'अपनयन्' इति जयमङ्गलः।

१७–४. विकिरणार्थेऽपि प्रयोगः—ऋ० (१०, १६, १) 'मा स्य त्वचं चिक्षिपो मा शरीरम्' इत्यत्र 'इतस्ततो विक्षिप्तां (विकीर्णां) मा कुरु' इत्यर्थः।

१७–५. ऋ० (५, १०, ७) 'स क्षेपयत्स पोषयत्' इत्यत्राग्निसंपर्कात् क्षेपणस्यार्थो विनाश इति। महाभार० (१२, १२०, १०) 'मृजावान् स्यात् स्वयूथ्येषु भौमानि चरणैः क्षिपेत्' इत्यत्र क्षिप्धातोरर्थो नाश इति। दूरे तथा प्रक्षेपणं यथा न पुनरिन्द्रियार्थविषयतां प्रपद्यते। 'ताः क्षिपेरन् प्रजाः सर्वाः क्षिप्रं द्रौपदि तादृशे' (महाभार० ३, २९, ३०) इत्यत्र, 'मृजावान् स्यात् स्वयूथ्येषु भौमानि चरणैः क्षिपेत्' (महाभार० (१२, १२०, १०) इत्यत्र, 'क्षिपन्त्यघं महदपि वेणुगुल्ममिवानलः' इत्यत्र च नाशरूपोऽर्थः क्षिप्धातोर्निर्णीयते।

१७–६. मनु० (३, ८८) 'क्षिपेदप्स्वद्भ्य इत्यपि' इत्यत्र क्षिप्धातोः क्षेपणमर्थो नास्ति। बलिक्षेपणप्रसङ्गाद् दानमर्थस्तस्य। यद्यपि प्रेरणं गतिविशेषः, तत्र च दानस्यापि गतार्थता, तथापि प्रेरणं सामान्यम्, दानं च विशेषः। प्रेरणेन दानरूपार्थविशेषस्य न स्पष्टता। सामान्यतो विशिष्टमर्थं प्रत्यारोपे तावद् अर्थसंकोचो जायते।

१७–७. समज्ञातोऽपसारणं प्रेरणं वाऽऽक्षेपः=निन्दा। मभार० (१२,२८७,२६)–

**निर्गुणास्त्वेव भूयिष्ठमात्मसंभाविता नराः।**
**दोषैरन्यान् गुणवतः क्षिपन्त्यात्मगुणक्षयात्॥**

इत्यत्र **'क्षिपन्ति=निन्दन्ति'** इति समामनति नीलकण्ठः। महाभार० (१२, ३४२, १६) 'क्षिप्तः' इत्यत्र 'आक्षिप्तः' इति [नील०]। **'चिक्षेप च स तं धीमान् वाग्भिरुग्राभिरच्युतम्'** (१४, ५५, २०) इति महाभारते निन्दितवान् इति [नील०] एवमेव (१४, ६१, ३१) इत्यत्रापि 'निनिन्द' इत्यर्थमाह सः। **'क्षिपतां कार्यिणां नृणाम्'** (मनु० ८, ३१२) इत्यत्र 'आक्षिपताम्' इत्यभिप्रैति कुल्लूकः। एवमेव (८, ३१३) 'यः क्षिप्तो मर्षयत्यार्तैः' इत्यत्र 'आक्षिप्तः' इत्यर्थमाह सः। आङित्युपसर्गमन्तरापि क्षिप्धातोर्भर्त्सनमर्थः। विद्यमानदोषस्याभिधानं परीवादः, अविद्यमानदोषस्याभिधानं निन्देति कुल्लूकभट्टः (मनुस्मृतौ २, २००) मन्वर्थमुक्तावल्याम् आतस्थे। पा० अ० (५, ४, ४६) 'अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः' इत्यत्र 'क्षेपः=निन्दा' इति।

१७–८. मनु० (८, २७०) 'वाचा दारुणया **क्षिपन्**' इत्यत्र आक्रोशरूपोऽर्थः कृतः क्षिप्धातोः कुल्लूकभट्टेन। आक्रोशः=शापः=गालिदानमित्यर्थः। यद्यपि निन्दा-शापयोः स्थूलो भेदो न शक्यते ज्ञातुं सर्वैः, तथापि निन्दा नामाविद्यमानदोषस्याभि-धानम्, गालिदानं तु 'अकरणिः' 'अजीवनिः' 'अजननिः' इत्यादि दुर्वचनम्। शर्मिष्ठा शुक्राचार्यपुत्रीमेवमेवाऽऽक्षिपत्—'एवंविधैः सुपरुषैः **क्षिप्त्वाऽऽचार्यसुतां** सतीम्' (श्रीमद्भाग० पु० ९, १८, १७) इति। एवं सत्यपि क्षिप्धातुप्रयोगेण निन्दा वा शापो वेति नैतत् सुस्पष्टमवगम्यते। मम मतानुसारेण तु गालिदानमुग्रवाचा भवति निन्दाऽपि तथा। किन्तु क्षिप्धातोर्निन्दार्थप्रसङ्गे वाण्यादिशब्दः प्रयुक्तो न दृश्यते, गालिदानार्थे तु लभ्यते। एवं दृशा 'चिक्षेप च स तं धीमान् वाग्भिरुग्राभिरच्युतम्' (महाभार०-१४, ५५, २०) इत्यत्र नीलकण्ठकृतो निन्दार्थो न समञ्जसः, उग्रवाचा गालिदानस्यैवोपयुक्तत्वात्।

१७–९. हरिवंशपुराणे[1] (१, २५, ४०) सोमोत्पत्तिकथनप्रसङ्गे 'आक्षिपत्' इत्यस्यार्थो नीलकण्ठेन 'तिरश्चकार' इति कृतः। समीपमागतस्यापि जनस्योपेक्षणम् इति क्षेपणेन मनसः सकाशादनादरो जायते। श्रीमद्भागवतपुराणे (३, १५, १७) 'अन्तर्जलेऽनुविकसन्मधुमाधवीनां गन्धेन खण्डितधियोऽप्यनिलं **क्षिपन्तः**' इत्यत्र क्षिप्-धातुस्तिरस्कारार्थकः।

१७–१०. हरिवंशपुराणे[2] (२, २८, ९८) 'क्षिप्तः' इत्यत्र 'धिक्कृतः' इति नीलकण्ठः। धिक्कारोऽपि तिरस्काराभिन्न एव। किन्तु तत्रोभयोर्विद्यते सूक्ष्मभेदः। सन्मार्गानवलम्बनेन यस्तिरस्कारः स धिक्कारः।

१७–११. महाभारते (५, ७५, ९)—

**नास्मिन् जनेन रमसे रहः क्षिपसि पाण्डवः।**
**नान्यं निशि दिवा चापि कदाचिदभिनन्दसि॥**

इत्यत्र 'क्षिपसि=नयसि कालम्' इति नीलकण्ठः। अस्मिन् वने जनेन ब्राह्मण-समूहेन क्षिपसि=नयसि, कालमिति शेषः। हिन्दीभाषायां √खेवना इति √खेपना इति च धातुद्वयी कालक्षेपार्थे।

१७–१२. महाभारते (१३, ६२, ७४) 'दाता दशानुगृह्णाति दश हन्ति तथा **क्षिपन्**' इत्यत्र क्षिप्धातोरर्थो हरणम् इति।

---

१. जातमात्रः स भगवान् देवानामक्षिपद् वपुः।
ततः संशयमापन्ना इमामकथयन् सुराः॥
अक्षिपत्=स्वतेजसा तिरश्चकार (नील०)।

२. स तामाह प्रसज्जन्तीं क्षिप्तः क्रोधेन दानवः।
अहं वै द्रुमिलो नाम सौभस्य पतिरूर्जितः॥

१७–१३. हरिवंशपुराणे (३, १२४, १२) हंसबलभद्रयोर्युद्धप्रसङ्गे—

**भूयश्च गदया हंसं चिक्षेप च बली किल।**
**सोऽपि हंसो गदां गृह्य रथात् तस्मादवापतत् ॥**

इत्यत्र क्षिप्धातोरर्थः **'प्रहारः'** इति। 'बली=रामः, गदया हंसं चिक्षेप= प्रजहार' इत्यर्थः।

१७–१४. 'क्षेपणिः' इति प्रयोगदर्शनेन विज्ञायते क्षिप्धातुर्नौकाचालनार्थकोऽपि। हिन्दीभाषायां तु √खेवना इति धातुः प्रव्यक्तं नौकाचालनार्थको विराजते।

१७–१५. याज्ञवल्क्यस्मृतौ (१, २३०)—

**यवैरन्ववकीर्याथ भाजने सपवित्रके।**
**शन्नो देव्या पयः** क्षिप्त्वा **यवोऽसीति यवांस्तथा ॥**

इत्यत्र क्षिप्धातोः **प्रस्यन्दनं** स्थापनं वार्थो निर्गलति।

१७–१६. 'स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया' इति शाकुन्तले (७, २४), 'वैकक्षिकं तत्। यत् तिर्यक् क्षिप्तमुरसि' इत्यमरे (२, ६, १३६) च क्षिप्धातोरर्थो **निवेशनम्** इति दृश्यते।

१७–१७. 'तदा भृत्ये दोषान् क्षिपति' इति हितोपदेशे (२) क्षिप्धातोरर्थं **आरोप** इति, दोषप्रसङ्गात्।

एवं तावद् इह क्षिप्धातोरर्थाः सप्तदश संजाताः—१. क्षेपणम् (प्रेरणम्), २. आयोजनम्, ३. दूरीकरणम्, ४. विकिरणम्, ५, विनाशः, ६. दानम्, ७. निन्दा, ८. शापः, ९. तिरस्कारः, १०. धिक्कारः, ११. कालयापनम्, १२. हरणम्, १३. प्रहरणम्, १४. नौचालनम्, १५. प्रस्यन्दनम् (स्थापनम्), १६. निवेशनम्, १७. आरोपश्चेति।

१८. § √ख्या २/४९ प्रथने (प०)। प्रकथनम्=प्रसिद्धिरिति गोविन्दभट्टः। अयमर्थः क्षीरस्वामिपाठानुरोधेन। मैत्रेयसायणादयस्तु 'प्रकथने' इत्याहुः। वोपदेवमतेन 'ख्यातौ कथने' इत्यर्थः। संस्कृतवाङ्मये √ख्या, √चक्ष् (चक्षिङ्), √क्शा चेत्येतेषां त्रयाणां मिथः संक्रमो दृश्यते। आर्धधातुके 'चक्षिङः ख्याञ्' (पा० अ० २, ४, ५४) चक्ष्धातोः स्थाने 'ख्या' इत्यस्य 'क्शा' इत्यस्य च प्रयोगो भवति। √ख्या इत्यस्य द्वित्वे 'चख्य' इति ध्वनिः 'चक्ष्' इति ध्वनेः साम्यं बिभर्ति–चक्ष् > चक्श्, चख्य् इति। अद्यत्वेऽपि वङ्गादिप्रदेशेषु 'चक्षुः' इत्यस्य 'चोक्ख' इत्युच्चारणं लभ्यते। एवं तावत् त्रयाणामेवार्थाः परस्परं मिलिता विभावनीयाः।

१८–१. ऋग्वेदे √चक्ष् (चक्षिङ्) धातोरर्थो मूलतो दर्शनम् (१, १०८, १), प्रकाशनम् (१, २४, १२) वा। प्रकाशनेन ख्यातिर्विज्ञापनं चेत्यादयोऽर्था बुध्यन्ते। ऋग्वेदे √ख्याधातोरर्थो दर्शनमिति। 'यदाजिमभ्यख्यदर्यः' (ऋ० ४, २४, ८) इत्यत्राभिदर्शनमर्थः (द्र० ४, २, १८)। 'नमः ख्यात्रे' इति वार्त्तिकभाष्यानुरोधेन ख्याधातुः

**सार्वधातुकमात्रविषयः । आर्धधातुके तु 'चक्षिङः ख्याञ्' (२, ४, ५४) इति ख्यादेशे-नाभीष्टसिद्धिः । प्रकृतं ऋग्वेदे सार्वधातुकरूपत्वात् ख्याधातोरर्थसिद्धिः—'अभि-पश्येत्' इति सायणः ।** संपूर्वस्य ख्याधातोः प्रयोगो नेति न्यासकारो भ्रान्तः, ऋ० (९, ६१, ७) इत्यत्र 'समादित्येभिख्यत' इति संपूर्वकख्याधातोः सार्वधातुके प्रयोगात् ।

१८-२. ऋग्वेदे (४, १४, १)—

**'प्रत्यग्निरुषसो जातवेदा अख्यद् देवो रोचमाना महोभिः ।'**

इत्यत्र द्योतमानो वह्निस्तेजोभिर्दीप्यमाना उषसो लक्षीकृत्य प्रवृद्धो भवतीति प्रासङ्गिकोऽर्थः । एवं तावद् इह √ख्या धातुः प्रवृद्धयर्थकः । प्रवर्द्धनेन प्रकाशा-धिक्यम्, प्रकाशनेन च प्रवृद्धिर्लक्ष्यते ।

१८-३. ऋग्वेदे (५, ३, ९०)—

'अन्तर्ह्यख्यदुभे अस्य धेने अथोप प्रैद्युधये दस्युमिन्द्रः' इत्यत्र 'नमुचिरसुरः स्त्रीर्युद्धसाधनानि चक्रे । इन्द्रेण सह योद्धुं प्रहितवान् इत्यर्थः । इन्द्रस्तासां मध्ये नमुचेः प्रीणयित्र्यौ सुरूपे द्वे स्त्रियौ गृहमध्ये निदधे' इति प्रासङ्गिकोऽर्थः । 'अन्तः=गृहमध्ये, अख्यत्=निदधे' इति शब्दार्थः । गृहमध्ये प्राकाशयद् इत्यनेन अस्थापयदित्यर्थविस्तारः ।

१८-४. दर्शनं ज्ञानम् । ऋग्वेदे (१, ८१, ९) 'अन्तर्हि ख्यो जनानाम्' इत्यत्र जनानामन्तर्दर्शनं नाम ज्ञानम् इति ख्याधातुर्ज्ञानार्थः । पश्यसि, जानासीति सायणः । महाभारते (३, ९०, १३) 'आश्रमः ख्यायते पुण्यस्त्रिषु लोकेषु विश्रुतः' इत्यत्र 'ज्ञायते' इत्यर्थः ।

१८-५. प्रसिद्धिर्नाम प्रकाशनम् । महाभार० (१२, ९३, ९४) 'जमदग्निरिति ख्यातः' इत्यत्र ख्याधातुर्विख्यात्यर्थकः । ऋग्वेदे (१, ४, ३) 'मा नो अति ख्य आ गहि' इत्यत्रातिपूर्वकः ख्याधातुः प्रकथनार्थकः । 'मा प्रकथय' इति सायणः । सुविज्ञातमेव वस्तु प्रसिद्धिमेति । प्रसिद्धम्=सर्वैः सुविज्ञातम् । वा० रा० (३, २२, ३२ सेण्टपीटर्सं०) 'ख्यातो लोकप्रवादोऽयम्' इत्यत्र ख्यातः=प्रसिद्ध इत्यर्थः । 'आवयोः पितरं विद्धि ख्यातं दशरथं भुवि' (भट्टि० ६, ९७)=विख्यातमिति जयमङ्गलः ।

१८-६. कथनं नाम भावप्रकाशनम् । इह √ख्याधातुः प्रायेण णिजन्तो दृश्यते । मनु० (११, ९९) 'स्वकर्म ख्यापयन् ब्रूयाद् मा भवाननुशास्त्विति' इत्यत्र 'कथयन्' इति कुल्लूकभट्टः । भट्टि० (१५, ८६) 'विभीषणेन सोऽख्यायि राघवस्य महा-रथः' इत्यत्र 'कथितः' इति जयमङ्गलः ।

१८-७. कथनाद् घोषणाया यद्यपि नास्ति भेदः, तथापि भिन्नो व्यापारस्तस्मात्, घोषणाया उच्चैर्घुष्टत्वात्, कथनस्य चातथात्वात् । महाभार० (५, १८८, १५)— 'ख्यापयामास राजेन्द्र पुत्रो ह्येष ममेति वै' इत्यत्र णिजन्तः ख्याधातुर्घोषणार्थः । मनु० (७, २०१) 'प्रदद्यात् परिहारांश्च ख्यापयेदभयानि च' इत्यत्रापि सोऽर्थो विज्ञातव्यः ।

१८-८. सूचनाऽपि स्थूलतः कथनाभिन्ना । किन्तु सूक्ष्मदृष्ट्या तत्रापि भेदः । णिजन्तः ख्याधातुः सूचनार्थो महाभारते (३, २७०, ३)—

आयान्तीमे पञ्च रथा महान्तो
मन्ये च कृष्णे पतयस्तवैते।
सा जानती ख्यापय नः सुकेशि
परं परं पाण्डवानां रथस्थम्॥

इत्यत्र घोषणार्थः कथनार्थो वा नास्ति।

१८–९. कथनम्, सूचना, घोषणेत्यादयोऽर्था उच्चारणं समाश्रयन्ते। उपदेशोऽपि न शक्यते कर्तुमुच्चारणं विना। 'दिशिरुच्चारणक्रियः' इति महाभाष्यकारेणाप्युक्तत्वात्। हरिवंशपुराणे (३, ८, ४)—

सदा सत्यं तपश्चैव धर्मश्चैव विवर्धते।
सद्भिराचरितं यच्च क्रियते ख्यायते च यत्॥

इत्यत्र ख्याधातुरुपदेशार्थः। 'ख्यायते = उपदिश्यतेऽन्येभ्यः' इति नीलकण्ठः।

१८–१०. मनु० (१२, ३६)—

येनास्मिन् कर्मणा लोके ख्यातिमिच्छति पुष्कलाम्।
न च शोचत्यसंपत्तौ तद् विज्ञेयं तु राजसम्॥

इत्यत्र ख्याधातुः श्र्यर्थकः। श्रीः=शोभा, लक्ष्मीश्च। इह शोभार्थः, पञ्चत्रिंशे सप्तत्रिंशे च श्लोके लज्जार्थस्योक्तत्वात्। निन्द्यकर्मणा लज्जा, अनिन्द्येन च शोभेति समञ्जसता। वस्तुतोऽयमर्थः प्रसिद्धचर्थाभिन्नः।

एवं तावत् ख्याधातुर्दशस्वर्थेषु दृश्यते प्रयुज्यमानः—

१. दर्शनम्, २. प्रवृद्धिः, ३. निधानम्, ४. ज्ञानम्, ५. प्रसिद्धिः, ६. कथनम्, ७. घोषणा, ८. सूचना, ९. उपदेशः, १०. शोभा चेति।

१९ § √गम् (गम्लृ) १/९६७ गतौ (प)। गतिसामान्यवाचक एषः। उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि कर्माणि गतिमेवेङ्गन्ति। संयोगानुकूलव्यापारोऽसौ बोद्धव्यः। गतिं हित्वा प्रायः सर्वेष्वेवार्थेष्वेतस्य धातोरर्थापकर्षो भवति।

१९–१. ऋ० (१, १, ४) 'स इद्देवेषु गच्छति' इत्यत्र √गम्धातुर्गत्यर्थः। गत्यर्थे √गमधातुः सुप्रसिद्धः (द्र० आख्यातचन्द्रिका भट्टमल्लस्य २, ३, १०४)।

१९–२. गमनोद्यममात्रेऽपि गम्धातुप्रयोगो दृश्यते। रामादीनां चतुर्णां पुत्राणां विवाहानन्तरं दशरथो मिथिलाधिपमापृच्छ्य गन्तुमुद्यतोऽभून्न तु गतवान्, यतो हि तदनन्तरं विदेहेन बहु कन्याधनं दत्तम्। यथा वा० रा० (१, ७४, २–३)—

विश्वामित्रे गते राजा वैदेहं मिथिलाधिपम्।
आपृष्ट्वैव जगामाशु राजा दशरथः पुरीम्॥
अथ राजा विदेहानां ददौ कन्याधनं बहु।
गवां शतसहस्राणि बहूनि मिथिलेश्वरः॥

१९–३. इतरशब्दसंनिधानेन √गम्धातोरर्था भवन्ति विविधाः। ऋ० (१, १०५, ४) 'क्व ऋतं पूर्व्यं गतम्' इत्यत्र वर्तनम्=सत्तार्थः। 'हे अग्ने! त्वदीयं पूर्व्यम्= पूर्वकालिकम्, ऋतम्=भद्रं स्तोतृभ्यः कृतं श्रेयः क्व गतम्=कुत्रेदानीं वर्तते' इत्यर्थः।

१९–४. ऋ० (१, ११९, ४) 'युवं भुज्युं भुरमाणं विभिर्गतम्' इत्यत्र √गम्-धातुर्निमज्जनार्थः, समुद्रस्य प्रसङ्गात्। एवमेव 'समुद्रमव्यथिर्जगन्वान्' (ऋ० १, ११७, १५) इतीहापि समुद्रशब्दसंनिधानाद् निमज्जनमर्थः।

१९–५. ऋ० (१, ११६, २५) 'अस्तमिवेज्जरिमाणं जगम्याम्' इत्यत्र √गम्-धातोः प्राप्तिरर्थः। जरिमाणम्=जराम्, जगम्याम्=कण्टकराहित्येन प्राप्नुयाम्। 'एतैः सर्वैर्गम्यते बुद्धिनेत्रैः' इत्यत्र महाभारते (१२, २७०, ४७) 'अधिगम्यते' इति नीलकण्ठः। उपसर्गाणां द्योतकत्वमिह निकामं सिध्यति। अध्युपसर्गमन्तरापि प्राप्त्यर्थो गम्यते गम्धातुना। 'संसिद्धिं परमां गताः' (गीता ८, १५)=प्राप्ताः (शा० भा०), 'रजसि प्रलयं गत्वा' (गीता १४, १५) इत्यत्र प्राप्येति शाङ्करभाष्यं म० व्या० श्रीधरी व्याख्या च। एवमेव 'यद् गत्वा न निवर्तन्ते' (गी० १५, ६) इत्यत्र शाङ्करभाष्ये 'प्राप्य' इत्यर्थः कृतः। मनुस्मृतौ (११, ९७) 'शूद्रत्वं च स गच्छति' इतीह समाप्नोति (=सम्यग् आप्नोति) इति कुल्लूकभट्टः। णिजन्ते गम्धातोः प्रयोगेऽपि लभ्यतेऽयमेवार्थः—महाभार० (१४,७,२७) 'गमयिष्यामि शक्रेण समतामपि ते ध्रुवम्' इत्यत्र प्रापयिष्यामीत्यर्थः। गमनेन पूर्वदेशसंयोगात् तत्प्राप्तिः, उत्तरदेशवियोगानुकूलव्यापारात् ततो निवृत्तिर्जायते। अत एव 'ये ये गत्यर्थास्ते ते प्राप्त्यर्थाः' इति व्याख्याकाराः समामनन्ति।

१९–६. पाणिनीये 'प्राग् वहतेष्ठक्' (४, ४, १) इति सूत्रे कात्यायनीयं वार्त्तिकम्—*गच्छतौ परदारादिभ्यः* इति। परदारान् गच्छतीति पारदारिकः, गुरुतल्पं गच्छतीति गौरुतल्पिकः। इह √गम्धातुः संभोगार्थकः। ऋ० (१, १७९, १) 'पत्नीर्वृषणो जगम्युः' इत्यत्र 'वृषणः=सेक्तारः पुरुषाः, जगम्युः=गच्छेयुः संभोगं कुर्युः' इति सायणः। मनु० (८, ३७६) 'ब्राह्मणीं यद्यगुप्तां तु गच्छेतां वैश्यपार्थिवौ' इत्यत्र, 'पतितौ भवतो गत्वा' ( मनु० ९, ५८) इत्यत्र, 'पशून् गच्छन् शतं दाप्यो हीनां स्त्रीं गां च मध्यमम्' (याज्ञ० २, २८९) इत्यादिस्थले च संवासार्थको √गम्धातुः, संयोगानुकूलव्यापारस्य √गम्धातोर्दारादिप्रसङ्गेन तथार्थात्।

१९–७. अवपूर्वको √गम्धातुर्ज्ञानार्थः। अवोपसर्गाद् ऋतेऽपि स दृश्यते ज्ञानार्थे। महाभारते (५, १९०, ३)—

स राजा भूय एवाथ ज्ञात्वा तत्त्वमथागमत्।
कन्येति पाञ्चालसुतां त्वरमाणो विनिर्ययौ॥

'कन्येति अगमत्' इत्यत्र √गम्धातुर्ज्ञानार्थकः। महाभारते (१२, १०५, २३)–'ततो गच्छसि सिद्धार्थः पीड्यमानं महाजनम्' इत्यत्र, महाभारते (१२, २६१, ६)—

न मया सदृशोऽस्तीह लोके स्थावरजङ्गमे।
अप्सु वैहायसं गच्छेन्मया योऽन्यः सहेति वै॥

इत्यत्र 'अवगच्छेत्' इत्यर्थः। एवमेव (महाभार० ३, ५४, ५)—

**तामवस्थां तदाकारां सख्यस्ता जग्मुरिङ्गितैः।**
**ततो विदर्भपतये दमयन्त्याः सखीगणः॥**
**न्यवेदयत् तामवस्थां दमयन्तीं नरेश्वरे।**

इत्यत्र दमयन्त्याः सख्यस्तस्या नलानुरक्तामवस्थाम् इङ्गितैर्जग्मुः=अवगतवत्यः। क्वचित् पुस्तकेषु तु 'जग्मुः' इत्यस्य स्थाने 'जज्ञुः' इति पाठो दृश्यते। स समीचीनो न भाति, पुरातनेषु संग्रहेषु तथाऽदर्शनात्। महाभाष्ये (८, १, १) चतुर्दशे च पृष्ठे 'कथमनुच्यमानं गंस्यते' इत्यत्र 'नित्यता वीप्सा वा गम्यते' (महाभाष्ये ८, १, १; चतुर्थपृष्ठे) इत्यत्र, (महाभाष्ये ८, १, १; अष्टमे पृष्ठे) 'गम्यते सोऽर्थः' इत्यत्र चावगतिर्गम्धातोरर्थः। 'गतिः स्त्री मार्गदशयोर्ज्ञाने यात्राभ्युपाययोः' (मेदि० ते १४), 'गतं विज्ञानयातयोः' इति च (मेदि० ते १५)।

अन्तर्गमनेन कस्यचिद् वस्तुनो हृदयं ज्ञायत इति √गम् धातुर्दृश्यते ज्ञानार्थे। गत्यर्थकस्य √इ (इण्) धातोरवोपसर्गपूर्वकस्य ज्ञानार्थः। किन्त्वेवमेव सर्वेषां गत्यर्थकानां धातूनां ज्ञानार्थो भवितुं न शक्नोति। √अञ्च्, √अञ्ज्, √अट्, √अण्ठ्, √अय्, √अर्द्, √अर्ब्, √अव्, √अष्, √अस्, √इट्, √ऋ, √ऋज्, √ऋण्, इत्यादीनां बहूनां धातूनां ज्ञानार्थो न दृश्यत इति 'ये ये गत्यर्थास्ते ते ज्ञानार्थाः' इत्युक्तिर्न समञ्जसा। गतावपि भेदाः। क्वचिद् गमनं साधारणम्, क्वचिच्च विशिष्टम्। √गम्, √इण् इत्यादयो धातवः साधारणगत्यर्था इतीह ज्ञानार्थसंभवः। √अट्—(अटनम्, प्रर्यटनम्) इत्यादयो धातवो गतिविशेषार्था इति तत्र न ज्ञानार्थसम्भवः।

१९–८. व्युपसर्गपूर्वकस्य व्यत्युपसर्गपूर्वकस्य वा √गम्धातोः कालक्षेपोऽर्थः। इण्धातोरपि सोऽर्थो बोधनीयः। कालक्षेपः, कालव्ययः, कालयापनं वा। वाल्मीकीयरामायणे (१, ६३, ११) 'अहोरात्रापदेशेन गताः संवत्सरा दश' इत्यत्र √गम्धातुः क्षेपार्थकः। 'काव्यशास्त्रविनोदेन कालो **गच्छति** धीमताम्' इत्यत्र पञ्चतन्त्रोक्तावपि तथार्थः।

१९–९. प्राणिनां जीवनक्षेपार्थेऽपि प्रयुज्यमानो लभ्यते धातुरेषः। महाभारते (५, १४, २७)—

**न भेतव्यं त्वया देवि नहुषाद् दुष्टचेतसः।**
**न ह्येष स्थास्यति चिरं गत एव नराधमः॥**

इत्यत्र 'गतः' इत्यस्य 'मृतः' इत्यर्थः। संप्रत्यपि लोके क्तप्रत्ययविशिष्टोऽयं शब्दो मृत्योरर्थे प्रयुज्यते। हरिवंशपुराणे (३, २४, १०)—

**नावेदविद्वानागच्छेन्नापि रौद्रं व्रतं चरेत्।**
**न च त्यागेन गच्छेत गृहधर्मं च न त्यजेत्॥**

'अवेदविद्वान् गृहधर्मं न आगच्छेत्, कृत्स्नं वेदमप्राप्य गार्हस्थ्यं न कुर्यादित्यर्थः। न च त्यागेन=परिव्राजेन, गच्छेत = म्रियेत' इति नीलकण्ठः। तदुक्तं मनुस्मृतौ (६, ३७)—

**अनधीत्य द्विजो वेदाननुत्पाद्य तथा सुतान्।**
**अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः॥** इति।

१९–१०. श्रीमद्भगवद्गीतायां (१५, ४) 'यस्मिन् गता न निवर्तन्ति भूयः' इत्यत्र गतिविशेषो नाम **प्रवेशो**ऽर्थः। मधुसूदनव्याख्यायां 'प्रविष्टाः' इत्यर्थः। नीलकण्ठव्याख्यायां श्रीधरव्याख्यायां च 'प्राप्ताः' इत्याकूतम्।

१९–११. वा० रा० (५, ६८, २४) 'नाम पृष्ठगतौ तौ च चन्द्रसूर्याविवोदितौ' इत्यत्र √गम्धातुः सङ्गार्थकः। 'तौ रामलक्ष्मणौ मम (हनूमतः) पृष्ठगतौ=पृष्ठलग्नौ=पृष्ठारूढौ वा नृसिंहौ त्वत्सकाशम् आगमिष्यतः' इति हनूमतः सीतां प्रति वचनम्।

१९–१२. महाभारते (५, १५९, ९)—

**य आत्मनो दुश्चरितादशुभं प्राप्नुयान्नरः।**
**न स कालं न वा देवान् एनसा गन्तुमर्हति॥**

इत्यत्र 'आत्मनो दुश्चरिताद् यो नरोऽशुभं प्राप्नुयात् स कालं देवान् वा एनसा **गन्तुम्=उपालब्धुं** नार्हति' इत्यर्थः। इह √गम्धातुरुपालम्भार्थकः। गन्तुम्=उपालब्धुम् इति तिलकटीका। वस्तुत इह 'एनसा=दोषेण, कलङ्केन' वा गमनम् उपालम्भो दुर्वाक्यमिति हलायुधः। उपालम्भो नाम हेतोर्दोषवचनम् इति चरके (विमानस्थानेऽष्टमोऽध्यायः)। 'एनस्' इति पदसंनिधानात् प्रकरणपर्यालोचनाच्चायमर्थो विज्ञातो भवति।

१९–१३. महाभारते (१२, ९, २)—

**साधुगम्यमहं मार्गं न जातु त्वत्कृते पुनः।**
**गच्छेयं तद्** गमिष्यामि **हित्वा ग्राम्यसुखान्युत॥**

इत्यत्र ग्राम्यसुखानि हित्वा तद् 'गमिष्यामि=स्वीकरिष्यामि' इति नीलकण्ठः। अभ्युपपूर्वको √गम्धातुः स्वीकृत्यर्थकः, 'अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः' इत्यमरकोशात् (१, ५, ५)। इहोपसर्गमन्तरैव सोऽर्थो विज्ञायते।

१९–१४. महाभारते (५, ४३, ५८)—

**'तस्य पर्येषणं गच्छेत् प्रत्यर्थिषु कथञ्चन'**

इत्यत्र प्रत्यर्थिषु पर्येषणं 'गच्छेत्=कुर्यात्' इति नीलकण्ठः। अन्येषां प्राप्त्यादीनामर्थानां नेहौचित्यम्। एवं तावद् √गम्धातुः **करणार्थकः**।

१९–१५. महाभारते (४, ९, २२)—

**मूर्ध्नि त्वां वासयेयं वै संशयो मे न विद्यते।**
**न चेदिच्छति राजा त्वां गच्छेत् सर्वेण चेतसा॥**

इत्यत्र 'गच्छेत्=स्पृहयेत्' इति नीलकण्ठः । 'राजा त्वां **सर्वेण चेतसा गच्छेत्'** इतीह सर्वेण चेतसा गमनं नाम स्पृहा ।

१९–१६. महाभारते (१३, ९३, ८७)—

**दुर्धार्यमेतन्मनसा गच्छावतर पद्मिनीम्'**

इत्यत्र √गम्धातुरवतरणार्थकः । वीप्सायामिहोक्तिः—अवतरावतरेति । अयं प्रसङ्गः—'पशुसखसहायास्तु बिसार्थं ते महर्षयः । पद्मिनीमभिजग्मुस्ते सर्वे कृत्याभिरक्षिताम्' (१३, ९३, ७५), 'स्थितां कमलिनीतीरे कृत्यामूचुर्महर्षयः' (१३, ९६, ७६) इत्याभ्यां श्लोकाभ्यां महर्षीणां तीरप्राप्तिः सुस्फुटेति विप्रकर्षाभावात् तेषां तत्र गमनं न संभवति । नीलकण्ठेनापि 'गच्छ' इत्यस्य 'अवतर' इत्यर्थ एव समास्थितः ।

१९–१७. महाभारते (४, २१, ५१)—

**कीचकं मनसागच्छत् सृक्किणी परिसंलिहन् ।**
**उवाच चैनां दुःखार्तां भीमः क्रोधसमन्वितः ॥**

इत्यत्र मनसा गमनं नाम स्मरणम् । प्ररुदतीं कृष्णां दृष्ट्वा सृक्किणीं परिसंलिहतो भीमस्य कीचकस्मरणं प्रसङ्गागतम् । नीलकण्ठोऽपि व्याचख्यौ—'अगच्छत्=अस्मरत्' इति । १९–१५. प्रघट्टके 'सर्वेण चेतसा गच्छेत्' इत्यस्य स्मरणमर्थः प्रतिपादितचरः । यद्यपि शब्दावली प्रायेणोभयत्र सदृशी, तथापि प्रसङ्गभेदादर्थभेदो विज्ञेयः ।

१९–१८. श्रीमद्भगवद्गीतायां (१८, ६२) 'तमेव शरणं **गच्छ**' इत्यत्र √गम्-धातुराश्रयार्थकः । गच्छ=आश्रय [शा० भा०], [म० व्या०], श्रयस्व [नी० व्या०] च । वा० रा० (२, ६४, ४५) 'नहि त्वस्मिन् कुले जातो गच्छत्यकुशलां गतिम्' इत्यत्र गतिराश्रय इति तिलकटीका । वा० रा० (२, ४८, १७)—

**पादच्छाया सुखं भर्तुस्तादृशस्य महात्मनः ।**
**स हि नाथो जनस्यास्य स गतिः स परायणम् ॥**

इत्यत्र गतिः=शरणम् इति तिलकटीका । 'शरणं गृहरक्षित्रोः' इति कोशाद् गृहमाश्रयदातृ, रक्षकश्चाश्रयदाता । आश्रयदातृत्वेनैव तयो रक्षकत्वम् । एवमेव 'गतिबुद्धिप्रत्यवसानार्थ०' (पा० अ० १, ४, ५२) इत्यस्मिन् सूत्रे भट्टोजिदीक्षितः 'आसयत् सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः' इत्याह ।

१९–१९. वा० रा० (१, ६७, १०)—

**'क्व गतिर्मानुषाणां च धनुषोऽस्य प्रपूरणे'**

इत्यत्र 'अस्य धनुषः प्रपूरणे मानुषाणां गतिर्नाम शक्तिः, सामर्थ्यम्, धनुषः प्रपूरणे सामर्थ्यस्यापेक्षणात् । तिलकटीकायामप्येवमेव प्रतिपादितम् ।

१९–२०. वा० रा० (२, ५२, १८)—

**त्वं गतिं प्राप्स्यसे वीर ! त्रींल्लोकांस्तु जयन्निव'**

इतीह त्रयाणां लोकानां जयेनोत्कर्षो बुध्यत इति √गम्धातुरुत्कर्षे ज्ञेयः ।

१९–२१. महाभारते (३, १५०, २५)—

**मा तात ! साहसं कार्षीः स्वधर्मं परिपालय ।**
**स्वधर्मस्थः परं धर्मं बुध्यस्व गमयस्व च ॥**

इति हनूमदुक्तिर्भीमसेनं प्रति । परस्य धर्मस्य बोधनं प्रतिपादनं (व्याख्यानं) च कुर्विति तदर्थः । एवं तावद् णिजन्तो √गम्धातुः प्रतिपादनार्थकः । एवमेव बृहत्संहितायां (२, १) 'न प्रतिबद्धं गमयति' इत्यत्र 'गमयति=प्रतिपादयति' इति भट्टोत्पलः ।

१९–२२. वा० रा० (४, २२, ३)—

**'सुग्रीव दोषेण न मां गन्तुमर्हसि किल्बिषात्'**

इतीह वाली सुग्रीवं याचते क्षमाम् । नञा सह क्षमार्थः । तदभावे तु 'दोषेण मां गन्तुम्=द्रष्टुम्, अवगन्तुम् अर्हसि' इत्यर्थः । किल्बिषाद् मां प्रति दोषदृष्टिर्नोचितेति निष्कृष्टोऽर्थः । क्षन्तव्योऽहमिति भावार्थः । एवं तावद् दर्शनमर्थो √गम्-धातोरिह बोधनीयः ।

१९–२३. मनु० (३, ६६) 'कुलसंख्यां च गच्छन्ति' इत्यत्र 'उत्कृष्टकुलगणनायां गण्यन्ते' इति कुल्लूकभट्टः । इह √गम्धातुर्यद्यपि प्राप्त्यर्थकः, तथापि करोतिवत् क्रियासामान्यवाचकत्वाद् संख्यानार्थकः ।

१९–२४. रघु० (६, ७७)—

**ऊर्ध्वं गतं यस्य न चानुबन्धि यशः परिच्छेत्तुमियत्तयालम्'**

इत्यत्र कुमारस्याजस्यानुबन्धिनोऽविच्छेदिनो यशसः सर्वदिग्व्यापित्वं सूचितम् । 'ऊर्ध्वं गतम्' इत्यस्यार्थः—स्वर्गादिकं व्याप्तमिति । यद्यपि प्रविष्टमित्यर्थस्यापि प्रसङ्गः, तथाप्यूर्ध्वे व्याप्ते गगने √गम्धातोर्व्याप्तिरूपोऽर्थो यशःपदसंनिधानात् । मल्लिनाथोऽपि व्याप्तिरूपमर्थमाह ।

१९–२५. रघु० (९, ८१)—

**'इत्थं गते गतघृणः किमयं विधत्ताम्'**

इतीह 'श्रवणकुमारस्य वृद्धजनकद्वारा शापे प्रवृत्ते सति' इत्यर्थबोधकम् 'इत्थं गते' इति पदद्वयम् । तत्र √गम्धातुः प्रवर्तनरूपार्थकः । प्रवृत्ते सति इति मल्लिनाथः ।

१९–२६ रघु० (१०, २७)—

**त्वय्यावेशितचित्तानां त्वत्समर्पितकर्मणाम् ।**
**गतिस्त्वं वीतरागाणामभूयः संनिवृत्तये ॥**

इत्यत्र सुराः प्रादुर्भूतं रामं स्तुवन्ति । 'वीतरागाणामभूयः संनिवृत्तये त्वमेव गतिः=साधनम्' इति प्रासङ्गिकोऽर्थः । साधनेन सिद्धिर्मोक्षो न त्वाश्रयेण शरणेन

वा। शरणं शरणापन्नानां प्रपन्नानां भक्तानां समीहितम्। मल्लिनाथोऽपि व्याचख्यौ—'गतिः=शरणम्' इति।

१९–२७. भट्टि० (४, ६)—

**दृष्टाः स्थ, स्वस्ति वो यामः।**
**स्वपुण्य–विजितां गतिम्॥**

इत्यत्र 'स्वपुण्येन विजिताम्=लब्धां गतिम्=जन्म, यामः=व्रजामः' इति जयमङ्गलः। शरभङ्गस्य रामं प्रत्युक्तिरियम्। वस्तुतो व्रजामः=सफलयाम इत्यर्थः। अन्यथा 'गतिम्=मोक्षम्' इत्यर्थो ज्यायान्।

१९–२८. भट्टि० (८, २)—

**अभायत यथार्केण सुप्रातेन शरन्मुखे।**
**गम्यमानं न तेनासीदगतं क्रामता पुरः॥**

इत्यस्मिन् श्लोके √गम्धातुरवष्टम्भार्थकः, पुरोऽग्रतो यदर्केण गम्यमानम्=अवष्टभ्यमानं वर्त्मेत्यर्थात्।

१९–२९. भट्टि० (११, १९)—

**तालेन संपादितसाम्यशोभं**
**शुभावधानं स्वरबद्धरागम्।**
**पदैर्गतार्थं नृपमन्दिरेषु**
**प्रातर्जगुर्मङ्गलवत् तरुण्यः॥**

इत्यत्र 'पदैः=सुप्तिङन्तैः, गतार्थम्=परिच्छिन्नार्थम्, निरर्थकपदरहितमित्यर्थः। एवमिह √गम्धातोरिह परिच्छेदार्थता बोद्धव्या।

एवं संक्षेपत इह √गम्धातोरेकोनत्रिंशदर्था विवृताः—१. गतिः, २. गमनोद्यमः, ३. वर्तनम्, ४. निमज्जनम्, ५. प्रापणम्, ६. संवासः, ७. ज्ञानम्, ८. कालक्षेपः, ९. मरणम्, १०. प्रवेशः, ११. सङ्गः, १२. उपालम्भः, १३. स्वीकारः, १४. कारणम्, १५. स्पृहा, १६. अवतरणम्, १७. स्मरणम्, १८. आश्रयः, १९. सामर्थ्यम्, २०. उत्कर्षः, २१. प्रतिपादनम्, २२. दर्शनम्, २३. संख्यानम्, २४. व्याप्तिः, २५. प्रवर्तनम्, २६. साधनम्, २७. जन्म, २८. अवष्टम्भः, २९. परिच्छेदश्चेति।

२०. § √गाह् (गाहू) १/६४१ विलोडने (आ)। अस्य धातोर्गाध्धातुनाऽवश्यं सम्बन्धो ज्ञायते। √'गुआध्' इति भारोपीयो धातुर्निमज्जनार्थो जूलियसपाकर्नीमहोदयेन दर्शितः। ऋ० (७, १८, ५) 'अर्णांसि चित्पप्रथाना सुदास इन्द्रो गाधान्यकृणोत् सुपारा' इत्यत्र 'गाधानि=तलस्पर्शानि' इति। ऋ० (७, ६०, ७) 'प्रव्राजे चिन्नद्यो गाधमस्ति' इत्यत्र 'गाधेषु=उदकेषु' इति सायणः। एवमेव 'बृहन्तेव गम्भीरेषु प्रतिष्ठां पादेव गाधं तरते विदाथः' इत्यृग्वेदे (१०, १०६, ९) जलरूपोऽर्थोऽभ्युपेयो गाधशब्दस्य। वा० रा० (१, ३५, ४) इत्यत्र 'अगाधः' इत्यस्यार्थो व्यधायि

तिलकटीकाकर्त्रा तलस्पर्शं इति। यशस्तिलक० (३, १५३) 'गाधेत' इत्यस्यार्थः— 'तरितुं शक्येत इति। एवं तावद् √गाध्धातुः प्रतिष्ठालिप्साग्रन्थार्थानतिरिच्य निमज्जनाद्यर्थेऽपि दृश्यते।

२०–१. ऋ० (९, ११०, ८) 'दिवः पीयूषं पूर्व्यं यदुक्थ्यं महो गाहाद् दिव आ निरधुक्षत' इत्यत्र 'महः=महतः, गाहात्=गहनात्, दिवः=द्युलोकात्' इत्यर्थः। गहनशब्दोऽपि √गाह् धातोर्युत्पद्यते—'बहुलमन्यत्रापि' (उ० २/७८) इति युच्; 'कृच्छ्रगहनयोः' (७, २, २२) इति निर्देशाद् ह्रस्वः।

२०–२. रघु० (२, १४) 'तस्मिन् वनं गोप्तरि गाहमाने' इत्यत्र गाह् धातोः प्रवेशरूपोऽर्थः। 'प्रविशति सति' इति मल्लिनाथः, वनरूपकर्मणि जलवद् विलोडनाशक्यत्वात्।

२०–३. वा० रा० (४, १६, २०) 'एष मुष्टिर्महान् बद्धो गाढः सुनियताङ्गुलिः' इत्यत्र 'गाढः=दृढः' इत्यर्थः। इह गाढशब्दो विशेषणपरः। वा० रा० (२, ३१, २) 'स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः' इत्यत्र गाढशब्दः क्रियाविशेषणः। स लक्ष्मणो रामस्य चरणौ 'गाढम्=दृढं निपीड्य' इत्याकूतम्। दृष्टपदार्थप्रसङ्गे दाढर्यार्थकत्वम्, अनुभूत्यादिप्रधानपदार्थप्रसङ्गे तु प्राबल्यार्थकत्वम्–मेघदूते (उत्तर०२०) 'गाढोत्कण्ठाम्' इत्यत्र 'प्रबलवेदनाम्' इति मल्लिनाथः। वा० रा० (२, ५७, ३) 'अयोध्यामेव नगरीं प्रययौ गाढदुर्मनाः' इत्यत्रापि गाढशब्दः प्राबल्यार्थपरोऽतिमात्रपरो वा बोद्धव्यः।

२०–४. भाग० पु० (४, २९, ४०)—

'ता ये पिबन्त्यवितृषो नृप गाढकर्णैस्तान्न स्पृशन्त्यशनतृड्भयशोकमोहाः' इत्यत्र कर्णविशेषणाद् गाढशब्दोऽनावृतार्थक इति √गाह् धातोरनावरणरूपोऽर्थोऽभ्युपेयः।

२०–५. रघु० (९, ७२)—

'श्रमफेनमुचा तपस्विगाढां तमसां प्राप नदीं तुरङ्गमेण' इतीह 'तपस्विभिर्गाढाम्=अवगाढाम्' इत्यर्थादवगाहनार्थको धातुः। मल्लिनाथेन तु 'गाढाम् अवगाढाम्=सेविताम्' इत्यर्थो विहितः। तत्रावगाहनस्नानादिरूपेण नद्या सेवनरूपोऽर्थो जायते।

२०–६. कुमारसं० (५, ४६) 'मनस्तु मे संशयमेव गाहते' इत्यत्र 'संशयमाश्रयते' इत्यर्थः। एवञ्चेह √गाह् धातुराश्रयार्थकः।

२०–७. 'जगाहिरेऽनेकमुखानि मार्गान्' इति भट्टिकाव्ये (२,५४) अवष्टम्भरूपोऽर्थो √गाह् धातोः। जिते नृपारौ परशुरामे बलानि सैन्यानि मार्गान् अवगाहिरे=अवष्टब्धवन्तीत्यवष्टम्भरूपस्यार्थस्यौचित्यम्, सैन्यद्वारा मार्गावगाहनेन तथैवार्थसाङ्गत्यात्।

२०–८. 'जगाहे द्यां निशाचरः' इति भट्टिकाव्ये (६, ५७) निशाचरस्य गगनावगाहनं नाम गमनम्। यद्यपि विहायसा गमने √डीधातुप्रयोग इति गगनावगाहनं नामोड्डयनम्, तथापि √गम्धातोर्गतिसामान्यात् तथैवौचित्यम्।

२०–९. भट्टि० (९, २९)—

**विगाढाऽरं वनस्याऽसौ शत्रूणां गाहिता कपिः।**
**अक्षं रधितुमारेभे रद्धा लङ्कानिवासिनाम्॥**

इत्यत्र 'शत्रूणां गाहिता' इति शत्रुशब्दसंनिधानाद् √गाह् धातोर्विनाशरूपोऽर्थो जायते। यद्यपि 'शत्रूणां गाहिता' इत्यत्र शत्रुपराभवादिरूपस्यार्थस्यापि संभवः, तथाप्यग्रे हिंसार्थकस्य √रधधातोर्द्वेधा प्रयोगदर्शनाद् √गाह् धातोरपि तथैवार्थ-परिकल्पनं साम्प्रतम्।

२०–१०. आख्यातचन्द्रिकायां (२, ३, १४३) भट्टमल्लो √गाह् धातुं मन्थनार्थ-कमाह। स तु धातुपाठगतस्य विलोडनरूपस्यार्थस्य पर्यायवचनमेव प्रस्तौति।

वस्तुतो यादृशयादृशोपपदानां संनिधानं भवति तादृशतादृशार्थास्तत्र कल्पिता भवन्ति। 'दृष्टिः पुरं विगाहमाना' (नैषध० ६, ९) इत्यत्र दृष्टिपदसंनिधानेन √गाह्-धातुर्विलोकनार्थको जायते। एवमेव सर्वत्रोन्नेयम्।

२०–११. प्राकृतभाषायामेष धातुश्चतुष्वर्थेषु लभ्यते–१. अन्वेषणे, २. अभ्यासे (अध्ययने), ३. अनुभवे, प्रतीक्षायां चेति। द्रष्टव्यो गाहदि (शौ०) इति प्रयोगः।

२०–१२. हिन्दीभाषायामेष चतुष्वर्थेषु दृश्यते—१. अवगाहने, २. मन्थने (विलोडने), ३. पोतसन्धिषु शणादिप्रपूरणे, ४. क्षेत्रकर्षणे चेति।

अस्य विलोडनार्थकस्य √गाह् धातोरर्थविस्तारो ज्ञायते पूर्वोल्लिखितार्थ-पर्यवेक्षणेन।

एवं तावन्नवस्वर्थेष्वयं दृश्यते प्रयुज्यमानः—

१. गहनम्, २. प्रवेशः, ३. दाढर्यम्, ४. अनावरणम्, ५. सेवनम्, ६. आश्रयः, ७. अवष्टम्भः, ८. गमनम्, ९. विनाशः, १०. मन्थनं चेति।

सप्तार्थेषु प्राकृतहिन्दीभाषयोर्लभ्यते प्रयुज्यमानः। ते चार्थाः २०.११; २०.१२ स्तम्भयोर्विलोकनीयाः।

२१. § √गृध् (गृधु) ४/१३३ अभिकाङ्क्षायाम् (प)। अभिकाङ्क्षा नामात्यन्तं स्पृहा। अभि=सम्मुखम्, काङ्क्षा=इच्छा। दृश्यते तादृशी प्रवृत्तिर्गृध्रे। ईहा-मृगेऽपीहाशब्दोऽप्येतादृश्या अभिकाङ्क्षामूलकप्रवृत्तेः परिचायकः। उपादानार्थकेन ग्रह् धातुनाऽभिसंबन्धोऽस्य विभावनीयः।

२१–१. ऋग्वेदे (१०, ३, ४) 'यस्यागृधद् वेदने वाज्यक्षः' इत्यत्र पुषादित्वादङ् इति गुणाभावः। इहाभिकाङ्क्षार्थः √गृध्धातोः। अभ्युपसर्गपूर्वकत्वेऽपि नार्थभेद ऋग्वेदे (द्रष्ट० ऋ० २, २३, १६)। 'आपश्च गृध्रः' इत्यृग्वेदे (१, १९०, ७) 'गृध्रः= गर्धनशीलो वृष्टिमाकाङ्क्षमाणः' इति सायणः। महाभारते (४, ९, ३३)—

**यो हि मां पुरुषो गृध्येद् यथान्याः प्राकृताः स्त्रियः।**
**तामेव निवसेद् रात्रिं प्रविश्य च परां तनुम्॥**

इत्यत्र 'कामयेत' इत्यर्थो गृध्येदित्यस्य। अमरसिंहेन 'गृध्नुस्तु गर्धनः। लुब्धोऽभिलाषुकस्तृष्णक् समौ लोलुपलोलुभौ' इति 'कामोऽभिलाषस्तर्षश्च' इति चोपश्लोकयता √गृध् √लुभ्-अभि+√लष्-√तृष्-प्रभृतीनां पर्यायवाचकत्वं दर्शितम्। दिवादौ तु पाणिनिनैव 'लुभ गार्ध्ये' इति पठितम्। तुदादौ स विमोहनार्थकः। महाभार० (३, ४, ७)—

**एष धर्मः परमो यत् स्वकेन**
**राजा तुष्येन्न परस्वेषु गृध्येत्॥**

इत्यत्र √ गृध्धातुर्लोभार्थकः। यद्यपि कामलोभयोर्भेदः स्पष्टः, तथाप्युभयोरभिकाङ्क्षा सदृशीति नास्ति काचन विप्रतिपत्तिः। एवमेव 'गोषु गृद्धा महाबलाः' मभार० (४, ३०, २६) इत्यत्र 'लुब्धाः' इति नीलकण्ठः।

२१–२. ऋ० (१, ७०, ११)—

**'साधुर्न गृध्नुरस्तेव शूरो यातेव भीमस्त्वेषः समत्सु'**

इत्यत्रायमर्थः—अयमग्निः साधुर्न=साधक इव गृध्नुः=ग्रहीता। यथा साधकः साध्यफलमाशु गृह्णाति तद्वद् अग्निरपि सर्वं स्वीकरोतीति। प्रसङ्गानुसारेणेह मन्त्रे √गृध्धातुर्ग्रहणार्थको न त्वभिकाङ्क्षार्थकः। एवमेव 'मा ते गृध्नुरविशस्तातिहाय च्छिद्रा गात्राण्यसिना मिथू कः' (ऋ० १, १६२, २०) इत्यत्र गर्धनं नाम ग्रहणेप्सेति। हिन्दीभाषायां तु कस्यचिद् वस्तुनः सुखमनुभूय पुनस्तल्लिप्सापरायणतायां √गोधना' इति धातुः।

२१–३. ऋ० (४, ३८, ३) 'पड्भिर्गृध्यन्तं मेधयुं न शूरम्' इत्यत्र यद्यपि √गृध्धातुर्नूनमभिकाङ्क्षार्थकः, तथापि पड्भिः=पादैरभिकाङ्क्षा नाम **गमनम्**। एतदर्थमेव सायण आह—पड्भिः=पादैरभिकाङ्क्षन्तं दिशो लङ्घितुं संग्रामेच्छुं शूरमिवेति।

२१–४. महाभारते (१४, १३, २)—

**बाह्यद्रव्यविमुक्तस्य शारीरेषु च गृध्यतः।**
**यो धर्मो यत् सुखं चैव द्विषतामस्तु तत् तथा॥**

इत्यत्र 'गृध्यतः=**सक्तस्य** यो धर्मः सोऽधर्मः' इत्याशयः। यद्यपि लोभार्थसंभावना शक्यते कर्तुम्, तथापि शारीरपदोपादानात् सङ्गरूपस्यार्थस्यौचित्यं निर्बाधम्। प्राकृतभाषायां √गिज्झ (<गृध्य्) इत्ययं धातुरासक्तिरूपे लाम्पट्ये प्रयुक्तः—गिज्झह (णायाधम्म० १, ८) इति।

२१–५. भारोपीयभाषाया मूलधातुरस्ति—√*'घेल्ध' इतीच्छार्थकः। सर्बियन्-भाषायां चर्चस्लावोनिकभाषायां च ज्लज्दो=गृध्यतीत्यर्थः। पुरातनचर्चस्लावोनिकभाषायां 'ग्लद'=गर्ध इति, अवेस्ताभाषायां गॅरॅद (Gərəda) इति। सेर्बोक्रोटियन्-भाषायां 'ग्लद्' (षष्ठ्यां ग्लद) इति। रसनभाषायां 'गोलॉद्' (षष्ठ्यां गोलॉद) इति। स्लावोनिकभाषायां *'गल्द' इत्ययं शब्दो बुभुक्षायां प्रयुज्यते।

कासुचिद् भाषासु संस्कृतभाषाया गकारो जकारत्वेनोपलभ्यते। स्लावोनिक्-भाषायाम्—*'जिल्दिओ' = आकाङ्क्षा, सर्बियनक्रोटियन्-चर्चस्लावोनिकभाषयोः 'ज्लज्दो,' 'ज्लदेति', इति, सेर्बोक्रोटियन्-भाषायां 'जुदिम', 'जुदेति' इति चाभिकाङ्क्षार्थकाः। द्र० इन्दोगर्मनिशेस् ऐतिमोलोगिशेस् वर्तरबूख (४३४ पृ०)।

चेकभाषायां संस्कृतभाषाया गकारो घकारो भूत्वा हकारत्वेन लभ्यते—ह्लद = गर्ध इति।

भारोपीयभाषाया धातुषु साहित्यप्रयोगमन्तरा नेदं शक्यते निश्चेतुं यत् कस्यचिदुपपदस्य संनिधानेनायमर्थो निष्पन्न उत वोपपदमन्तरा धातोरेव विशुद्धोऽर्थः।

एवं तावत् पञ्चस्वर्थेषु प्रयुज्यमानो विलोक्यते धातुरेषः—१. लोभः (आकाङ्क्षा), २. ग्रहणम्, ३. गमनम्, ४. सङ्गः (सक्तिः), ५. बुभुक्षा (भारोपीयभाषायाम्) इति।

२२. § √गॄ ९/२७ शब्दे (प)। धातोरियमानुपूर्वी निगरणार्थके तौदादिके √'गॄ' इत्यत्र, विज्ञानार्थके चौरादिके √'गॄ' इत्यत्र च दृश्यते। निघण्टौ (३/१४) त्वर्चतिकर्मा गृणातिः प्रतिपादितः। भारोपीयभाषाया *गुएर् इति मूलधातुरेनमर्थमेव संवदति निघण्टोः। तत्रार्चधातुना स्तुतिरूपोऽर्थ इष्यते, न तु पूजार्थः। स्तुत्या च संबन्धो विद्यते शब्दस्य।

२२–१. शब्देन स्तुतिकथनादिव्यापारा भवन्ति। तत्रादौ शब्दार्थे√गॄधातुर्ऋग्वेदे (१,१०,४) 'एहि स्तोमाँ अभि स्वराभि गृणीह्या रुव' इत्यत्र विलोकनीयः। स्तोमान् = उद्गातृप्रयुक्तानि स्तोत्राणि, अभि स्वर = अभिलक्ष्य प्रशंसारूपं शब्दं कुरु, तथाऽऽध्वर्यवमभिलक्ष्य गृणीहि = शब्दं कुरु। 'अव स्वराति गर्गरः' (ऋ० ८, ५८, ९) इत्यत्र गर्गरशब्दो ध्वनिं सूचयति। तथा च हरिवंशपुराणे (२, ५, २५) 'गर्गरोद्गारनिस्वनम्' इति प्रयोगः। उणा० (१, १२७) इत्यनेन गः; गर्गम् = शब्दं रातीति (३, २, ३) कः।

२२–२. यद्यपि शब्दनं नामोच्चारणम्, तथापि सूक्ष्मभेदादिहोच्चारणं पृथग् व्याख्यायते। ऋ० (१, ४८, ४)—'अत्राह तत्कण्व एषां कण्वतमो नाम गृणाति नृणाम्'—इत्यत्र 'कण्वः = महर्षिः, तत्रैव = उषःकाले, गृणाति = उच्चारयति' इति शब्दार्थः। श्रीमद्भागवतपु० (१, १, १४) 'आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन्' इत्यत्र 'गृणन् = उच्चारयन्' इत्यैदम्पर्यम्।

मनु० (८, ३६२) 'नैष चारणदारेषु' इत्यत्र चारणशब्दस्य नटगायकादिवाचकत्वात् स्पष्टम् उच्चारणरूपोऽर्थः। चारयन्ति कीर्तिम् इति णिजन्ताद् नन्द्यादिल्युः (३, १, १३४)। एवं तावदिह कस्याप्युपपदस्याभावे √चर्धातोरुच्चारणमर्थ उपपन्नः।

२२–३. उच्चारणानन्तरं वाक्यप्रबन्धरूपं कथनम्। ऋ० (१, १४, २)—'आ त्वा कण्वा अहूषत गृणन्ति विप्र ते धियः' इत्यत्र 'कण्वाः = मेधाविन ऋत्विजस्त्वाम् अहूषत = आह्वयन्ति, तथा ते धियः = कर्माणि गृणन्ति = कथयन्ति' इत्याशयः।

ऋ० (१, १००, १७) 'वार्षागिरा अभि गृणन्ति' इत्यत्र 'अभिगृणन्ति = आभिमुख्येन वदन्ति' इत्यर्थः । श्रीमद्भागवतपु० (१,४,९) 'तस्य जन्म महाश्चर्यं कर्माणि च गृणीहि नः' इत्यत्र कथनरूपोऽर्थः ।

२२-४. वाक्यप्रबन्धरूपकथनानन्तरं प्रशंसा स्तुतिर्वा । ऋ० (१, ४८, ११) 'ये त्वा गृणन्ति वह्नयः' इत्यत्र वह्निकर्तृकस्तुतिरूपस्यार्थस्य स्फुटं प्रतीतिः । एवमेव 'स्तोमं जुषस्व गृणतो मघोनि' (ऋ० ३, ६१, १) इत्यत्र बोध्यम् । 'तं ते मदं गृणीमसि' (ऋ० ८, १५, ४) इत्यत्र मदम् = सोमपानजनितं हर्षं गृणीमसि = प्रशंसाम इति सायणः । ऋ० (५, ४१, १९) 'उर्वशी वा बृहद्दिवा गृणाना' इत्यत्र 'शब्दयन्ती = अस्मदीयं कर्म प्रशंसन्ती' इति तदर्थः । श्रीमद्भगवद्गीतायां (११, २१) 'केचिद् भीताः प्राञ्जलयो गृणन्ति' इत्यत्र 'गृणन्ति = स्तुवन्ति' इति शाङ्करभाष्यम्, 'प्रार्थयन्ते' इति नीलकण्ठकृतव्याख्यायाम् । भट्टि० (८,७७) 'गृणद्भ्योऽनुगृणन्त्यन्ये' इत्यत्र 'गृणद्भ्यः = स्तुतिं कुर्वद्भ्यः' इति जयमङ्गलः ।

२२-५. पठनमप्युच्चारणमेव । कथनप्रशंसादितो भिन्नमेतद् महाभारते (७, ४२, १४)—

देवमाराधयच्छर्वं गृणन् ब्रह्म सनातनम् ।
भक्तानुरूपी भगवांस्तस्य चक्रे ततो दयाम् ॥

इत्यत्र ब्रह्मपदेन वेदग्रहणम् इति √गॄधातुः पठनार्थकः । रघु० (१०, १३)—

'महर्षिभिः परं ब्रह्म गृणद्भिरुपतस्थिरे ।'

इत्यत्रापि पठनरूपोऽर्थो √गॄधातोः—'ब्रह्म = वेदरहस्यं गृणद्भिः = पठद्भिः' इति मल्लिनाथः ।

२२-६. स्थूलेभ्यः स्तुतिपठनाद्यर्थेभ्यो ध्यानरूपस्यार्थस्य विकासो नीलकण्ठ-दर्शितो नूनं मननीयः । महाभारते (१२, ४७, २६)—

गृणन्ति सत्यकर्माणं सत्यं सत्येषु सामसु ।
चतुर्भिश्चतुरात्मानं सत्त्वस्थं सात्वतां पतिम् ॥

इत्यत्र 'गृणन्ति=ध्यायन्ति' इत्याह नीलकण्ठः । शरशय्यागतो भीष्मो भगवन्तं कृष्णं स्तुवन्निदमाह वचनं प्रागुक्तम् ।

२२-७. 'ज्ञानाद् ध्यानं विशिष्यते' इति गीतोक्तिस्मरणेन ज्ञानध्यानयोः संबन्धः । नेह तयोः पौर्वापर्यक्रमविचाराभिनिवेशः, किन्तु √गॄधातोर्ज्ञानरूपस्यार्थस्य विचारावकाशः । यशस्तिलकचम्प्वाम् (२,१४९)—

येऽन्यत्र मन्त्रमहिमेक्षणमुग्धबोधाः
शर्वैषिणः पुनरतः शिवतां गृणन्ति ।

इत्यत्र 'अतः (=अस्माद् रुद्रात्)' इति पदसंनिधानेन √गॄधातुर्ज्ञानार्थः । येऽस्माद् रुद्राद् शिवताम् = मुक्तत्वम्, गृणन्ति = जानन्ति 'ते नावितारणदृशो दृषदोऽ-

वलम्ब्य दुष्पारमम्बुधिजलं परिलङ्घयन्ति' इत्युत्तरार्द्धस्य श्लोकस्य भावः। 'ऋते ज्ञानान्न मुक्तिः' इति सिद्धान्तोऽत्रानुस्यूतो लक्ष्यते। अत एव श्रुतसागरसूरिणा 'गृणन्ति= जानन्ति' इत्यर्थो विहितः। तन्न मनोरमम्, √ज्ञाधातुयोगे पञ्चमीविधानादर्शनात्, 'मुग्धबोधाः=अचतुरबुद्धयः' इति विशेषणदर्शनेन तेषामचतुरबुद्धीनां ज्ञानार्जने पाटवाभावाच्च। एवं तावच्छिवसम्बन्धिज्ञानाभावो नूनं सिध्यति तेषाम्। वस्तुतः पञ्चम्यन्तपदोपादानेन 'मुग्धबोधाः' इति विशेषणोपन्यासेन च √गृधातोर्याचनार्थः सुतमां सिध्यति। अतः=अस्माद् (रुद्रात्) सकाशाच्छिववतां मुक्तिं ये गृणन्ति = याचन्ते ते दुष्पारमम्बुधिजलं परिलङ्घयन्तीति संगतिः। सार्वविभक्तिकतसेस्तु नारतीहावसरः। स्तुतिर्याचनार्थं क्रियते प्रायशः। वेदेषु सा बाहुल्येन दृश्यते। तस्या एव याचनार्थं क्रियमाणायाः स्तुतेर्याचनार्थो विकसितः। एवं √गृधातुर्याचनार्थो जातः।

एवं तावत् सप्तस्वर्थेषु लभ्यते प्रयुज्यमानोऽयं धातुः—१. शब्दः, २. उच्चारणम्, ३. कथनम्, ४. स्तुतिः, ५. पठनम्, ६. ध्यानम्, ७. याचनं चेति। शब्दरूपमूलार्थाज्जाता विस्तृता अर्था इतीहार्थविस्तारो नाम।

भारोपीयभाषाया मूलधातुरस्ति *ग्वेर् (एँ) इति। तस्य शब्दप्रशंसादयोऽर्थाः। संस्कृतभाषायां 'गिर्' इति शब्दः, अवेस्ताभाषायां तु 'गर्' इति। पारसीकभाषायाः षष्ठीविभक्तौ 'गरो' इति, संस्कृतभाषायाः षष्ठ्यां तु 'गिरः' इति। तत्र पारसीकभाषायां 'गरः' इति क्लीबः शब्दः। अवेस्ताभाषायां 'ऐबि–जरॅतय्'=प्रशंसाकथनम्, ऐबि-जरेतर्=प्रशंसकः।

२३. √ग्रह् (ग्रह) ९।६१ उपादाने (उ)। वोपदेवस्त्वादान इत्याह। अस्य धातोः √गृह् (गृहू) १।६४२, <ग्लह् (ग्लहू) [तुल० पाणि० अ० (३, ३ ७०)] इत्याभ्याम्, अदनार्थकाभ्यां ग्रस्-ग्लस् इति धातुभ्यां च संबन्धः। वेदेषु गृभ् इत्यपि प्रकृतिः, सा च प्राथमिकी। भकारस्य वकारोऽवेस्ताभाषायां 'गरवनाति' इति, नवीनपर्सियनभाषायां च फकारः—ग्रिफ्त<सं० गृभीत—इति। संस्कृतभाषायां तु भकारस्य हकारत्वेन विकासः, विष्णुपुराणे (२, ३) 'भव्य' इति राज्ञो नामधेयं नैषधमहाकाव्ये (११, ३७) 'हव्य' इति लभ्यते।

२३–१. आदानं परिग्रहः स्वीकरणं ग्रहणमित्यनर्थान्तरम्। ऋग्वेदे (७, ४, ३) 'अस्य देवस्य संसद्यनीके यं मर्तासः श्येतं जगृभ्रे' इत्यत्र 'यम्=अग्निम्, मर्तासः= मनुष्याः, जगृभ्रे=परिगृह्णन्ति' इति प्रसङ्गः। 'तं मे जगृभ्र आशसो नविष्ठं दोषा' (५, २, ११) इत्यृग्वेदे 'जगृभ्रे=गृह्णन्तु=स्वीकुर्वन्तु' इति सायणः। 'किं स्विन्नो राजा जगृहे' (१०, १२, ५) इतीहर्ग्वेदे 'राजा=दीप्यमानोऽग्निः, नः=अस्माकं स्वभूतानि हवींषि स्तुतीश्च जगृहे=परिगृह्णीयात्' इत्याकूतम्। एवमेव 'तमित्पृच्छन्ति न सिमो वि पृच्छति स्वेनेव धीरो मनसा यदग्रभीत्' (ऋ० १, १४५, २), अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि' (ऋ० १०, १०३, १२) इत्युभयत्रापि स्वीकारोऽर्थो √ग्रह् धातोः। हिन्दीभाषायामपि √गह इति धातुः प्रतिज्ञायाम्=स्वीकारे प्रयुज्यते—'बाँह गहे की लाज' इति। वा० रा० (१, ७५, २)—

तदद्भुतमचिन्त्यं च भेदनं धनुषस्तथा।
तच्छ्रुत्वाहमनुप्राप्तो धनुर्गृह्यापरं शुभम् ॥

इत्यत्र 'गृह्य=गृहीत्वा' इत्यर्थः। यद्यपि स्वीकरणमात्रं ग्रहणम्, तथापि तत्रापि भेदा भवन्ति विविधाः। धनुर्ग्रहणे हस्तसंयोगानुकूलव्यापारः। अग्नेर्ग्रहणं तथा न संभवति। अग्निना हविषो ग्रहणं नामात्मसात्करणम्, स्तुतिग्रहणं नाम मनसा प्रतिश्रवः। मनसा (ऋ० १, १४५, १) ग्रहणे शारीरेण केनाप्यङ्गेन संयोगानुकूलव्यापारो भवितुं नार्हति। अङ्गानां ग्रहणं (ऋ० १०, १०३, १२) नाम तेषामेकीभाव इत्यग्रेऽपि समुन्नेयम्।

२३–२. 'गृभाय जिह्वया मधु' (ऋ० ८, १७, ५)। तुल० अवेस्ता—गउर्वय (<गृभाय) इति। जिह्वया मधुनो ग्रहणं नाम समास्वादो लेहनं वा। ग्रहणमिति नास्ति विशिष्टो व्यापारः। किन्तु यादृशयादृशकर्मकरणादीनां संनिधानेन तादृशतादृशो भवति विशिष्टोऽर्थः।

२३–३. ऋ० (६, ७२, ४)—

इन्द्रासोमा पक्वमामास्वन्तर्नि गवामिद्दधथुर्वक्षणासु।
जगृभथुरनपिनद्धमासु रुशच्चित्रासु जगतीष्वन्तः॥

इतीह मन्त्रे वक्षणासु रुशद्ग्रहणं नाम धारणम्। वक्षणासु=ऊधःसु, रुशत्=शुक्लवर्णं पयः, जगृभथुः=यथा पृथिव्यां स्वयं न क्षरति तथा धारितवन्तावित्यर्थः। महाभारते (१, ११५, ९) 'ततः कालेन सा गर्भं धृतराष्ट्रादथाग्रहीत्' इत्यत्र गर्भमधारयद् आहितवतीत्यर्थः। वा० रा० (१, ६६, १९) 'न शेकुर्ग्रहणे तस्य धनुषस्तोलनेऽपि वा' इत्यत्र भिन्नप्रकारकं धारणम्।

२३–४. ऋ० (१, १९१, १३)—

नवानां नवतीनां विषस्य रोपुषीणाम्।
सर्वासामग्रभं नामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार॥

इति मन्त्रे नवतीनां रोपुषीणां नाम्नो ग्रहणं नामोच्चारणम्। उच्चारणं विना नाम्नो ग्रहणं न संभवति। अत एव सायणोऽपि व्याख्यत्—नवानां नवतीनाम्=नवाधिकानां नवतिसंख्याकानां नदीनाम्, विषस्य=अस्मद्व्यापकस्य सर्वस्य विषस्य, रोपुषीणाम्=लोपयित्रीणां छेत्त्रीणाम्, सर्वासाम् उक्तानां गङ्गादिनदीनां नाम अग्रभम्=गृह्णामि संकीर्तयामीति। मनु० (५, १५७) 'न तु नामापि गृह्णीयात्' इत्यत्र कुल्लूकभट्ट उच्चारयेदित्यर्थमाह। नैषध० (१४, ३२)—'देव्याः श्रुतौ नेति नलार्द्धनाम्नि गृहीत एव त्रपया निपीता' इत्यत्र नामपदसांनिध्यादुच्चारणमर्थो ग्रह् धातोः। प्रकाशकारोऽप्यत्रानुकूलः। नैषध० (२१, १११) 'लीलयाऽपि तव नाम जना ये गृह्णते नरकनाशकरस्य' इत्यत्र 'गृह्णते=उच्चारयन्ति' इति प्रकाशटीका, कीर्तयन्तीति जीवातुः।

२३–५. यत्र मुष्टिग्राहं गृह्यते, तत्र ग्रहणम्। ऋग्वेदे (१, १६३, २; ९, १, ९; ७, १०४, ८) इत्यादौ, मनु० (८, २८३) 'केशेषु गृह्णतः' इत्यत्र, (१०, १००) 'गृहीत्वा

मुसलम्' इत्यत्र, 'ग्रहाय व्यजनं चैव' (हरि० २, ६६, १४)=गृहीत्वा (नी०) इत्यत्र च तादृशोऽर्थः। 'स्कन्धेनादाय मुसलम्' इत्यत्र तु वहनरूपः स्थापनरूपो वार्थ आदानस्य। नक्रादिवाचकस्य 'ग्रहः' इति शब्दस्य दृढग्रहणकारणादेव तदर्थे प्रयोगो ज्ञेयः।

२३–६. न्युपसर्गपूर्वको ग्रह् धातुर्निग्रहार्थको भवति। निग्रहो नाम निरोधो बन्धनं वा। गीतायाम् (६, ३५)—

असंशयं महाबाहो मनो दुर्निग्रहं चलम्।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते॥

इत्यस्य श्लोकस्य पूर्वार्द्धे मनसो दुर्निग्रहता चलता च वर्णितेत्युत्तरार्द्धे 'गृह्यते' इत्यनेन निगृह्यते=निरुध्यत इत्यर्थः स्फुटोभवति (द्र० शाङ्करभाष्यम्)। महाभारते (८, १३, ३७)—

स शरौघार्दितो नागो भीमसेनेन संयुगे।
गृह्यमाणोऽपि नातिष्ठद् वातोद्धूत इवाम्बुदः॥

इत्यत्र नागस्य=हस्तिनो हस्तादिना ग्रहणं न सिध्यतीति निग्रहोऽर्थो बोद्धव्यः। नीलकण्ठेनापि 'गृह्यमाणः=निगृह्यमाणः' इति व्याख्यायि। श्रीमद्भागवतपुराणे (९, २४, ३९) 'दमघोषश्चेदिराजः श्रुतश्रवसमग्रहीत्' इतीहापि निग्रहरूपेऽर्थे वर्तते ग्रह् धातुर्न्युपसर्गाद् ऋतेऽपि। महाभारते (३, ५३, १९) 'वने विचरतां तेषामेकं जग्राह पक्षिणम्' इत्यत्र 'दृष्ट्वा ग्रहीतुं खगमांस्त्वरमाणोपचक्रमे' इत्यत्र च निग्रहोऽर्थः।

२३–७. वा० रा० (२, ३९, २३)—

न कुलं न कृतं विद्या न दत्तं न च संग्रहः।
स्त्रीणां गृह्णाति हृदयम् अनित्यहृदया हि ताः॥

इत्यत्र, मृच्छकटिके (१, ५०)—

आलाने गृह्यते हस्ती वाजी वल्गासु गृह्यते।
हृदये गृह्यते नारी यदिदं नास्ति गम्यताम्॥

इत्यत्र च प्रतिबन्धरूपोऽर्थो ग्रह् धातोः। तिलकटोकायामस्योल्लेखः।

१३–८. वा० रा० (२, १२, २८)—

सान्त्वयन् सर्वभूतानि रामः शुद्धेन चेतसा।
गृह्णाति मनुजव्याघ्रः प्रियैर्विषयवासिनः॥

इत्यस्य श्लोकस्य√ग्रह् धातुर्वशीकाररूपेऽर्थे दर्शनीयः, इह प्रतिबन्धं विनापि ग्रहणमस्ति। प्रतिबन्धे तु नैष प्रकारः। तिलकटीकायां वशीकरोतीत्यर्थं इह साधु संगच्छते। एवमेव 'अप्रियं प्रियवाक्यैश्च गृह्णते कालयोगतः' (मभार० १३, ३९, ८), 'लुब्धमर्थेन गृह्णीयात्' (चाण० ३३), 'माधुर्यमीष्टे हरिणान् ग्रहीतुम्' (रघु० १८, १३) इत्यादिषु वशीकाररूपोऽर्थो विलसति। यद्यपि वशीकरणं निग्रहान्तर्गतमेव, तथापि

सूक्ष्मतादर्शनार्थमिह पृथग् विवेचनं कृतम्। इतोऽपि सूक्ष्मता त्वस्मदीये 'उपसर्गार्थ-विज्ञानम्' इति ग्रन्थे विलोकनीयेत्यलम्।

२३–९. वा० रा० (१, ६१, २३)—

गवां शतसहस्रेण शुनःशेपं नरेश्वरः।
गृहीत्वा परमप्रीतो जगाम रघुनन्दनः॥

इत्यत्र गवां शतसहस्रेण शुनःशेपस्य ग्रहणं नाम क्रयः, मूल्यद्वारा सामान्य-ग्रहणस्याभावात्। पञ्चतन्त्रे (५, ९) 'ततस्तेन मयाऽजाद्वयं ग्रहीतव्यम्' इत्यत्र रूपकाणां शतेनाजाद्वयस्य ग्रहणं नाम क्रयः।

२३–१०. हरिवंशपुराणे (३, २९, १५)—

स तं दण्डं समुचितं निर्विकारं समाहितम्।
ब्रह्मा जग्राह विधिना अन्तर्धानगतः प्रभुः॥

इत्यत्र समुचितस्य निर्विकारस्य समाहितस्य=असुरेषु निपातितस्य च दण्डस्य विधिपूर्वकं ब्रह्मद्वारा ग्रहणं नामानुमतिः। तदाह नीलकण्ठः 'जग्राह=अनुमेने' इति।

२३–११. हरिवंशपुराणे (३, २४, १३)—

यस्य नैव श्रुतं ब्रह्मन् न गृहीतं विशाम्पते।
कामं तं धार्मिको राजा शूद्रकर्माणि कारयेत्॥

इह श्रुतं न 'गृहीतम्=अनुष्ठितम्' इति नीलकण्ठः।

२३–१२. ऋ० (१, १३९, १०) 'जगृम्भा दूरआदिशं श्लोकमद्रेरध त्मना' इत्यत्र दूरदेशे आदिक्=आदेशो यस्य तादृशस्य श्लोकस्य=वाचो ध्वनेर्वा श्रोत्राभ्यां ग्रहणं नाम श्रवणम्। रघु० (११, १५) 'ज्यानिनादमथ गृह्णती तयोः' इत्यत्रापि ज्यानिनादस्य ग्रहणेन श्रवणमभिप्रेयते। मल्लिनाथोऽप्याह—'तयोर्ज्यानिनादं गृह्णती=जानती, शृण्वतीत्यर्थम्' इति। 'न चक्षुषा गृह्यते' (मुण्डकोप० ३, १ ८) इत्यत्र, 'चक्षुषा गृह्यते रूपम्' इत्यादौ च दर्शनमर्थः।

२३–१३. कस्यचिदात्मीयजनस्य दूरदेशादागमने यद् ग्रहणं तत् स्वागतम्। हिन्द्याद्याधुनिकभाषासु 'वरात लेना' इत्यस्यार्थो जन्ययात्रिकाणां स्वागतम्। वाल्मीकीयरामायणे (१, ७७, ११; १२) श्रीरामादीनां चतुर्णां पुत्राणां विवाहानन्तरमयोध्यागमने सति कौसल्यादिभिर्वधूनां ग्रहणम्=स्वागतं कृतम्—

ततः सीतां महाभागामूर्मिलां च यशस्विनीम्।
कुशध्वजसुते चोभे जगृहुर्नृपयोषितः॥ इति।

'गृहीतोऽनन्यभावेन यत् त्वया हरिरीश्वरः' इति श्रीमद्भागवतपुराणे (३, ५, १९) मैत्रेयस्योक्तिः सूतं प्रति। इहापि स्वागतं पूजा वार्थो ग्रह् धातोः।

२३–१४. उपसमुपसर्गपूर्वकस्य √ग्रह् धातोरर्थोऽभिवादनम् = पादपतनपूर्वकं प्रणामः (तिलकटीका, वा० रा० २, २०, २१; मन्वर्थ० २, १३२)। उपसमुपसर्गौ विनापि प्रणतिरूपोऽर्थो लभ्यते मनुस्मृतौ (२, ७१) 'पादौ ग्राह्यौ गुरोः सदा' इत्यत्र। पादयोर्ग्रहणे भवन्त्यनेकानि प्रयोजनानि। शत्रुः पादं गृहीत्वा पातयति, नापिताऽलक्तकमायोजयितुं करोति तथा। एवं तावत् पादयोर्ग्रहीतुर्गृहीतपादस्य च संबन्धं विचार्य जायतेऽर्थस्य स्पष्टता। शिष्यद्वारा गुरोः पादग्रहणेन प्रणतौ तात्पर्यम्, तादृशपरम्परानिर्वाहात्।

२३–१५. √ग्रह् धातुर्ज्ञानार्थे प्रसिद्धः, ज्ञानेन भवत्यात्मसात्करणम्, न तु कण्ठस्थीकरणेन। अयमर्थ उभयथा लभ्यते—उपपदसन्निधानेन स्वातन्त्र्येण च। वा० रा० (१, २२, १३) 'मन्त्रग्रामं गृहाण त्वं बलामतिबलां तथा' इत्यत्र ग्रह् धातुर्ज्ञानार्थः। रघु० (५, ५९) 'उदङ्मुखः सोऽस्त्रविदस्त्रमन्त्रं जग्राह तस्मान्निगृहीतशापात्' इत्यत्रापि ज्ञानार्थो ग्रह् धातुः। उभयत्रैव मन्त्रशब्द उपपदरूपेण प्रयुक्त इति तत्सांनिध्येन तादृशस्यार्थस्यावगमः सुकरः। 'एवमात्मनि गृह्यतेऽसौ' (१, १५) इति श्वेताश्वतरोपनिषदि, 'पदोत्तरपदं गृह्णाति' (४, ४, ३९) इति पाणिनीये सूत्रे, 'मासमधीतोऽनुवाको न चानेन गृहीतः' इति काशिकायाम् (२, ३, ६), 'सकृदुक्तं न गृह्णाति' इति पञ्चतन्त्रे (२, १८०) च ज्ञानार्थको ग्रह् धातुः। मालविकाग्निमित्रे (षट्चत्वारिंशे पृष्ठे) 'देवि, श्रूयताम्, एनं जनो गृह्णाति' इत्यत्र साधारणो लोको यज्जानाति तच्छ्रूयतामिति शब्दार्थः। इह कस्याप्युपपदस्याभावेऽपि ग्रह् धातुर्ज्ञानार्थमभिव्यनक्ति। नैषध० (२, ६१) 'स्वत एव सतां परार्थता ग्रहणानां हि यथा यथार्थता' इत्यत्र, (१६, ६१) 'अवादि वा यन्मृदु गद्गदं युवा तदेव जग्राह तदाप्तिलग्नकम्' इत्यत्र चोभयत्र ग्रह् धातुरुपपदान्तरसाहायकं विना ज्ञानार्थकः। उभयत्र प्रकाशजीवातुटीकाकारयोरैकमत्यम्। णिच्यपि तस्यैषोऽर्थः सुरक्षितः। भट्टि० (२, ४२) 'अजिग्रहत् तं जनको धनुस्तद् येनार्दिदद् दैत्यपुरं पिनाकी' जनको राजा तं रामं तद् धनुः, अजिग्रहत्=बोधितवान् इत्यर्थः। इहाध्यापनरूपोऽर्थो नास्ति। प्राकृतभाषाया गहेइ (सण) इति प्रयोगो ज्ञानार्थकः।

२२–१६. महाभारते (१, १६३, ३–५) भीमसेनो वकासुरवधाद् भीतान् राक्षसान् सान्त्वयामास समये=शपथे च न्यवेशयत्—युष्माभिर्भूयो न कर्हिचिद् मानुषा हिंस्याः, अन्यथा हिंसतां वध एवमेव शीघ्रं भवेदिति। तानि रक्षांसि तस्य तद्वचनं श्रुत्वा 'एवमस्तु' इति भीमसेनं प्राहुः समयं च जगृहुः—'एवमस्त्विति तं प्राहुर्जगृहुः समयं च तम्' इत्यत्र √ग्रह् धातुः स्वीकारार्थोऽनुमोदनार्थो वेति जायते विचिकित्सा, स्वीकारानुमोदनयोः सूक्ष्मभेदस्य दुरनुसन्धेयत्वात्। कृतस्य कस्यचित् कार्यस्य प्रपुष्टिर्नामानुमोदनम्, यथा भागवते—'भवता यद् व्यवसितं तन्मे साध्वनुमोदितम्।' शाकुन्तलेऽपि 'श्रूयन्ते परिणीतास्ताः पितृभिश्चानुमोदिताः' इति। नेहानुमोदनरूपोऽर्थः, शपथस्य भीमसेनेनाकृतत्वात्। यद्यपि 'एवमस्तु' इत्यनेनाभ्युपगम एव, तथापि शपथस्योपपदत्वाद् ग्रह् धातुरत्र करणार्थकः–शपथं यथा स्यात् तथा गृहीतवन्तः = कृतवन्त इति। शपथ एव तात्पर्यम्, ग्रह् धातुस्तु तत्र सामान्यक्रियावाचकः। एवमेव 'उपवासं

तु गृह्णीयाद् यद् वा संकल्पयेद् व्रतम्' इति महाभारते (१२, १२६, २०) ग्रह् धातोरर्थः समाश्रोतव्यः।

२३–१७. श्रीमद्भागवतपु० (१, २, १२) 'पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतगृहीतया' इत्यत्रानुष्ठितया भक्त्येति दर्शनाद् ग्रह् धातुरत्रानुमोदनार्थकः। श्रुतानुमोदितया भक्त्याऽऽत्मन्यात्मानं पश्यन्तीति तदर्थः। ज्ञानार्थो न युज्यते विधातुम्, श्रुतानुवर्तिभिः शास्त्रैर्वेदानुमोदितकर्मणामेव विधानात्। अयमर्थोऽनुमत्यर्थेन चरितार्थः (दशमकण्डिकायां द्रष्टव्यः)।

२३–१८. महाभारते (२, ८१, ३९)—

एवं गाल्वगणे क्षत्ता धर्मार्थसहितं वचः।
उक्तवान् न गृहीतं वै मया पुत्रहितैषिणा॥

इत्यत्र वचोग्रहणं नाम श्रवणं नास्ति। श्रवणाभावे स्मरणस्यानुपपन्नत्वात्। लोकभाषायामपि 'वह मेरी बात नहीं सुनता' इतीह श्रवणाभावे तात्पर्यं नास्ति। यथोचितप्रभावाभावे श्रवणस्य नैष्फल्यमिति श्रवणमश्रवणमेव। यथोचितप्रभावे तु श्रवणं वस्तुतः श्रवणमिति हृदि करणं नाम श्रवणम्। एवमेव महाभारते धर्मार्थसहितं वचो न गृहीतमित्यस्य 'न हृदि कृतम्' इत्याकूतम्। श्रीमद्भागवते (४, ९, ३२)—

मतिर्विदूषिता देवैः पतद्भिरसहिष्णुभिः।
यो नारदवचस्तथ्यं नाग्राहिषमसत्तमः॥

इति ध्रुवोक्तिः। 'तथ्यं नारदवचो नाग्राहिषम्' इत्यत्रापि ग्रह् धातोर्हृदि करणमर्थः, न तु श्रवणम्। महाभारते (७, ८१, १८)—

तस्य मौर्वीं च मुष्टिं च स्थानं चालक्ष्य पाण्डवः।
श्रुत्वा मन्त्रं भवप्रोक्तं जग्राहाचिन्त्यविक्रमः॥

इत्यत्र मन्त्रस्य श्रवणानन्तरं ग्रहणं नाम मनसि करणम्=अवधारणम्। मनु० (८, २७) 'गृह्यतेऽन्तर्गतं मनः' इत्यत्र अवधारणरूपोऽर्थो ग्रह् धातोः, अन्तर्गतमनः-पदसंनिधानेन तादृशस्यैव बोधात्। शाकु० (२, १९) 'परिहासविजल्पितं सखे! परमार्थेन न गृह्यतां वचः' इत्यत्र दुष्यन्तस्य विदूषकं प्रत्युक्तिः। परिहासविजल्पितस्य वचसः परमार्थेन ग्रहणम्=अवधारणम् इति।

२३–१९. महाभारते (३, २९५, १८)—

गते पितरि सर्वाणि संन्यस्याभरणानि च।
जगृहे वल्कलान्येव वस्त्रं काषायमेव च॥

यद्यपीह धारणरूपेणार्थेनैव गतार्थता, तथापि प्रतिवस्तु ग्रहणप्रकारभेदेनार्थभेदः। यष्टिग्रहणे तस्या हस्ते करणरूपप्रकारो भिन्नः। कुण्डलयोर्ग्रहणं नाम कर्णयोः संनिवेशनम्। चमसस्य ग्रहणं धारणप्रकारभेदमभिव्यनक्ति। लेखनीग्रहणेनापि कर-

शाखानां योजनवैशिष्ट्यं लक्ष्यते। एवमेव वल्कलानां ग्रहणं नाम संनिवेशविशेषः। स च परिधानशब्देन ज्ञायते। गीतायाम् (२, २२) 'वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि' इत्यत्र ग्रहणस्य तथैवार्थोऽभ्युपगन्तव्यः।

२३–२०. सोपसर्गाणां सर्वेषां धातूनां ते तेऽर्था उपसर्गविरहेऽपि धातूनां भवन्त्येवेति सिद्धान्तः। संपूर्वकस्य ग्रह् धातोः संग्रहरूपोऽर्थः। भाग० पु० (८, ७, २३)—

सहायेन मया देवा निर्मन्थध्वमतन्द्रिताः।
क्लेशभाजो भविष्यन्ति दैत्या यूयं फलग्रहाः॥

इति भगवदुक्तिः। 'फलग्रहाः' इत्यत्र ग्रह् धातुः संग्रहार्थः।

२३–२१. मनु० (८, २७१) 'नामजातिग्रहं त्वेषामभिद्रोहेण कुर्वतः' इत्यत्र नामग्रहस्य जातिग्रहस्य चोच्चारणमर्थो नास्ति, उच्चारणं विनापि नाम्नो जातेश्च तथा निर्देशः शक्यते कर्तुं येनाभिद्रोहोऽभिव्यज्येतेत्यत्र ग्रह् धातुर्निर्देशार्थः।

२३–२२. भाग० पु० (३, १६, २३)—

न त्वं द्विजोत्तमकुलं यदिहात्मगोपं गोप्ता वृषः स्वर्हणेन ससूनृतेन।
तर्ह्येव नङ्क्ष्यति शिवस्तव देव पन्था लोकोऽग्रहीष्यदृषभस्य हि तत्प्रमाणम्॥

इत्यत्र पथिपदसंनिधानाद् लोकद्वारानुवर्तनमभिप्रेयत इति ग्रह् धातुरनुवर्तनार्थकः। 'मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः' इति गीतायां स्पष्टमनुवर्तनप्रयोगः। 'जग्राह स द्रुतवराहकुलस्य मार्गम्' इति रघु० (९; ५९) 'अनुससार' इति मल्लिनाथः।

२३–२३. 'जग्राह विद्याः प्रकृतीश्च पित्र्याः' इति रघु० (१८, ५०) विद्यानां ग्रहणं नाम स्वायत्तीकरणम्। 'परिखावलयच्छलेन या न परेषां ग्रहणस्य गोचराः' इति नैषध० (२, ९५) प्रकाशटीकायां स्वाधीनत्वरूपोऽर्थो ग्रहणशब्दस्य। जीवातुटीकायां त्वाक्रमणज्ञानरूपौ द्वावर्थौ दर्शिताविति संशयालुः सः।

२३–२४. 'पटुरपि प्रियकण्ठजिघृक्षया' इति रघु० (९, ४६) आलिङ्गनार्थो ग्रह् धातुः। यद्यपि नानाविधान्युद्देश्यानि कण्ठग्रहणेन सिध्यन्ति मारणोपचारादिरूपीणि, तथापि प्रियशब्ददर्शनेन व्यापारभेदात् तथार्थः।

२३–२५. 'यात्रां जग्राह' इत्यत्र नैषधे (१७, १५९) ग्रह् धातोः प्रस्थानमर्थः, यात्रापदोपादानात्। प्रकाशटीकाकारोऽप्याह—'प्रतस्थे' इति।

२३–२६. 'गुणं गृह्णन्' इत्यत्र नैषधे (१२, ९७) वर्णयन्निति प्रकाशटीकाकारः। यद्यपि गुणपदोपादानादेवेह वर्णनरूपोऽर्थः, तथापि संपूर्णप्रसङ्गमवधार्यैवार्थनिर्णयस्यौचित्यम्। महाभारते (१४, ४३, २८)—

धर्मलक्षणसंयुक्तमुक्तं वो विधिवन्मया।
गुणानां ग्रहणं सम्यग् वक्ष्याम्यहमतः परम्॥

इत्यत्र ग्रह् धातुर्बोधपरः।

२३–२७. 'अवश्यभव्येष्वनवग्रहग्रहा' इति नैषधे (१, १२०) आङ्पसर्गपूर्वकस्य ग्रह् धातोराग्रहरूपार्थस्य प्रतिपादनम् । तदाह प्रकाशटीकाकारः 'अभिनिवेशः' इति । तत्रैव (१७, ४४) 'येषां वः पत्युरत्युच्चैर्गुरुदारग्रहे ग्रहः' इत्यत्राप्यभिनिवेशरूपोऽर्थो वेदितव्यो ग्रह् धातोः, ग्रहः=आग्रह इति । 'ब्रह्मन् ग्रहस्तवायं चेत् तत् करोमि वचस्तव' इति कथासरित्सागरः (२४, १५७) ।

'मा स्म भूर्ग्राहिणी भीरु' इति भट्टि० (५, ९३) रावणोक्तिः सीतां प्रति । वस्तुतोऽत्राङुपसर्गपूर्वकस्य धातोरिवार्थं उपसर्गं विनैवेत्याग्रहकारिणी मा भूदित्यर्थः । स्वेतरपक्षाऽऽग्रहो नाम प्रातिकूल्यम् ।

२३–२८. 'नतसुग्रीवगृहीतसादराज्ञम्' इति भट्टि० (१०, ४३) प्रतिष्ठारूपोऽर्थो ग्रह् धातोः, सीताया अन्वेषणं कारयित्वा सुग्रीवेण गृहीता=प्रतिष्ठिता सादराज्ञा यस्य तम् इति प्रसङ्गात् । अत इह स्वीकारार्थो नोपयुक्तः ।

२३–२९. 'गृहाणैतासु मत्सरम्' इति भट्टि० (२०, २) सीतां प्रति हनूमदुक्तिः । एतासु='राक्षसीषु मत्सरं गृहाण' इति वाक्ये ग्रह् धातुर्जननार्थकः । मत्सरोत्पादनेन गृहीतक्रोधा सती त्वं तासां हननार्थं मामनुज्ञास्यसीति शेषः ।

२३–३०. किराता० (१०, ८) ऋतुरिव तरुवीरुधां समृद्धया युवतिजनैर्जगृहे मुनिप्रभावः' इत्यत्र 'युवतिजनैर्मुनिप्रभावो जगृहे' इति वाक्यात् कीदृशोऽर्थो ग्राह्यः ? तरुवीरुधां समृद्धावृतुप्रभावो निश्चितः । ज्ञानानन्तरं निश्चयः, न तु ज्ञानात् पूर्वम् इत्युपमेयमुनिप्रभावोऽपि निश्चितः, उपमानार्थदर्शनात् । एवं खलु ग्रह् धातुरिह निश्चयार्थकः ।

२३–३१. ग्रह् धातोर्णिजन्तप्रयोगेऽध्यापनरूपोऽर्थो विनोपपदेन नाभिव्यज्यते । महाभारते (३, ३२, ६१)—

नीतिं बृहस्पतिप्रोक्तां भ्रातॄन् मेऽग्राहयत् पुरा ।
तेषां सकाशादश्रौषमहमेतां तदा गृहे ॥

इत्यत्र बृहस्पतिप्रोक्तनीतेर्भ्रातॄनुद्दिश्य दानं नामाध्यापनम्, तादृशव्यापारस्याध्यापनरूपत्वात् । वा० रा० (१, ४, ६)—

स तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ ।
वेदोपबृंहणार्थाय तावग्राहयत प्रभुः ॥

सः=वाल्मीकिः प्रभुः, तौ=कुशीलवौ, अग्राहयत्=अध्यापयदित्यर्थः । इह वेदोपबृंहणरूपप्रयोजनं समीक्ष्य ग्रह् धातोरध्यापनरूपो विशिष्टोऽर्थः । 'आचार्य आचारं ग्राहयति' इति निरुक्तम् (१, ४), मनु० (१, ५८)—

इदं शास्त्रं तु कृत्वाऽसौ मामेव स्वयमादितः ।
विधिवद् ग्राहयामास ····················॥

इत्यत्र चाध्यापनमेवार्थः, आचारशास्त्रपदरूपोपपदयोः संनिधानात् । महाभारते (१, १३२, ९)—

ततो द्रोणः पाण्डुपुत्रानस्त्राणि विविधानि च।
ग्राहयामास दिव्यानि मानुषाणि च वीर्यवान्॥

इत्यत्रास्त्रपदसंनिधानाद् ग्रह्धातोरध्यापनमर्थो ज्ञायते। सर्वत्रोदाहरणेषु च द्विकर्मकता दृश्यते। तत्र 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' (१,४,५२) इत्यनेन सूत्रेण बुद्ध्यर्थकधातूनामणि कर्ता णिचि कर्मसंज्ञको भवति। 'वेदमध्यापयद् विधिम्' इत्युदाहरणं प्रस्तूयते बुद्ध्यर्थकधातुप्रसङ्गे। इह ग्रह्धातोर्बुद्ध्यर्थकत्वादण्यन्तावस्थस्य कर्तुर्ण्यन्तावस्थायां कर्मसंज्ञा जायते। भाग० पुराणे (१,३,४१;३,४,३१;५,९,५;७,५,२६) ग्रह्धातोरध्यापनार्थो द्रष्टव्यः। यद्यपि वस्तुतो ग्रह्धातुर्ज्ञानार्थपर इति णिचि ग्राहयतीत्यस्य बोधयतीत्यर्थ एव उचितः, तथापीहोपपदकारणादध्यापनमर्थः। भट्टि० (२,४२) 'अजिग्रहत् तं जनको धनुस्तत्' इत्यत्र विशुद्धो बोधरूपोऽर्थः।

२३–३२. पाणिग्रहणशब्दो विवाहार्थे रूढः। हस्तग्रहणं करग्रहणं वेत्यस्य प्रयोगस्य व्यवहारो विवाहार्थे न दृश्यत इति पाणिशब्देन सहैव रूढता ज्ञायते। रघु० (१७,३) 'पाणिमग्राहयत् पिता' इत्यत्र मल्लिनाथेन त्रयोऽर्था दर्शिताः—१. अबोधयत्, २. स्वीकारितवान्, ३. उदवाहयच्चेति। पाणिनिसूत्रस्य (१,४,७७) व्याख्याकारैरुपयमनस्य स्वीकाररूपोऽर्थोऽपि स्वीकृतः। ग्रह्धातोरर्थद्वयी तु मयेहैव प्रकरणे दर्शिता। पाणेः स्वीकरणं विवाहस्य मुख्यो विधिरिति स विवाहार्थे रूढो जातः। धातोः स्वीकारमात्रार्थात् 'अयाचितारं नहि देवदेवमद्रिः सुतां ग्राहयितुं शशाक' इति कुमारसम्भवे (१,५२) ग्राहयितुम्=परिग्राहयितुमित्यर्थः [संजी०]।

२३–३३. एवं तावद् विविधोपपदसंनिधानादसंख्याता अर्था विज्ञेयाः। प्रयुक्तास्तु यथायथं दर्शिताः। इतोऽप्यधिका दृश्यन्ते केचिदर्थास्ते संक्षेपत इहोपन्यस्यन्ते—'अधरस्य पिपासता मया ते सदयं सुन्दरि गृह्यते रसोऽस्य' इत्यत्र ग्रह्धातोः पानमर्थः। 'प्रियंवदा नाटयेन सुमनसो गृह्णाति' 'सखीमवलम्ब्य स्थिता चूताङ्कुरं गृह्णाति' इत्यादाववचयरूपोऽर्थः। तैस्तैरिन्द्रियैः सहास्य रूपरसगन्धस्पर्शादयोऽर्थाः। श्रीमद्भागवते (२,१०, २०; २१; २२; २३) चतुर्षु श्लोकेषु तादृशा अर्था विलोकनीयाः—'तत्र वायुर्गन्धवहो घ्राणो नसि जिघृक्षतः', 'यदात्मनि निरालोकमात्मानं च जिघृक्षतः', 'निर्भिन्ने ह्यक्षिणी तस्य ज्योतिश्चक्षुर्गुणग्रहः', 'कर्णौ च निर्भिद्येतां दिशः श्रोत्रं गुणग्रहः', 'जिघृक्षतस्त्वङ् निर्भिन्ना तस्यां रोममहीरुहाः' इति। चौर्यरूपोऽर्थो मनुस्मृतौ [ ९, २७७ ] 'छेदयेत् प्रथमे ग्रहे' इति। एवमेवान्येऽर्था अप्यूह्याः। मम मतानुसारेण तु प्रग्रह-अनुग्रह-अवग्रह-विग्रह-उद्ग्राह-प्रभृतयोऽर्था अपि समुपलब्धाः स्युः संस्कृतवाङ्मये केवलस्य ग्रह्धातोः। अनुग्रहार्थसम्बन्धे मेदिनीकोशेऽस्ति निर्देशः। ग्रहः=पात्रम्, गृहम्=भवनम् इत्यादीनामप्यर्थो यथायथमूह्यः।

२३–३४. ग्रहणार्थकाः √*ग्रेभ्√*घेर्भ√*घ्रेभा इति भारोपीयधातुभेदाः। पु० च० स्लाव० भाषायां रेखाकर्षणाद्यर्थे 'ग्रेति' इति प्रयोगः। एवमेव लिथु०–ग्रबोत्ति,

सेर्बोक्रो०–'ग्राबिति' इत्यादिप्रयोगाः पूर्वोक्तेऽर्थे भवन्ति। चेकभाषायां 'ह्रबिति' इत्ययं प्रयोगः खनने [तक्षणपूर्वकचिक्कणे], शम्बाकरणे चार्थे लभ्यते। कस्यचिदुपपदस्य सांनिध्येनैषोऽर्थः कालक्रमेण रूढः स्यात्। तदुपपदं हलादिरूपं भवेत्। अवेस्ताभाषायां संस्कृतवदेवार्थः–गेरेव्नाइति [<वै० प्र० गृभ्णाति], 'गेउर्वयेइति' इति। पु० पारसीक० 'गर्बायेति' इति ग्रहणार्थे प्रयुक्तम्। न० पर्सि० भाषायां तु निग्रहार्थको दृश्यते धातुः— 'गैरेप्त (gərəpt) [<गृभीत-] इति [जूलि० पॉ० ४५५ पृ०]। [तुल० अधुनातनः 'गिरफ्तार' इति शब्दः]।

एवं तावद् इह ग्रह्धातोरर्थाः प्रायश्चत्वारिंशद् दर्शिताः—१. आदानम् (स्वीकरणं परिग्रहो वा), २. समास्वादः (लेहनं वा), ३. धारणम्, ४. उच्चारणम्, ५. दृढं ग्रहणम्, निग्रहः (निरोधः), ७. प्रतिबन्धः, ८. वशीकरणम्, ९. क्रयः, १० अनुमतिः, ११. अनुष्ठानम्, १२. श्रवणम्, १३. स्वागतम्, १४. पादपतनपूर्वकं प्रणामः, १५. ज्ञानम्, १६. करणम्, १७. अनुमोदनम्, १८. हृदि करणम् (अवधारणम्), १९. परिधानम्, २०. संग्रहः, २१. निर्देशः, २२. अनुवर्तनम्, २३. स्वायत्तीकरणम्, २४. आलिङ्गनम्, २५. प्रस्थानम्, २६. वर्णनम्, २७. अभिनिवेशः, २८. प्रतिष्ठा, २९. जननम्, ३०. निश्चयः, ३१. अध्यापनम्, ३२. विवाहः, ३३. पानम्, अवचयः, आघ्राणम्, दर्शनम्, स्पर्शः, चौर्यम्, ३४. रेखाकर्षणादिः, खननम् इति।

२४ § √चम् (चमु) १/४६४ अदने (प)। स्वादावपि पठ्यत एष धातुः। एतस्माद् विकसितास्त्रयो धातवः सन्ति—√चम्>√छम्>√जम्>√झम् चेति भक्षणार्थकाः। √जम् इत्यस्य पाठभेदो√जिम् इत्यपीति प्रदेशविशेषे जेमनम् (>√जीमना) इति प्रयोगः। भक्षणवेलायाम् 'च' इति ध्वनिर्भवति स्वभावतः। जिह्वायास्तालुसंयोगे चवर्गोच्चारणम् (इचुयशानां तालुः)। मुखपवनाभावे जिह्वातालुसंयोगेन चकारं विहाय नान्येषां वर्णानामुच्चारणसम्भवः। एवं खलु परीक्षणेनास्य धातोर्मूलेऽनुकरणात्मको ध्वनिर्विद्यते। भक्षणे पाने चोभयत्र तादृशो ध्वनिरित्यर्थद्वयं लभ्यते। भारोपीयो मूलध्वनिरस्ति—*कुएम्='सशब्दं पानम्' इति। नवीनपारसीकभाषायां√चम् इत्यस्यार्थोऽस्ति—'भक्षणम्' इति, 'चमीदन्' इत्यस्यार्थश्च—'पानं चूषणं वा' इति।

२४–१. प्रथमतोऽयमृग्वेदे (१, ५४, ९) पानार्थे प्रयुक्तः—'तुभ्येदेते बहुला अद्रिदुग्धाश्चमूषदश्चमसा इन्द्रपानाः' इत्यत्र चमसाः=सोमाः, चम्यन्ते=पीयन्त इति व्युत्पत्तेः। 'चचाम मधु मार्द्वीकम्' (भट्टि० १४, ९४) इत्यत्रापि √चम्धातुः पानार्थकः। जयमङ्गलभरतमल्लिकाभ्यां न व्याख्यातश्चम्धातुः, पाणिनीये पानार्थस्यादर्शनात्। अस्माकं मतेन तु—अपामपि भक्षणं भवति, 'अब्भक्षः' इति प्रयोगदर्शनात्।

२४–२. तदनु तस्य पात्रस्य नामधेयमपि चमस इति जातं यस्मिन् सोमादिकं चमन्ति। तथा च निरुक्तम् (१०, १२)—'चमसः कस्मात्? चमन्त्यस्मिन्' इति। ऋ० (१, २०, ६) 'उत त्यं चमसं नवं त्वष्टुर्देवस्य निष्कृतम्' इत्यत्र 'चमसम्=सोमधारणक्षमं काष्ठपात्रविशेषम्' इति सायणः। चमूशब्दोऽप्यृग्वेदे (१, ५४, ९) पात्र-

वाचकः—'चमूषदश्चमसा इन्द्रपानाः' इत्यत्र 'चमूषदः=चमूषु=चमसेष्ववस्थिताः' इति सायणः। पेयसोमवाचकश्चमसशब्दो यथा पात्रवाचको जातस्तथैव ब्यूरो (Bureau) इति फ्रांसीसीशब्दोऽपीतिहासमाधत्तेऽर्थपरिवर्तनस्य। प्रथमतोऽयं शब्दो भूम्यास्तरण-वाचको मञ्चास्तरणवसनवाचको वराश्यर्थकोऽभूत्। (१) ततः स मञ्चो यत्रेदं वसन-मास्तृतं भवेत्। (२) ततः काष्ठमयमेतादृशं वस्तु यदाधृत्य लिख्यते। (३) ततश्च तत् स्थानं यत्रायं मञ्चादिः स्थाप्येत। (४) ततश्च ते पुरुषा अस्य वाचका जाता ये मञ्चमा-धृत्य लिखन्ति। (५) अन्ते च तादृशां मानवानां समूहो जातो ये कस्यचिच्छासनस्य संस्थाया वा संचालकाः स्युरिति (द्रष्ट० 'भाषा', जो० वान्द्रियैज, २३७ पृ०)।

चमसावस्थितसोमस्याऽन्यावपि शब्दावृग्वेदे—१. चम्रिषः (१, ५६, १), २. चम्रीषः (१, १००, १२)=चमूषु=चमसेष्ववस्थिताः सोमलक्षणा इषः (सा०)। इह चमू+इषः=चम्विषः, वकारस्य रेफ इति।

२४–३. पात्रवाचकश्चमूशब्दः (ऋ० १, ५४, ९) पेयसोमसंसर्गादधिषवणफलक-वाचको जातः। ऋ० (८, ४, ४) 'आमुष्या सोममपिबश्चमू सुतम्' इत्यत्र 'चमू= चम्वोरधिषवणफलकयोः' इति सायणः। यद्यपीह सायणो विसंवदति—'यद् वा चमू-भ्याम्=चमसाभ्याम्' इति, तथापि 'अयं सोमश्चमू सुतोऽमत्रे परिषिच्यते' इत्यृग्वेदे (५, ५१, ४) 'चमू=चम्वोरत्र्योः अधिषवणफलकयोः' इति व्याख्याय दृढमतिः, अभिषुतार्थकस्य सुतशब्दस्य साहचर्यात् तस्य तथैवार्थप्रतीतेः।

२४–४. अधिषवणफलकयोरियं प्रवृत्तिः सेनावाचके चमूशब्दे स्पष्टमभिलक्ष्यते, 'चमति शत्रून्' 'कृषिचमितनि—' इत्युणादि–(१, ८०)–सूत्रेण 'ऊ'-प्रत्ययः। एवमेवा-जिनजातीयमृगवाचकस्य चमूरुशब्दस्य चमरीशब्दस्य च प्रयोगः, अजिनार्थं केशार्थं वा चम्यते=भक्ष्यते=हन्यते स इत्यर्थात्। चमरमस्यास्तीति कोविदारवाचकस्य चमरिकशब्दस्यापि मूलं चमरशब्दः। मेदिनीकोशे चक्रगण्डदण्डबालव्यजनवाचकश्चा-मरशब्दः। हेमवाचकचामीकरगतस्य 'चामी' इत्यस्यैतिह्यमनुसन्धेयम्।

२५. § √चर् (चर) १/५५८ गत्यर्थः, भक्षणेऽपि (प)। वोपदेवस्तु त्रिष्वर्थेषु पठति धातुमिमम्—'गमनेऽदने आचारे' इति। एवमाचारार्थोऽधिकोऽन्यवैयाकरणाना-मर्थनिर्देशनात्। वस्तुतस्तु चर्धातोर्गतिभक्षणरूपावर्थावेव मुख्यौ। गतेर्व्यापकत्वादा-चारादीनां तत्रैवान्तर्भावः, अन्यथाऽऽचारार्थवद् अनन्तानामर्थानामिहोल्लेखेन गौरवा-दिति धातुपाठेष्वर्थद्वयस्यैव संकेतः। चुरादौ (२०५) संशयार्थकश्चर्धातुर्दृश्यते। रल-योरभेददर्शनाच्चल्धातुरस्यैव भेदः।

२५–१. ऋ० (१, २४, ६) 'नेमा आपो अनिमिषं चरन्तीः' इत्यत्र चर्धातोः प्रवाहरूपेण गमनमर्थः, अपां गमनं नाम प्रवाह इतीह जलशब्दसंनिधानात् सामान्य-गत्यर्थकश्चर्धातुर्विशिष्टगत्यर्थको जातः। √चल्धातुः कम्पनरूपेऽर्थे पठितः। चर्धातुस्तस्यार्थमभिव्यनक्ति—'चरत् पतत्रि' (ऋ० ३, ५४, ८) इत्यत्र 'चरत्=चञ्चलं

पशुजातम्, पतत्रि=पक्षिजातम्' इति सायणः। सरीसृपकर्तृकस्य √चर्धातो रिङ्गणमर्थः—वा० रा० (२, २८, १९)।

२५-२. गगने गमनमुड्डयनम्। अयमर्थः संचरणशब्देनापि प्रकटीक्रियते, सम्यक् चरणेन तथार्थाभिव्यक्तेः। ऋ० (६, ५८, ३) 'यास्ते पूषन्नावो अन्तःसमुद्रे हिरण्ययीरन्तरिक्षे चरन्ति' इत्यत्र समुद्रान्तरिक्षयोरुभयोश्चरणं नाम संचरणम्। ऋ० (१०, १०२, ८) 'शुनमष्ट्राव्यचरत् कपर्दी' इत्यत्र, ऋ० (१०, ५४, २) 'यदचरस्तन्वा वावृधानः' इत्यत्र च संचरणरूपोऽर्थश्चर्धातोः। आख्यातचन्द्रिकायां भट्टमल्लेन चर्धातोः संचाररूपोऽर्थो दर्शितः (२, ३, १२१)।

२५-३. 'गावो यवं प्रयुता अर्यो अक्षन् ता अपश्यं सहगोपाश्चरन्तीः' इत्यृग्वेदे (१०, २७, ८) 'सहगोपाः=पशुपालकेन सहिताः, चरन्तीः=घासं भक्षयन्तीः' इत्यर्थः सायणेन कृतः, यवादिपदसंनिधानात्। वा० रा० (१, ४०, २६)—

ते तु सर्वे महात्मानो भीमवेगा महाबलाः।
ददृशुः कपिलं तत्र वासुदेवं सनातनम्॥
हयं च तस्य देवस्य चरन्तमविदूरतः।
प्रहर्षमतुलं प्राप्ताः सर्वे ते रघुनन्दन॥

इत्यत्र कपिलस्याविदूरतो हयस्य चरणं नाम घासभक्षणम्। पशवो घासं भक्षयन्तः शनैः शनैरग्रेसरन्त्यपीति तेषां चरणेन भक्षणरूपोऽर्थो गृह्यते, मनुष्याणामिव तेषामविचरणत्वात्। पशूनामेतादृश्या प्रवृत्त्या जातस्य चर्धातोर्भक्षणार्थस्य मनुष्येष्वप्यारोपः। वा० रा० (२, २०, ५)—

अबुद्धिर्बत नो राजा जीवलोकं चरत्ययम्।
यो गतिं सर्वभूतानां परित्यजति राघवम्॥

इत्यत्र सर्वभूतानां गते राघवस्य परित्यागो हि जीवलोकस्य भक्षणमेवेत्यन्तःपुरस्त्रीणामाशयः। वा० रा० (२, २०, ५)—

अद्य त्विदानीं रजनीं पुत्र मा गच्छ सर्वथा।
एकाहं दर्शनेनापि साधु तावच्चराम्यहम्॥

दशरथस्योक्तिरियं रामं प्रति। 'त्वया सह साधु भोक्ष्यामि' इति तदाशयः। त्रिष्वेव स्थलेषु तिलकटीकायामपि भक्षणरूपोऽर्थः प्रतिपादितश्चर्धातोः। चरति (४, ४, ८) इति पाणिनीये सूत्रे चर्धातोर्गतिभक्षणरूपावर्थौ। अत एव हस्तिना चरति हास्तिकः, शकटेन चरति शाकटिक इतिवद् दध्ना चरति=भक्षयति दाधिक इति प्रयोगेऽपि ठग् जायते। णिच्यपि भक्षणार्थे चर्धातोः प्रयोगो दृश्यते। वा० रा० (२, ४५, ३३)—

ततः सुमन्त्रोऽपि रथाद् विमुच्य श्रान्तान् हयान् संपरिवर्त्य शीघ्रम्।
पीतोदकांस्तोयपरिप्लुताङ्गम् अचारयद् वै तमसाविदूरे॥

इत्यत्र सुमन्त्रः पीतोदकांस्तोयपरिप्लुताङ्गान् हयान् तमसाविदूरेऽचारयत्= भक्षिततृणान् अकारयद् इत्यर्थः। महाभारते (१२, ९, २१)—

अल्पं वास्वादु वा भोज्यं पूर्वालाभेन जातुचित्।
अन्येष्वपि चरंल्लाभमलाभे सप्त पूरयन्॥

इति वानप्रस्थभिक्षुवद् जीवनयापननिश्चये युधिष्ठिरस्य 'अल्पं वास्वादु वा भोज्यम्' इत्युक्त्या चर्धातोः सुस्पष्टं भक्षणमर्थः। हिन्दीभाषायां 'चरना' 'चराना' इत्युभयत्र भक्षणरूपोऽर्थः। तत्रापि पशूनां घासादिभक्षणप्रसङ्गे धातोरस्य प्रयोगो जायते, न तु मनुष्याणां भोजनप्रसङ्गे। शनैः शनैर्बहुभक्षणमुद्दिश्य बहुभोजिनं प्रत्यपीदृशः प्रयोगो दृश्यते क्रियमाणः। हरिवंशपुराणेऽपि द्रष्टुं शक्यते (द्र० २, ५५, ३२)।

२५–४. ऋ० (१, ५७, ४)—

'इमे त इन्द्र ते वयं पुरुष्टुत ये त्वारभ्य चरामसि प्रभूवसः'

इत्यत्र 'प्रभूतधन! अत एव बहुभिर्यजमानैः स्तुत! हे इन्द्र! ये च वयं त्वामारभ्य=आश्रयतयावलम्ब्य चरामसि=चरामः=यागे वर्तामहे' इति शब्दार्थः। इह चर्धातोर्वर्तनमर्थः। मनसा सह प्रयुज्यमानस्य चर्धातोरपि वर्तनमर्थः (ऋ० ७, १०४, ८) 'यो मा पाकेन मनसा चरन्तम्'=शुद्धेन मनसा वर्तमानम् इत्यर्थः। 'अन्वग्रं चरति क्षेति बुध्नः' इत्यृग्वेदे (३, ५५, ७); यज्ञेषु सम्यग् राजमानोऽग्निरन्वग्रम्= दिवि सूर्यभूतस्तत्र वर्तत इति सायणः। 'अग्रं मुख्यं भागं चरति=भक्षयति' इत्यर्थमप्याह सः। ऋ० (७, ४६, ३)—

'या ते विद्युदवसृष्टा दिवस्परि क्ष्मया चरति।'

इत्यत्र दिवस्परि=अन्तरिक्षसकाशाद् अवसृष्टा=विमुक्ता विद्युत्=अशनिरूपा हेतिः, क्ष्मया=क्षित्या क्षितौ वा चरति='वर्तते' इति वर्तनरूपोऽर्थश्चर्धातोः। नैषध० (१८, ११०)—

'भुज्यमाननवयौवनाऽमुना पारसीमनि चचार सा मुदाम्'

इत्यत्र भुज्यमाननवयौवना दमयन्ती मुदाम्=आनन्दानां पारसीमनि=चरमावस्थायाम् अवर्ततेति वर्तनरूपोऽर्थश्चर्धातोः। वस्तुतः कर्माभावे चर्धातुः स्थाधातुवदर्थं प्रकटयति। किन्तु स्थाधात्वर्थे तथा स्वारस्यं नास्ति यथा वर्तते। अत एव वृत्तचरित्रयोः पर्यायवाचकता।

२५–५. ऋ० (१, ५२, ६) 'परीं घृणा चरति तित्विषे' इत्यत्र चर्धातुर्व्याप्त्यर्थकः, घृणायाः शत्रुजयलक्षणाया दीप्तेस्तथात्वेनौचित्यात्।

२५–६. यत्रान्तर्भूता अनेकाः क्रिया भवन्ति, तत्र क्रियासामान्यवाचकेन कृधातुना भावाभिव्यञ्जना। एतादृशेषु स्थलेषु टीकाकारैः 'यथा स्यात् तथा' इति लिख्यते। महाभारते (१४, १९, १६)—

तस्योपदेशं वक्ष्यामि यथावत् तन्निबोध मे।
यैर्द्वारैश्चारयन् नित्यं पश्यत्यात्मानमात्मनि॥

तस्य=योगशास्त्रस्योपदेशप्रसङ्गे यैर्द्वारैः=चित्तनिग्रहोपायैः, आत्मानम्=चित्तम्, आत्मनि=देहे यथा स्यात् तथा चारयन्=अन्तर्मुखं कुर्वन्निति चर्‌धातुः क्रियासामान्य-वाचकस्य करणस्यार्थमाविष्करोति। तत्रैव (१३, २२, १३)—

अधीयानः पण्डितं मन्यमानो
यो विद्यया हन्ति यशः परेषाम्।
प्रभ्रश्यतेऽसौ चरते न सत्यं
लोकास्तस्य ह्यन्तवन्तो भवन्ति॥

इत्यत्र सत्यम्=यज्ञादिकम् अव्यभिचरितफलं कर्म न चरते=न करोतीत्यर्थः संपद्यते। वा० रा० (१, ४६, ३) 'साहं तपश्चरिष्यामि' इत्यत्र 'चरिष्यामि' इत्यस्य 'करिष्यामि' इत्यर्थः। अनुष्ठानविधानादिशब्दैर्विवरणं भवितुं नार्हति, तयोर्निश्चितार्थ-त्वात्। करणरूपार्थेन च सर्वविधानां तपसामभिव्यक्तिः, न तु सीमितानाम्। मनु० (२, १८७)—

'अवकीर्णिव्रतं चरेत्' इत्यत्रावकीर्णिव्रतानुष्ठानेऽन्तर्भूतोपक्रियाणां प्रकटनाय कृधातुना व्याख्यानं साम्प्रतम्। वस्तुतस्त्विह 'आङ्' इत्युपसर्गपूर्वकस्यार्थस्य वाचक-श्चर्‌धातुः। किन्तु तेनार्थेन स्पष्टताभावे कृधातुद्वारा विवरणोपपत्तिः। स्थूलतस्तु नैयत्येऽनुष्ठानाचरणादीनां याथातथ्येन प्रयोगः क्रियत एव। वा० रा० 'तपश्चचार' इत्यत्र तिलकटीकाकर्त्रा 'तताप' इति विवृण्वता क्रियासामान्यवाचकः कृधातुर्निर्दिष्टः, तपसैव तस्योक्तत्वेन क्रियामात्रवाचकत्वादिति।

२५–७. यद्यपि मनु० (२, १८५)—

सर्वं वापि चरेद् ग्रामं पूर्वोक्तानामसंभवे।

इत्यत्र कस्यापि पदस्य संनिधानाभावे चर्‌धातुर्याचनार्थकः, तथापीतः पूर्वं—

गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु।
अलाभे त्वन्यगेहानां पूर्वं पूर्वं विवर्जयेत्॥

इत्यस्य श्लोकस्योपन्यासेन भिक्षार्थसंबन्धो भवति।

२५–८. मनु० (९, ३०६) 'प्रविश्य सर्वभूतानि यथा चरति मारुतः'। सर्व-भूतान्तः प्रविश्य मारुतस्य विचरणं संभवतीतीह चर्‌धातुर्विचरणार्थकस्तदाह कुल्लूक-भट्टः—'यथा प्राणाख्यो वायुः सर्वजन्तुष्वन्तः प्रविश्य विचरति' इति। तत्रैव (७, २५) 'यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा' इत्यत्र शास्त्रप्रमाणावगतस्य श्यामवर्णस्य लोहितनयनाधिष्ठातृदेवताकस्य दण्डस्य विचरणमेव साधीयः।

२५–९. मनु० (२, १६३)—

सुखं ह्यवमतः शेते सुखं च प्रतिबुध्यते।
सुखं चरति लोकेऽस्मिन्नवमन्ता विनश्यति॥

इत्यत्र 'प्रतिबुद्धः सन् सुखपूर्वकं कार्येषु प्रवर्तते' इति प्रवृत्तिरूपोऽर्थश्चर्धातोः। यद्यपि विचरणादिरूपा अर्था भवितुमर्हन्ति, तथापि लौकिकीनां सामान्यक्रियाणां शयनप्रतिबोधनादीनां दर्शनेन कार्यप्रवर्तनरूपस्यार्थस्य निश्चयो विज्ञातव्यः।

२५–१०. मनु० (२. ४८)—

प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम्।
प्रदक्षिणं परीत्याग्निं चरेद् भैक्षं यथाविधि॥

इत्यत्र कुल्लूकभट्टः—'चरेत्=याचेत' इति, तन्न मनोरमम्, भैक्षपदेनैव याचनार्थस्योक्तत्वात्। मनु० (२, १८२) 'भैक्षं चाहरहश्चरेत्' इत्यत्र च तेनैवार्जनार्थस्य निर्णीतत्वाद् इति भैक्षपदसंनिधानाच्चर्धातुरर्जनार्थकः।

२५–११. मनु० (२, २४९)—

एवं चरति यो विप्रो ब्रह्मचर्यमविप्लुतः।
स गच्छत्युत्तमस्थानं न चेहाजायते पुनः॥

इत्यत्र ब्रह्मचर्यव्रतस्योल्लेखादनुष्ठानरूपोऽर्थो निर्धारणीयश्चर्धातोः। ब्रह्मचर्यं च विधिनिषेधानामाचरणं विहायावान्तरक्रियादीनामसंनिवेश इति नाऽऽस्थेयं विवरणं कृधातुना। एवमेव महाभारते (१२, २१४, १)—

अत्रोपायं प्रवक्ष्यामि यथावच्छास्त्रचक्षुषा।
तत्त्वज्ञानाच्चरन् राजन् प्राप्नुयात् परमां गतिम्॥

इत्यत्र ब्रह्मचर्यस्योपायो दर्श्यत इति तत्त्वज्ञानात् चरन् = अनुतिष्ठन् इत्यर्थः। तत्रैव त्रयोदशे श्लोके—'रागोत्पन्नश्चरेत् कृच्छ्रम्' इत्यत्रापि ब्रह्मचर्योपायं कुर्वन्नपि यदि समुत्पन्नरागः स्यात्, तर्हि कृच्छ्रम् अनुतिष्ठेद् इत्यर्थः।

२५–१२. मनु० (६, ६८)—

संरक्षणार्थं जन्तूनां रात्रावहनि वा सदा।
शरीरस्यात्यये चैव समीक्ष्य वसुधां चरेत्॥

इत्यत्र हिंसापरिहारपूर्वकं पृथिव्यां भ्रमणं विज्ञप्तम् इति चर्धातोरिह पर्यटनरूपोऽर्थः। इह यद्यपि तादृशं किमप्युपपदं नास्ति यस्य साहाय्येन चर्धातोर्भ्रमणरूपोऽर्थः पार्येत निश्चेतुम्, तथापि प्रसङ्गस्य पर्यालोचनेन तथार्थविनिश्चयः। भ्रमणमपि गतिरिति धातोरर्थेनैव तस्य गतार्थतेति चेद्, न, सामान्यगमनाद् भ्रमणस्य पर्यटनस्य वा वैशिष्ट्यात्। अत एव भ्रम्धातुरनवस्थाने पठितः, न तु गमने। 'चेरतुः खरदूषणे' इति भट्टि० (५, १) 'भ्रान्तौ' इति जयमङ्गलः।

२५–१३. वा० रा० (२, ३५, ३३) 'परिवादो हि ते देवि महाँल्लोके चरिष्यति' इत्यत्र प्रचरणरूपोऽर्थश्चर्धातोरिति प्रोपसर्गाभावेऽपि तदन्वितार्थसंपत्तेः। तत्रैव (२, ६६, २६)—

गते तु शोकात् त्रिदिवं नराधिपे महीतलस्थासु नृपाङ्गनासु च ।
निवृत्तचारः सहसा गतो रविः प्रवृत्तचारा रजनी ह्युपस्थिता ॥

इत्यत्र 'रविः सहसा निवृत्तचारः=निवृत्तकिरणप्रचारः' इति चर्धातोः प्रचार-रूपोऽर्थः । तत्रैव (२, ८५, १३) 'शाश्वती खलु ते कीर्तिर्लोकाननु चरिष्यति' इत्यत्र 'चरिष्यति = प्रचरिष्यति' इति तिलकटीका ।

२५–१४. मनु० (२, २३) 'कृष्णसारस्तु चरति मृगो यत्र स्वभावतः' इत्यत्र विचरणं नाभिप्रेतम्, न च घासादिभक्षणमेव । इहैकान्ततश्चरणं नाम वासोऽभीष्टः, अध्युषितदेशेनातिमात्रसंयोगात् । एवमेव वाल्मीकीये रामायणे (४, ५१, ७; ८)—

काञ्चनानि च पद्मानि जातानि विमले जले ।
कथं मत्स्याश्च सौवर्णाश्चरन्ति सह कच्छपैः ॥

इतीह निवासोऽर्थः, तरणार्थेन तेषामल्पकालसम्बन्धात् ।

२५–१५. मनु० (९, २८७)—

'समैर्हि विषमं यस्तु चरेद् वै मूल्यतोऽपि वा'

समैः = सममूल्यदातृभिः सहोत्कृष्टापकृष्टद्रव्यप्रदानेन वैषम्यपूर्वकं चरणं नाम व्यवहरणम् । इह 'मूल्यतः' इति पदस्य सांनिध्येन प्रसङ्गेन च व्यवहारार्थो निर्णेतुं पार्यते । 'सज्जयन्ति हि ते नारीर्निगूढाश्चारयन्ति च' इति मनु० (८, ३६२), चारयन्ति=व्यवहारयन्तीत्यर्थः ।

२५–१६. वा० रा० (२, २८, १५)—

कार्यस्त्रिरभिषेकश्च काले काले च नित्यशः ।
चरतां नियमेनैव तस्माद् दुःखतरं वनम् ॥

इति रामोक्तिः सीतां प्रति । चरतां नियमेनैव नित्यशः काले काले च त्रिरभिषेकः कार्यः । इह चर्धातोरर्थो नास्ति स्पष्टः—किं चरताम् इति जिज्ञासासमाध्यभावात् । 'काले काले' इति प्रसङ्गाद् इह चर्धातोः कालक्षेपरूपोऽर्थः । तदुक्तं तिलकटीकायाम्—'चरताम्=कालक्षेपं कुर्वताम्' इति ।

२५–१७. वा० रा० (२, ६१, २३) 'द्विजातिचरितो धर्मः शास्त्रे दृष्टः सनातनः' इत्यत्र चर्धातुराचरणार्थकः । गीता० (३, २६) 'पापं चरति पूरुषः' इत्यत्र शाङ्करभाष्ये चरति = आचरतीत्यर्थः । नीलकण्ठस्तु करोतीति व्याख्यानमाह, तन्न युक्तम्, धर्मपापयोराचरणविषयत्वात् । 'धर्मं करोति' 'धर्ममनुतिष्ठति' इत्यादीनां विवरणम् आङ्पूर्वकेण चर्धातुनैव कर्तुं युक्तम् । आचरणानुष्ठानकरणादीनामर्थानामैक्येऽपि 'धर्मकरणम्' इत्यस्य स्थाने 'धर्माचरणम्', 'यज्ञाचरणम्' इत्यस्य स्थाने यज्ञानुष्ठानम् इत्यादिप्रयोगाणामौचित्ती ।

२५–१८. महाभारते (१२, १२३, ७) 'सन्निकृष्टांश्चरेदेतान् न चैतान् मनसा त्यजेत्' इत्यत्र धर्मार्थकामानां चरणं नाम सेवनम् । यद्यपि धर्मस्यानुष्ठानं भवतीति

धर्मार्थकामानामनुष्ठानं स्यात्, तथापि तदितरद्वयस्याननुष्ठानात् सेवनार्थं उक्तः। 'धर्मं चरति' (४, ४, ४१) इत्यत्र तत्त्वबोधिनीकारः—'चरतिरिहाऽऽसेवायां न त्वनुष्ठानमात्रे' इति। गीता० (२, ६४) 'रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्' इत्यत्र 'चरन्=सेवमानः' इत्यर्थः। हरिवंशे (३, १९, १७)—

अरूपी रूपसंपन्नो धातुभिः सह संगतः।
अन्यश्चरति भूतेषु कामकारकरो वशी॥

इत्यत्र सूक्ष्मतरत्वाच्चान्तर्यामिरूपेणान्तर्देहान्तः स्थित्वा चरति=विषयान् भुङ्क्ते, कामकारकरत्वात् (=स्वतन्त्रेच्छत्वात्)। तत्रैव (३, २७, ४४)—

त्वमेव वसुधायुक्तो विश्वं चरसि सोमया।
एकीकृत्य गणान् सर्वान् संक्षिप्यामुत्र संभवः॥

इत्यत्र वसुधायुक्तो भौमप्राणिरूपेण चरसि=विषयान् सेवसे, सोमया=मर्यादया नियमेनेति चर्धातुः सेवनार्थः, गणानाम्=इन्द्रियादीनामुल्लेखात्।

२५–१९. हरिवंश० (३, १८, २८)—

अव्यक्ताद् व्यक्तिमापन्नं स्वेन भावेन भारत।
अन्तःस्थं सर्वभूतेषु चरन्तं विद्यया सह॥

इत्यत्र चर्धातोः प्रकाशनरूपोऽर्थः, ब्रह्माकारचित्तवृत्तिरूपविद्यापदोपादानाद् इति ब्रह्माकारचित्तवृत्त्या सह चरन्तम्=प्रकाशमानमित्याशयः। एवमेव तत्रैव (३, १६, ८)—

विकारपुरुषोऽव्यक्तो ह्यरूपी रूपमाश्रितः।
चरत्यचिन्त्यः सर्वेषु गूढोऽग्निरिव दारुषु॥

इत्यत्र 'विकारपुरुषो मात्रादिव्यक्तः, रूपम्=दृश्यमाश्रितः सन्, चरति=दृश्यं प्रकाशयति' इति प्रकाशनरूपोऽर्थः, अग्न्युपमया तथार्थप्रतीतेः।

२५–२०. भट्टि० (१०, ८) 'ह्वलता जनेन बहुधा चरितं महत्त्वरहितं महता' इत्यत्र 'चरितम्' इत्यस्य चेष्टितमित्यर्थः, चरितस्य=चेष्टितस्याऽऽचरणात्। इदं चेष्टितमेव चरित्रम्।

२५–२१. नैषध० (२१, ९०) 'यत् तव स्तवविधौ विधिरास्ये चातुरीं चरति तच्चतुरास्यः' इत्यत्र चातुरीशब्दोपादानेन चर्धातोः प्राप्तिरूपोऽर्थः, चातुरीं करोतीत्यस्य विवरणेन भिन्नाभिप्रायात्।

२५–२२. भारोपीयभाषाणां मूलधातुरस्ति–तालव्यः √*केल्-केल इति परिवर्तनवेष्टनसंचरणाद्यर्थकः। (कर्तव्यकार्यानुष्ठाने) धर्मादिवर्तनार्थेऽयं धातुरवेस्ताभाषायां प्रयुक्तः—चरइति (Caraiti) इति। तत्रैव चरान (Carana) इति च कार्यक्षेत्रवाचकः शब्दः। पारसीकभाषायां तु ध्यानप्रवृत्तिपोषणकृषिसंस्कृतिवाचकः पर्युपसर्गपूर्वकः

'परिकरा' इति शब्दः । तत्र चकारः ककारत्वेन प्रयुक्त इति मूलधातावेवेङ्गितम् (द्र० जूलियस्पॉकर्नीः ५३९ पृ०) ।

२५–२३. प्राकृतभाषायां ज्ञानरूपोऽर्थोऽधिकः–चरइ (उव, महा) इति । हिन्दी-भाषायां संस्कृतभाषावद् भ्रमणविचरणाद्यर्थे, पशूनां क्षेत्रेषु भ्रमणपूर्वकं घासादि-भक्षणेऽर्थे प्रयोगः । कालान्तरे भ्रमणपूर्वकभक्षणार्थस्य चर्धातोर्भ्रमणाभावेऽपि प्रयोगः समजायत । इदानीं गावः शङ्कुबद्धा अपि गमनाभावेऽपि चरन्ति=भक्षयन्ति । इदमेव 'चारा'=(भक्षणीयम्) उपायार्थेऽपि प्रयुज्यते—'अब कोई चारा नहीं रहा' इति । अयमेव 'चारा'शब्दः पारसीकभाषाया 'बे' (सं० वि) इत्यस्य सहकारेण 'बेचारा'= निरुपायार्थको जातः । भक्षणार्थिका 'चरना' इति क्रिया पशूनां संबन्ध एव व्यवह्रियत इति मनुष्याणां सम्बन्धे प्रयोगो निन्दार्थको भवति । प्रादेशिकभाषायामपि तथैव दृश्यते—

पड़ पड़ कें पड़ा भये, चर चर हो गये लाठ ।
बाप ने पूँछी का पड़े, सोरा दूनी आठ ।। इति ।

एवं तावच्चर्धातोरिह त्रयस्त्रिंशदर्थाः पर्यालोचिताः—१. प्रवाहः (कम्पनम्), २. उड्डयनम् (संचरणादि), ३. भक्षणम्, ४. वर्तनम्, ५. व्याप्तिः, ६. करणम्, ७. याचनम्, ८. विचरणम्, ९. प्रवर्तनम्, १०. अर्जनम्, ११. अनुष्ठानम्, १२. पर्यटनम् (भ्रमणम्), १३. प्रचरणम्, १४. वासः (निवासः), १५. व्यवहारः, १६. यापनम् (कालक्षेपः), १७. आचरणम्, १८. सेवनम् (आसेवा), १९. प्रकाशनम्, २०. चेष्टा, २१. प्राप्तिः, २२. ध्यानप्रवृत्तिपोषणकृषिसंस्कृतयः, २३. ज्ञानं चेति ।

२६. § √चि (चिञ्) ५/५ चयने (उ) । इह ज्ञानार्थकस्य √कि (३/१८) इत्यस्य संज्ञानार्थकस्य √चित् (१/३८) इत्यस्य च संक्रान्तिः । 'चिकाय' 'चिक्यतुः' 'चिक्युः' इत्यादौ किधातोरंशः । भारोपीयभाषायां √चिधातोर्मूलं तालव्यः √*'काइ' इति धातुः । तत्र ककारस्य तालव्यत्वेन निर्दिष्टत्वादुभयथोपपत्तिः (द्र० जूलि० पॉ० ६३७ पृ०) । ऋग्वेदे चयनार्थकश्चिधातुर्ज्ञानार्थे न्युपसर्गपूर्वो लभ्यते (१, १६४, ३८; १०, ११४, २; १०, ११४, ९) ।

२६–१. ऋ० (८, ७, २) 'यदङ्ग तविषीयवो यामं शुभ्रा अचिध्वम्' इत्यत्र यामम्=रथम्, अचिध्वम्=समचिनुध्वम् अश्वादिभिः साधनैः संचितं संश्लिष्टं कुरुथ गमनार्थं तदानीम् इति सायणः । मरुतः सम्बन्ध ऋगियम् । रथस्य चयनं नाम साधनैस्तस्य प्रगुणीकरणम्, प्रसाधनम् इति रथसंबन्धाच्चिधातोः प्रगुणीकरणाद्यर्थः । वस्तुतस्तु समुपसर्गपूर्वकचिधात्वर्थ एवेह ग्रहीतव्यः 'संचयः' इति नाम, संभूय चयने तत्तत्प्रसङ्गागतानां सर्वेषामर्थानां गतार्थत्वात् । 'मामेधो दशतयश्चितः' (ऋ० १, १५८, ४) इत्यत्र चितः=संचितः संपादित इति सायणः । संचयानन्तरवर्तिनी स्थितिः खलूपचयाभिधानेति सायणेन 'अधीव यद् गिरीणां यामं शुभ्रा अचिध्वम्' (ऋ० ८, ७, १४) इत्यत्र 'अचिध्वम्' इत्यस्य गमनसाधनैरश्वादिभिरुपचितं कुरु' इति व्याख्यायि

संचयोपचययोः सूक्ष्मभेदमनिर्वर्णयता। एवमेव 'उपह्वरेषु यदचिध्वं ययिं वय इव मरुतः केन चित् पथा' (ऋ० १, ८७, २) इत्यत्रापि ययेः=गतिमतो मेघस्य चयनं नाम वर्षणसामर्थ्येनोपचयः। तुल० न० पारसीक० चीदन=संचयः। अवे० 'चिन्वइति' 'चचेइति' इति।

२६-२. ऋ० (६, ४४, ७) 'अविदद् दक्षं मित्रो नवीयान् पपानो देवेभ्यो वस्यो अचैत्' इत्यत्र स इन्द्रः सोमं पिबन् देवेभ्यः=स्तोतृभ्यः, वस्यः=वसीयः श्रेष्ठं धनम्, अचैत्='चिनोति' इति प्रसङ्गः। इह 'देवेभ्यः' इति चतुर्थीबलाच्चिधातुरूप=समीपे चयनरूपेण दानार्थकः। अत एव सायणाचार्यः—'अचैत्=चिनोति=उपचितं करोति ददातीति यावत्' इति व्याख्यत्। एवं खलु चिधातोर्दानमर्थः। सेन्टपीटर्सबर्गकोशे त्वन्वेषणरूपोऽर्थो निर्णीयते, स न हृदयावर्जकः, ऋग्वेदे सोमपानं कृत्वेन्द्रादिपक्षतो दानस्य बहुकृत्वो वर्णनात्।

२६-३. ऋ० (५, ५५, ७) 'न पर्वता न नद्यो वरन्त वो यत्राचिध्वं मरुतो गच्छेदु तत्' इत्यस्यामृचि मरुत उच्यन्ते—युष्मान् पर्वता नद्यश्च न वारयन्तु, किन्तु यस्मिन् यज्ञादिस्थानेऽचिध्वं तत् स्थानं गच्छेदु=गच्छथैवेति। कोऽपि प्राणी पूर्वं ज्ञातं ततः संकल्पितं स्थानं प्रति गच्छति प्रत्यूहनिवारणपूर्वकम्। इहापि दुर्गमपर्वतानां दुस्तरनदीनां च पश्चाद् आगच्छन्तीनां बाधानां निवारणं कृत्वा परिचितं स्थानं प्रति गमननिर्देशः। परिपूर्वकचिधातोरर्थ इह निरुपसर्गस्य धातोरभ्युपगन्तव्यः। परिचयो नाम ज्ञानम्। मुण्डकोप० (१, १, ८) 'तपसा चीयते ब्रह्म' इत्यत्र सूल्बणं ज्ञानार्थश्चि-धातोः, निर्विकारस्य निराकारस्य ब्रह्मणश्चयनस्य नाम संग्रहस्य कर्तुमशक्यत्वात्। ज्ञानरूपस्य तादृशस्य तादृशपदसंनिधानेन तादृशार्थात्। अमूर्तीकरणमिदम्।

२६-४. शब्रा० (६, १, २, ७७) 'चितीश्चिनोति' इत्यत्र, श्रीमद्भागवतपुराणे (४, २८, ५०) 'चितिं दारुमयीं कृत्वा' इत्यादौ च चिधातोः करणार्थः, कर्मणि क्रियायां चोभयत्र तस्य प्रयोगात्। आँग्लभाषायाम् एतादृशः प्रयोगः 'कॉग्नेट् ऑब्जेक्ट' इत्युच्यते। हिन्दीभाषायामप्येतादृशाः प्रयोगाः श्रूयन्ते—'योगदान देना' इत्यादयः। अस्य सम्बन्धेऽधिकं कृधातोर्व्याख्यानतो ज्ञेयम्। ऋ० (९, ९७, ५८) 'भरे कृतं वि चिनुयाम शश्वत्' इत्यत्र 'संग्रामे कृतम्=कर्तव्यं वयं वि चिनुयाम=विशेषेण कुर्याम' इति चिधातोः करणरूपोऽर्थः।

२६-५. अवपूर्वकस्य चिधातोरर्थोऽवचयः। अयमवोपसर्गाद् ऋतेऽपि केवलस्य धातोरपि भवति। महाभारते (१, २१२, ९) 'ततस्तिलोत्तमा तत्र वने पुष्पाणि चिन्वती' इत्यत्रावचयरूपोऽर्थः। 'वृक्षं पुष्पाणि चिन्वती' इत्येतादृशे प्रयोगे त्रोटन-रूपोऽर्थो विज्ञेयः। वृक्षादिगौणकर्माभावे, 'कारकाणां विवक्षाधीनत्वम्' इत्यङ्गीकारे त्वपादानाभावे संग्रहरूपोऽर्थो ज्ञातव्यः।

२६-६. त्रोटनरूपस्यार्थस्य मूलम् ऋ० (७, ६०, ५) 'इमे चेतारो अनृतस्य भूरेः' इत्यस्मिन् मन्त्रे लभ्यते। भूरेरनृतस्य चेतारः=हन्तार इत्याशयः।

२६–७. अन्नस्य मुखे चयनं नाम क्षेपणम् । तात्पर्यार्थस्तु भक्षणमिति । ऋ० (१०, ९१, ५) 'परि स्वयं चिनुषे अन्नमास्ये' इत्यत्र चिधातोः क्षेपणमर्थः । रघु० (१२, ९५) 'अयःशङ्कुचितां रक्ष' इत्यत्र चिताम्=कीर्णाम् इति मल्लिनाथः ।

२६–८. विपूर्वकश्चिधातुर्गवेषणे वर्तते (द्रष्ट० ऋ० १०, ४३, ५) । वस्तुतो गवेषणारूपोऽर्थः केवलस्य चिधातोरेव विज्ञेयः, उपसर्गस्य धातुगतार्थप्रकाशकत्वात् । अत एव महाभारते (३, ६८, ६)—

पुरराष्ट्राणि चिन्वन्तो नैषधं सह भार्यया ।
नैव क्वापि प्रपश्यन्ति नलं वा भीमपुत्रिकाम् ॥

इत्यत्र व्युपसर्गप्रयोगाद् ऋतेऽपि गवेषणारूपोऽर्थो व्यक्तः । ततोऽग्रे तदर्थ एव स्पष्टं विपूर्वकचिधातोः प्रयोगस्तत्रैव सप्तमे श्लोके—

ततश्चेदिपुरीं रम्यां सुदेवो नाम वै द्विजः ।
विचिन्वानोऽथ वैदर्भीमपश्यद् राजवेश्मनि ॥ इति ।

कथासरित्सागरे (२६, १३८) 'पातेन साकं कनकपुरीं चिन्वन्नितस्तदा' इत्यत्रापि सुस्पष्टं विचयनमर्थो निश्चीयते । भट्टिकाव्ये (१९, १३) 'यज्ञपात्राणि गात्रेषु चिनुयाच्च यथाविधि' इत्यत्र 'विचिनुयात्' इति जयमङ्गलः । आख्यातचन्द्रिकायां (२, ४, २०१) भट्टमल्लोऽप्यन्वेषणे चिनोतीत्याह । अवेस्ताभाषायां व्युपसर्गपूर्वकोऽयं धातुर्दूरगमनार्थकः, त्यागार्थको वा—'वी-चिन्वइति' इति (जूलियस्० ६३७ पृ०) ।

२६–९. भट्टि० (१५, ७६) 'पर्वतानिव ते भूमावचैषुर्वानरोत्तमान्' इत्यत्र चिधातोः पुञ्जीकरणरूपोऽर्थः, 'पर्वतानिव' इत्युपमानेनापि तथाभिप्रायात् । सुश्रुते (२, २९०, ९) 'दंशः पिडकाभिश्चीयते' इतीहाऽऽच्छादनार्थश्चिधातुः ।

२६–१०. 'शैलैरिवाऽचिनोद् भूमिम्' इति भट्टि० (१७, ६९) छादनमर्थश्चिधातोः ।

२६–११. 'चीयते बालिशस्यापि सत्क्षेत्रपतिता कृषिः' इति मुद्राराक्षसे (१, ३) निष्पत्तिरूपः फलनमित्यर्थः । एवमेव समभिव्याहारप्रसङ्गादिभिरन्येऽप्यर्था ऊह्याः प्रदीपनव्यवस्थादयः ।

एवं तावद् एकादशस्वर्थेषु प्रयुज्यमान एष परीक्षितः—१. चयनम् (संचयः), २. दानम्, ३. ज्ञानम्, ४. करणम्, ५. अवचयः, ६. हननम् (विनाशनम्), ७. क्षेपणम्, ८. गवेषणम्, ९. पुञ्जीकरणम्, १०. छादनम्, ११. निष्पत्तिः (प्रदीपनम्, व्यवस्था) इति ।

प्राकृतभाषायां त्रयोऽर्थाश्चिधातोर्हेमचन्द्रमतानुसारेण । तत्र विकरणविशिष्टस्यानुपूर्व्या ग्रहणं मूलधातुत्वेन—√चिण, √चुण इति । अर्था इमे—१. संचयः, २. पुष्पाद्यवचयपूर्वकं संग्रहः, ३. खगकर्तृकं भोजनं चेति ।

२७ § √छिद् (छिदिर्) ७/३ द्वैधीकरणे (उ)। इह √चिधातोः संक्रमः शक्यतेऽनुमातुम् (द्र० षष्ठोऽर्थश्चिधातोः)। हिंसाग्रन्थनार्थेन √चृत् (चृती) ६/४५ धातुनाऽपि सहैतस्य तुलना विधेया। चौरादिकयोः √छेद इति √छिद्र इति च धात्वोर्मूलेऽयमेव धातुर्निविष्टः।

२७–१. द्वैधीकरणं नाम कस्यचिद् वस्तुनोंऽशद्वये विभागः। ऋ० (१, ११६, १५) 'चरित्रं हि वेरिवाच्छेदि' इत्यत्र चरित्रम्=चरणम्, वेः=पक्षिणः, पर्णम्=पतत्रमिव, अच्छेदि=छिन्नमभूदिति। छेदनरूपोऽयं विभागः केनाप्युपकरणेन शक्यते कर्तुम्। 'मा ते गृध्नुरविशस्तातिहाय छिद्रा गात्राण्यसिना मिथू कः' इत्यृग्वेदे (१, १६२, २०) छेदनक्रियोपकरणमसिर्दृश्यत इति कर्तनेन च्छेदनेन द्वैधीभावः स्वयमेव जायते।

२७–२. द्वैधीकरणार्थकोऽयं धातुर्ऋग्वेदे (१, १३३, २) चूर्णनार्थको दृश्यते—

अभिव्लग्या चिदद्रिवः शीर्षा यातुमतीनाम्।
छिन्धि वटूरिणा पदा महावटूरिणा पदा॥

इत्यत्र च्छेदनसाधनमस्ति पादो हस्तिपादो वेति तेन द्वैधीकरणासामर्थ्याच्चूर्णनमर्थो जायते छिद्धातोः। 'यातुमतीनाम्=हिंसावतीनां सेनानाम्, शीर्षा=शीर्षाणि छिन्धि=चूर्णय। केन साधनेन? वटूरिणा=पदा वेष्टनशोलेन त्वदीयपादेन। यद्वा हस्तिनः संबन्धिना पादेन, ऐरावतपादेनेत्यर्थः' इति सायणः।

२७–३. ऋग्वेदकालादेवास्य धातोरर्थस्यामूर्तीकरणं संजातम्। द्वैधीकरणं यथा स्थूलेषु पदार्थेषु जायते, तथैव सूक्ष्मेष्वपि तद् दृश्यते। 'मा तन्तुश्छेदि वयतो धियं मे' इत्यृग्वेदे (२, २८, ५) कर्मसंततेर्नैरन्तर्याभावः प्रकटितश्छिद्धातुना। 'धनक्रयस्तात युधां प्रणेता दुरात्मनां जीवितच्छिन्महात्मा' इति महाभारते (५, ४८, १) जीवितरूपस्यास्थूलपदार्थस्य च्छेदोऽभिहितः। स खलु नाशार्थकः। 'विवर्णवदना दीनाश्छिन्ने च गतिकर्मणि' इत्यत्र हरिवंश० (३, १३३, १०), 'मध्याह्नार्कतापच्छिन्नदृष्टिः' इत्यत्र मृच्छकटिके च व्याघातरूपो रोधरूपो वार्थः प्रतिपादितश्छिद्धातुना। एवमेव प्रतिष्ठायाः (शब्रा० १०, ५, २, ५), संशयानाम् (मुण्डकोप० २, २, ८), संदेहस्य (मभार० ३, ८१, १०), गेहरतेः (भाग० ३, ५, ११), स्पृहायाः (भाग० २, १, १५), आशायाः (रघु० १२, ९६) क्रियातृष्णेत्यादीनां च च्छेदो वाङ्मये संकीर्तितः। स तु दूरीकरणरूपनाशार्थक एव। एवमेव 'दुःखं छिन्द्याम्यहं ते वै' इति दुःखस्य, 'कौतूहलं नः परमं तच्छिन्धि द्विपदां वर' (हरिवंश० २, ७७, ९) इति कौतूहलस्य च च्छेदेऽव्यक्तपदार्थच्छेदनस्य कर्तुमशक्यत्वाद् दूरीकरणमर्थः।

२७–४. 'सन्धिं छित्त्वा तु ये रात्रौ चौर्यं कुर्वन्ति तस्कराः' इति मनुस्मृतौ (९, २७६) द्वैधीकरणार्थकस्य च्छिद्धातोर्विदारणमर्थः। तच्च त्रोटनाभिन्नम्।

२७–५. 'हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं गृहात्' इति मनु० (३, ३३) व्रणनं वेधनं वार्थः। वेधने कस्यचिन्निशिताग्रभागस्य वस्तुनोंऽशतः प्रवेशो

भवति। मत्स्यवेधेन तादृश एवार्थो ज्ञायते। हिन्दीभाषायां 'काँटा छिद गया' इत्यनेनेषत्प्रवेशोऽभिप्रेयते। इममेवेषत्प्रवेशमभिलक्ष्य बुन्देलीयभाषायां पित्रादिकेऽतिस्नेहं कुर्वन्तं बालकं प्रत्येवं खलु व्याहारः—'गरे में छिद जाओ'=पितुर्ग्रीवायामीषत् प्रविश, संसक्तो भवेत्यर्थः।

भारोपीयभाषाया मूलध्वनिः—'स्काइ-द-त्' इति। तत्र ककारस्तालव्यः। संस्कृतभाषायाश्छिद्रशब्देन कर्तनमर्थो न जायते। कस्मिश्चिद् वस्तुनि तादृशोऽवकाशः, येन तत्रत्यस्तरलपदार्थः क्षरितुं शक्नुयात्। घटादौ तादृशं सूक्ष्मं छिद्रमपि भवति, यन्न भवति दृष्टिगोचरं सरलतया। क्षरद् वारि विलोक्य भवति तत्सत्तानुभवः। अयमर्थो लेट्टिश्भाषायाः 'स्किद्र्स्' इति शब्देन स्फुटीभवति। अवे० सिदर्, ग्रीक्–'स्किद्-रोस्' इति सर्वे शब्दाः संस्कृतभाषायाश्छिद्रशब्दमेवानुवर्तन्ते सार्थम्। रौधादिकेन विकरणेन विशिष्टाः सार्वधातुकलकारा नकारमभिव्यञ्जन्ति। लैटिनबलूचीभाषयोस्तु सार्वधातुकविकलस्थलेष्वपि तस्य संप्राप्तिः, लैटिन्—'स्किन्दो' इति, बलूची—'सिन्दग्' इति।

एवं तावच्छिद्धातुः पञ्चस्वर्थेषु प्रयुज्यमानः परीक्षितः—१. कर्तनम्, २. चूर्णनम्, ३. व्याघातः, रोधः नाशः, दूरीकरणं वा, ४. विदारणं त्रोटनं वा, ५. व्रणनम् (वेधनम्) चेति।

प्राकृतभाषायां विच्छेदरूपेऽर्थेऽपि प्रयोगश्छिदधातोः—छिंदइ (महा०, प्राप्र०) इति। एवमेव गीतायाम् (६, ३८) 'छिन्नाभ्रमिव' इत्यत्र 'संछिन्न–' इत्यर्थः शाङ्करभाष्ये।

वस्तुतोऽयं धातुः—अनुच्छेद-अवच्छेद-विच्छेद-उच्छेद-परिच्छेदाद्यर्थेष्वपि समुपलब्धो भवेद् वाङ्मये विनोपसर्गयोजनयेति।

२८ § √जन् (जनी) ४/२९ प्रादुर्भावे (आ)। जुहोत्यादावपि जननार्थको जन्धातुः पठितो धातुपाठे पाणिनीये। √ज्ञा इति √जन् इति चोभयोर्धात्वोः परस्परं संक्रमः। भारोपीयो मूलध्वनिस्तूभयोः 'ग्न' इति। जन्धातोरुपधालोपे द्वित्वे च ज्ञेति प्रकृतिः स्वयमेव जायते। जज्ञानः (ऋ० १, १२, ३) इत्यत्र √जन्+कानच् प्रत्ययः 'लिटः कानच्' इति सूत्रेण, 'गमहन०' (६, ४, ९८) इत्युपधालोपे, 'द्विर्वचनेऽचि' (१, १, ५९) इति तस्य स्थानिवद्भावाद् द्विर्वचने तथा रूपम्। तुल० ऊर्ध्वज्ञुः=ऊर्ध्वजानुः, 'संज्ञुः', 'प्रज्ञुः' इति।

२८–१. प्रादुर्भावो नाम जननम्। प्राणिष्वेव जननार्थको जन्धातुर्दृश्यते मूलतः। जनः, जनो, जननी, जनकः, जनिता, जनित्री चैतादृशाः शब्दा भारोपीयभाषास्वपि लभ्यन्ते। ऋग्वेदे (१, १६९, ३) 'पुत्रो न जातो रण्वो दुरोणे' इत्यत्राग्नेः प्रादुर्भावे पुत्र उपमानत्वेन गृहीतः। पुत्रस्य जननं सुप्रसिद्धम्। ग्रीक्भाषायां 'गेनेतेर्' गेनेतेरोस्, गेनेतोर् (सं० जनितर्) इत्येते त्रयः शब्दाः। 'गेनेतेइरा' इति जनित्रीवाचकः शब्दस्तत्र। लैटिनभाषायां गेनितोर् (<जनितर्), 'गेनेत्रीक्स्' (=सं० जनित्री)

इति च शब्दौ। ग्रीक्—गेनोस्, लैटि० गेनुस् (=सं० जनः) पुरा० नार्दियन्-भाषायां 'कोनर्' इति शब्दः पुत्रवाचकः (द्र० जूलि० ३७३–७५ पृ०)। आंग्लभाषायाम् एतद्धातुसंबद्धा इमे शब्दाः—जिनिअल्=प्रसवकारिन्, जेनिटल्=जननसम्बन्धिन्, यौनम्; जेनिटल्स्=उपस्थः, शिश्नादि, जेनिटर्=जनयितृ; जेनरेशन्=प्रजननम्, सन्तानः, जेण्डर्=लिङ्गम्, प्रकृतिरिति। तत्र √'जेण्डर्' इति धातुरपि यभने। एवं खलु प्रथमत एष धातुः स्त्रीपुरुषसंबन्धपरिणामरूपे जननेऽर्थे सार्वदेशिक इति शक्यते वक्तुम्। ब्रेटानिकभाषायां तु 'गेनेल्' इति शब्दः पुत्रोत्पत्तिवाचकः, न तु सामान्यत उत्पत्तिवाचकः। 'तस्य तस्य प्रसादात् त्वं देवि पुत्रान् जनिष्यसि' इति महाभारते (१, ६७, १३३), आत्मजान् आत्मनः पञ्च जनयामास—भाग० पु० ५, ७, २; ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसंमताः' इति मनु० (३, ३९)। एवं तावदेष धातुः 'किन्'='जन' इत्यादिरूपेण परिवारादिवाचको जातः (मभार० १५, ६, २; १३, १५४, ९; ४, ५, ३; पञ्चत० १, २७ जातेन=पुत्रेण)। जातजायादयः शब्दा अपि तादृशीमेव प्रवृत्तिं परिचाययन्ति।

ततः परं स्त्रीपुरुषसंयोगाज्जायमानस्य जननरूपस्यार्थस्य तदितरपदार्थजातेभ्यः समुत्पद्यमानेष्वर्थेष्वारोपः। अत एव पाणिनिना प्रादुर्भावोऽर्थो दर्शितः, जुहोत्यादौ तु न तथा। मूलतस्तु मैथुनादनुत्पन्नस्य प्रकटनमेव, न तु जननम्।

२८–२. 'आदित्याज्जायते वृष्टिः' इति मनुस्मृतौ जन्धातुः प्रादुर्भावार्थकः।

२८–३. 'व्यायामेन च तेनास्य जज्ञे शिरसि वेदना' (महाभार० ३, २९६, २), 'व्यायामेन ममानेन जाता शिरसि वेदना' इति च महाभारते (३, २९६, ३) वेदनाया अमूर्तत्वाद् अनुभवोऽर्थः साधीयान्। तस्या अव्यक्तत्वादेव सप्तमी विभक्तिः, विभागाद्यभावेनापादानाप्राप्तेः।

२८–४. जायते, अस्ति, विपरिणमते, वर्द्धते, क्षीयते, नश्यतीति षड्भावाः सुप्रसिद्धाः (निरुक्ते, वा० प० १, ३)। महाभारते—

अश्वमेधमवाप्नोति सर्वकामसमन्वितः।
तत्रोष्य रजनीः पञ्च पूतात्मा जायते नरः॥

इत्यत्र जन्धातुः सत्तार्थकः। यद्यपि भूधातोरप्युत्पत्त्यर्थः, तथापि प्रसङ्गत एव तस्यार्थस्य परिज्ञानं भवतीति न सर्वत्र सः। किमपि वस्तु प्रादुर्भावोत्तरम् 'अस्ति' इति सत्तया गम्यते। √जन्धातोः सत्तारूपोऽर्थोऽस्या एव द्वितीयस्या अवस्थायाः सूचकः। अन्यस्यां भाषायां सत्तार्थो न लभ्यते जन्धातोः।

२८–५. ऋ० (१, १४४, ४) 'दिवा न नक्तं पलितो युवाजनि' इत्यत्राग्नेः स्थितिर्वर्ण्यते। 'सोऽग्निः पलितः=पूर्वमङ्गारावस्थायां जीर्णोऽपि समिन्धनानन्तरं युवा=तरुणः, तेजसा सर्वस्य मिश्रयिता वा अजनि=जायते' इत्यक्षरार्थः। इह जायते=संपद्यते, परिणमत इत्यर्थः, न तूत्पद्यत इति।

२८–६. चतुर्थो भावो वर्द्धनमिति । मनु० (९, ३८)—

भूमावप्येककेदारे कालोप्तानि कृषीवलैः ।
नानारूपाणि जायन्ते बीजानीह स्वभावतः ॥

इतीह जन्धातुर्वर्द्धनार्थकः, कालोप्तानां बीजानां वर्द्धनाभावेऽङ्कुररूपेण तेषां नानारूपाभावात् । अग्रेऽपि—

अन्यदुप्तं जातमन्यदित्येतन्नोपपद्यते ।
उप्यते यद्धि यद् बीजं तत् तदेव प्ररोहति ॥

इति मनुस्मृतौ (९, ४०) समेधनरूपोऽर्थो जन्धातोः । कुल्लूकभट्टोऽप्याह— 'व्रीहिरुप्तो मुद्गादिर्जायते इत्येतन्न संभवति । यस्माद् यदेव बीजमुप्यते तत् तदेव जायते' इति । 'व्रीहिरुप्तो मुद्गादिर्जायते' इत्युक्त्या व्रीहिवापोत्तरमङ्कुराद्युत्पत्तिस्ततो वृद्धया बीजमिति समेधनमर्थः । यद्यपि पूर्वपूर्वादुत्पत्तिक्रमेण समेधनमर्थो न संभवति, तथापि प्रथमावस्थातस्तृतीयचतुर्थाद्यवस्थानां वर्द्धनमेव संमतम् ।

अत एव महाभारते (८, ६८, १०)—

यत्तत् पृथां वागुवाचान्तरिक्षे
सप्ताहजाते त्वयि मन्दबुद्धे ।
जातः पुत्रो वासवविक्रमोऽयं
सर्वान् शूरान् शात्रवान् जेष्यतीति ॥

इत्यत्र 'सप्ताहजाते' इति पदगतजातशब्दः 'वृद्धे' इत्यर्थकः । वर्द्धनं सापेक्षमिति पूर्वमेवोक्तम् ।

एवं तावदिह षडर्थाः परीक्षिता जन्धातोः—

१. जननम्, २. प्रादुर्भावः (प्रकटनम्), ३. अनुभवः, ४. सत्ता, ५. परिणामः, ६. वृद्धिश्चेति ।

२९ § √जप् (जप) १/३९६ व्यक्तायां वाचि मानसे च (प) । प्रकृतधातोर्मूले व्यक्तवागर्थको लप् धातुः । √लप्धातोश्च मूले तदर्थक एव रप् धातुः । तुलनीय ऋग्वेदेऽलमर्थकोऽरमिति शब्दः । रप् (लप्) इत्येष ध्वनिरनुकरणात्मकः (ऑनोमैटोपोइटिक्) । बुभुक्षाधिक्ये विवक्षाधिक्ये वा जिह्वया तादृशो ध्वनिर्जायते 'लप्-लप्' इति । मुखस्य संज्ञापि 'लपनम्' इति । वदनं हित्वा वचनार्थकस्यान्यस्य धातोर्व्युत्पन्नेन शब्देन तादृशी संज्ञा न भवति—व्याहरणम्, वचनम्, भाषणं वेत्येतादृशेन ।

√'लप्' इति धातोः प्रयोगविस्तरोऽपि दर्शनीयः । पामीरभाषायां 'लोवम्' 'लेवम्' इति शब्दौ वचनार्थकौ (तुल० प्राकृतभाषायाः √'लव' इति); कुरुवर्षीय०— 'लेपेतेत'=प्रलापार्थकः । हिन्दी—'लबाड़िया', बुं०—'लपरा, लपरू, लबरा' इत्येते

शब्दा अपि प्रलापार्थकाः (मिथ्याभाषणार्थकाः)। नवीनपारसीकभाषायाम् 'लाबा' 'लावा' इत्येतौ शब्दौ विकत्थनार्थावित्येष धातुः पूर्णतो भारोपीयः।

पुनः पुनरतिशयेन गर्हितवचने धातोरेतस्माद् विधीयमानस्य यङो लोपो भवति। यद्यपि पाणिनिर्भावगर्हार्थे विधीयमानस्य यङः प्रसङ्गे वाचनिकानां धातूनां मध्ये नैनं पठति—'लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्' (३, १, २४) इत्यत्र, तथापि लप्-धातोर्गर्हितवचनार्थे प्रयोगोपलब्धिः—'लालपन्ती' (त्रि० उ० ६)। प्राकृत-भाषायामपि √'लालप्प' इत्ययं यङन्तो धातुरतिवचने मुहुर्भाषणे गर्हितवचने चेत्येषु त्रिष्वर्थेषु प्रयुज्यते—'लालप्पइ' (सूअ० १, १०, १९)।

वस्तुतः √'लालप्प' इति √लप् इति चानुकरणध्वनी। एष √लप् धातुः √रप् (१, ३९९) (रपति—ऋ० १०, ३१, १८; रारपीति—ऋ० ६, ३, ६) इत्यत्र संक्रान्तः सन् हश्रुतिपूर्वकम् √'ह्लप्' (१०, ११८) इति, √'ह्रप्' (मैत्रेयमतेन) इति च रूपेण विस्तृतो जातः। एषा हश्रुतिर्हिन्दीभाषायामप्यनेकत्र लभ्यते—हुलास (<उल्लासः) इति, हाँ (<आम्) इति च। संस्कृतभाषाया हकारस्त्ववेस्ताभाषायां जकारत्वेन परिणमते–हिम>जिम इति। इह संस्कृतभाषायामपि√ह्लप् धातोर्हकारोऽकारविपर्ययेण जकारः सन् 'जल्प्' इति रूपेण दृश्यते विस्तृतः। एष एव जल्प् धातुः (एतस्माद् बहुगर्ह्यवागर्थको जल्पाक इति शब्दो व्युत्पद्यते) संक्षिप्तः सन् √जप् इति जायमानो हृदुच्चारणरूपेऽर्थे विस्तृतः। ऋग्वेदकाले रप्-लप्-जल्प्-धातूनां प्रयोगाः प्रचलिता आसन्निति निर्दशितो विकासस्ततोऽपि प्राक्तनः सिध्यति। भारोपीयभाषासु √लप्धातोर्बीजानि सन्निहितानि, न तु जप्-धातोरित्येतस्मात् कारणादपि जप्-धातोर्व्यवहारः परवर्ती ज्ञायते। पाणिनिना यङन्तप्रक्रमे भावगर्हार्थे जप्-जातोर्यङ् विहितः, न तु लप्-धातोः। परन्तु वेदे भावगर्हार्थविहितयङो लोपात्मकाः प्रयोगाः प्राप्यन्ते।

२९–१. व्यक्तवागर्थके पठने √जप्धातुर्मनुस्मृतौ (२,१८१) 'त्रिः पुनर्मामित्यृचं जपेत्' इत्यत्र प्रयुक्तः। 'पुनर्मामैत्विन्द्रियम्' इत्येतस्या ऋचो वारत्रयं जपनेन पठनमर्थो ज्ञायते, ऋचः पठनात्। एवमेव 'कौत्सं जप्त्वाप इत्येतद् वासिष्ठं च प्रतीत्यृचम्' (मनु० ११,२५०), 'सकृज्जप्त्वास्य वामीयम्' (मनु० ११,२५१), 'अब्दार्धमिन्द्रमित्येतदेनस्वी सप्तकं जपेत्' (मनु० ११,२५६) इत्यादौ चर्चः प्रसङ्गाज्जप्-धातोः पठनमर्थः।

२९–२. मनु० (२,७८) 'एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम्' इत्यत्र सावित्र्या जपप्रसङ्गे हृदुच्चारणमुपांशूच्चारणं वाभिप्रेतम्।

श्रीमद्भागवते (८,३,१) तु हृच्छब्दपूर्वकं जप्-धातुप्रयोगः—

एवं व्यवसितो बुद्ध्या समाधाय मनो हृदि।
जजाप परमं जाप्यं प्राग्जन्मन्यनुशिक्षितम्॥ इति।

२९–३. क्वचिच्चैष धातुरतिमन्दमुच्चारणपूर्विकायां प्रार्थनायामपि प्रयुज्यते—

जपते जप्यते चैव तपते तप्यते पुनः।
ददाति प्रतिगृह्णाति युञ्जते ध्यायतेऽपि च॥

इति महाभारते (१३,१४,१५९)। श्रीमद्भागवतपु० (४,७,२९) तु तादृशोऽर्थः स्फुटं दृश्यते—

तव वरद वराङ्घ्रावाशिषेहाखिलार्थे
ह्यपि मुनिभिरसक्तैरादरेणार्हणीये।
यदि रचितधियं माविद्यलोकोपविद्ध
जपति न गणये तत् त्वत्परानुग्रहेण ॥ इति।

२९–४. बु० च० (१,१८) 'बोधाय जेपुः परमाशिषश्च' इत्यत्र 'आशिषो ददुः' इत्यर्थः। यद्यप्याशिषामुदीरणं भवति, तथापि तासामुदीरणपूर्वके दान एवाभिप्रायो ज्ञेय इति दानमर्थो जप्-धातोः, आशिषां समभिव्याहारात्।

२९–५. काशकृत्स्नधातुव्याख्याने √जाप् १/२०१ इति धातोरालस्यरूपोऽर्थः। मानसोच्चारणे बाह्यक्रियाया अपरिलक्षितत्वात् तादृशस्य जपस्य कालक्रमेणाऽऽलस्यरूपेणाभ्युपगमः कृतः स्यादिति।

एवं तावत् पञ्चार्था जप्-धातोः—१. पठनम्, २. हृदुच्चारणम्, ३. मन्दोच्चारणपूर्वकप्रार्थना, ४. दानम्, ५. आलस्यं चेति। कुरुवर्षीय-हिन्द्यादिभाषासु त्वेष धातुः प्रलापार्थकोऽपि। यङन्ते च भावगर्ह्यर्थोऽस्य प्रतिपादितः। एवं तावत् सप्तार्था भवन्ति धातोरेतस्य।

३०. § √ज्ञा ९/३६ अवबोधने (उ)। प्रकृतधातोः प्रकृतिद्वयं स्पष्टतः परिलक्ष्यते—१. जा (न्) इति, २. ज्ञा इति चेति। भारोपीयो मूलध्वनिरपि द्वेधा—१. गेन्, गेन (तालव्यः) इति, २. ग्नी–, ग्नो (तालव्यः) इति च। ऋग्वेदादौ भारोपीयासु च भाषास्ववबोधनात्मक एवार्थो नान्यः। गेनध्वनिमूलका इमे प्रयोगाः—लिथु० जिनोति; लेट्टिश—जिनात्, अवे० पैति-जानन्ति। ग्नीध्वनिमूलकास्तु—पु० उ० ज०—क्नाउ, एँग्लो०—क्नावन्, इँग्लि०—(क्)नो, पु० च० स्ला०—'ज्नति' चेति। नूनमेष जननार्थकजन्धातुसंबद्धः, यथा तत्संबद्धा जाया-जन-जातादिसंस्कृतशब्दाः संबन्धवाचकाः, इँग्लिश्भाषादेश्च किन्-प्रभृतयः शब्दा अपि तथा, एवमेव ज्ञाधातोर्जातो ज्ञातिशब्दोऽपि संबन्धवाचकः। ज्ञातयः (ऋ० १०,६६,१४; १०,८५,२८) इत्यत्र 'बन्धवः' इत्यर्थः। सम्बन्धात् परस्परं परिचयो नामावबोधः।

३०–१. अभ्रान्त्यात्मकं भ्रान्त्यात्मकं चोभयथा ज्ञानम्। तत्र प्रथमेऽर्थे—ऋ० (४, ४, ६) जानातेः प्रयोगः। अत एव मनु० (८, २६४) 'अज्ञानाद् द्विशतो दमः' इत्यत्र 'अज्ञानाद्=भ्रान्त्या' इत्याह कुल्लूकभट्टः। अभ्रान्त्यात्मके ज्ञाने महाभारते (३, ७२, ८) हृदयग्राही प्रयोगः—

सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन।
नैकत्र परिनिष्ठाऽस्ति ज्ञानस्य पुरुषे क्वचित् ॥ इति।

सर्वत्र वाङ्मये भूयिष्ठाः प्रयोगा अस्मिन्नर्थे दृश्यन्ते।

३०–२. गीतायाम् (९, १) 'यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते' इत्यत्र 'ज्ञात्वा' इत्यस्य 'प्राप्य' इति शाङ्करभाष्ये, 'साक्षात्कृत्य' इति नीलकण्ठकृतव्याख्यायामर्थः, परिचयात्मकज्ञानस्य साक्षात्काररूपत्वात्।

३०–३. वा० रा० (३, ६४, १)—

स दीनो दीनया वाचा लक्ष्मणं वाक्यमब्रवीत्।
शीघ्रं लक्ष्मण जानीहि गत्वा गोदावरीं नदीम्॥

इत्यत्र सीताऽदर्शनाद् व्याकुलो रामो लक्ष्मणमादिशति—हे लक्ष्मण! गोदावरीं नदीं गत्वा शीघ्रं जानीहि=गवेषय—इति। इह ज्ञाधातोरर्थोऽन्वेषणम्।

३०–४. मभार० (४, २९, ६)—

स्वराष्ट्रे परराष्ट्रे च ज्ञातव्यं बलमात्मनः।
उदयः पाण्डवानां च प्राप्ते काले न संशयः॥

इति शारद्वतो वाक्यं कृपेण पुनरावृत्तम्। इह बलपदसमभिव्याहाराद् ज्ञाधातोर्निरूपणमर्थः।

३०–५. मनु० (२, २३)—

कृष्णसारस्तु चरति मृगो यत्र स्वभावतः।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परः॥

इत्यत्र,

बालवृद्धातुराणां च साक्ष्येषु वदतां मृषा।
जानीयादस्थिरां वाचमुत्सिक्तमनसां तथा॥

इत्यत्र च ज्ञाधातुर्विचारार्थकः। यज्ञियस्य म्लेच्छदेशस्य च विचारप्रकारो वर्णितः श्लोके। उत्तरत्र तु वाचो ज्ञानं नाम विचारः, वचनस्य विचारार्हत्वात्।

३०–६. 'ज्ञोऽविदर्थस्य करणे' इति पा० सू० (२, ३, ५१) 'सर्पिषो ज्ञानम्' इत्युदाहरणं सुप्रसिद्धम्। तत्र करणीभूतं यत् सर्पिस्तत्संबन्धिनी प्रवृत्तिरित्यर्थः। ज्ञानपूर्विकायां प्रवृत्तौ जानातेर्लक्षणेति तत्त्वबोधिनीकारः। इह करणकारकसमभिव्याहारात् सर्पिषोपायेन ज्ञानाभावः, ज्ञाने भौतिकपदार्थानां सहकारोऽनभिप्रेतः, अन्यथा केषाञ्चिद् धनिनामतिमात्रमन्दबुद्धीनामपि धनद्वारा ब्रह्मादिज्ञानप्रसङ्गः स्यादिति सर्पिषोपायेन प्रवर्तनरूपोऽर्थो ज्ञेयः। लोकेऽपि 'चिटिकाया जानीते' इत्यस्य चिटिकाकरणेन प्रवेशानुमतिर्भवतीति तत्र प्रवर्तते जनः। एवमेवाद्यत्वेऽज्ञस्यापि जनस्योत्कोचद्वारकं प्रवर्तनं भवतीति स भणति 'मैं जान लूँगा चाँदी के जूते से'=रजतेन प्रवृत्तो भविष्यामीति तदाशयः। एवमेव 'शम्भोर्मुकुन्दे जानीते' इत्यस्य 'शम्भुना साधनेन मुकुन्दे प्रवर्तते' इत्यर्थः।

३०–७. भट्टि० (१६, ४१)—

ज्ञायिष्यन्ते मया चाद्य वीरम्मन्या द्विषद्गणाः।
गूहिष्यामि क्षितिं कृत्तैरद्य गात्रैर्वनौकसाम् ॥

इत्यत्र 'एते च द्विषां गणाः शत्रुसंघा वीरम्मन्या अद्य मया ज्ञायिष्यन्ते = परिच्छेत्स्यन्ते' इति जयमङ्गलः। 'मारणतोषणनिशामनेषु ज्ञा' (भ्वा० प० अ०) इति 'ज्ञप मिच्च' (चु० प० से०) इति वाऽनुशासनाद् ज्ञाधातुर्हिंसार्थकः। तदुक्तममरकोशे—'निर्वासनं संज्ञपनं निर्ग्रन्थनमपासनम्' (२, ८, ११३) इति। उक्तेष्वर्थेषु ज्ञाधातुर्मिद् भवति। संविधाने (प्रयोजके) मित्त्वाद् ह्रस्वेन 'ज्ञापयति' इत्यस्य स्थाने 'ज्ञपयति' इति प्रयोगो बुध्यते। इह भट्टिकाव्ये तु तादृशस्य प्रयोगस्यासत्त्वेऽपि कथं परिच्छेदनार्थः, उत्तरार्धे श्लोके 'गूहिष्यामि क्षितिं कृत्तैरद्य गात्रैर्वनौकसाम्' इत्यत्र 'कृत्तैर्गात्रैः' इति कृत्तपदसमभिव्याहारेण ज्ञाधातोस्तादृशोऽर्थात्। लोकेऽपि क्रुद्धो मानवः प्रत्यर्थिनं प्रति—'बताऊँ ?' इति क्रोशन् प्रत्यर्थिनो व्यवहारेण ततोऽप्यधिकं रुष्टस्तं ताडयतीति मुष्टिदण्डकृपाणादिहस्तयोः प्रत्यर्थिनोः प्रसङ्गात् 'बताना' इत्यस्य चपेटाताडनहननादिरूपोऽर्थोऽभ्युपेयः।

३०–८. प्रयोजकसंविधाने तु 'धर्मराजः समागम्याज्ञापयत् स्वं प्रयोजनम्' इति महाभारते (२, १३, ४५) आख्यातवान् निवेदितवान् वेत्यर्थः। एवं तावदाख्यानमर्थो ज्ञाधातोः।

३०–९. मभार० (१४, १६, ९) 'श्रावितस्त्वं मया गुह्यं ज्ञापितश्च सनातनम्' इत्याह वासुदेवोऽर्जुनं प्रति। इह ज्ञाधातुरध्यापनार्थकः। एवं प्रयोजकाभावे 'गुरोः सकाशाद् व्याकरणं ज्ञातुमिच्छति' इत्यत्र ज्ञाधातुरध्ययनार्थको भवति।

३०–१०. मभार० (१, १५०, ९) 'ततस्ते ज्ञापयामासुर्धृतराष्ट्रस्य नागराः' इत्यत्र 'सूचयामासुः' इत्याशयः।

३०–११. मभार० (३, १०२, २६) 'तस्मात् त्वां देवदेवेश लोकार्थं ज्ञापयामहे' इत्यत्राभिभाषणमालापो वार्थो ज्ञाधातोः, तस्मात् कस्मात् ? 'अस्माकं भीतभीतानां त्वं गतिर्मधुसूदन' इत्येतस्मात् कारणात् त्वां वदामि यत् 'रक्ष लोकांश्च देवांश्च शक्रं च महतो भयात्' इति प्रसङ्गात्। अत एव सूचनाद्यर्थानामिहानवकाशः।

एवं तावद् ज्ञाधातोरेकादशार्था इह परीक्षिताः—१. अभ्रान्त्यात्मकं ज्ञानम्, २. साक्षात्कारः (प्राप्तिः), ३. अन्वेषणम्, ४. निरूपणम् (परीक्षणम्, निरीक्षणम्), ५. विचारः, ६. प्रवर्तनम्, ७. परिच्छेदनम्, ८. आख्यानम् (निवेदनम्), ९. अध्यापनम् (अध्ययनम्), १०. सूचनम्, ११. अभिभाषणमालापो वेति। इमे सर्वेऽर्था ज्ञानस्य प्रकारमात्रा एवेति विस्तृतार्थस्य तस्येहार्थसंकोचो नाम।

३१. § ढौक् (ढौकृ) १/९४ गत्यर्थः (आ)। तुलनीयौ गत्यर्थौ त्रौक्-टौक्-धातू। सर्वतः प्रथममस्य धातोः प्रयोगः कात्यायनश्रौतसूत्रे प्राप्यते—'तं मुखस्य ढौकयित्वा' (९, ११, १९) इति।

३१–१. मभार० (१२, १११, ५६) 'तन्मांसं चैव गोमायोस्तैः क्षणादाशु ढौकितम्' इत्यत्र 'प्रवेशितम्' इति नीलकण्ठः। गोमायोर्गृहे ढौकितम्=प्रवेशितं मांसं प्रदर्शयामासुरित्यर्थः 'यदि विप्रत्ययो ह्येष तदिदं दर्शयाम ते' इति पूर्वप्रसङ्गात् स्पष्टीभवति।

३१–२. 'कुन्ती तदन्नपूर्णां च तस्मै पात्रीमढौकयत्' इति कथास० (१६, ३९) चतुर्थीविभक्त्या ढौक्धातोरुपहारार्थो दानार्थो वा ज्ञायते। कुन्ती स्नात्वा समागताय दुर्वाससे पात्रीमुपाहरदित्यर्थः। 'निमन्त्रितैर्ढौकितानि रत्नान्यस्य सुरासुरैः' इति राजत० (३, ४४५) 'रत्नान्युपहृतानि' इत्यर्थः। नैषधे (१६, ६०१) 'अमूनि संख्यातुमसावढौकि तैः' इत्यत्रार्पणमर्थः प्रकाशकारमतेन, उपहारार्थश्च जीवातुव्याख्याकारमतेन। 'रत्नमन्यनृपढौकितमन्ये' इति नैष० (२१,४) उपदीकरणमर्थः प्रकाशकाराभिमतः। 'ततो वाहनमारुह्य स सत्यव्रतढौकितम्' इति कथासरि० (२६,७) सत्यव्रतनामकेन जनेनोपनायितं दत्तं वा रथमारुह्येत्यर्थः।

३१–३. शाकुन्तले (३,३७ श्लोकानन्तरम्) 'वक्त्रं ढौकते' इत्यस्यार्थः संवरणम्=आच्छादनं वा, दुष्यन्तक्रियमाणचुम्बनप्रयत्नस्य वैफल्यसाधनत्वात्। केचित् तु चालनमर्थः। तत्संबन्धेऽग्रे वक्ष्यते।

३१–४. भट्टि० (१४, ७१) 'डुढौकिरे पुनर्लङ्काम्' इत्यत्र 'जग्मुः' इति जयमङ्गलः। 'राक्षसोऽतर्जयत् सूतं पुनश्चाढौकयद् रथम्' इति भट्टि० (१७, १०३) रामस्य समीपं प्रापयद् इत्यर्थः। एवं गत्यर्थो ढौक्धातोः केवलं भट्टिकाव्ये संप्राप्यते।

३१–५. प्राकृतभाषायां √ढोअ इति √ढुक्क इति च धातुद्वयी चतुर्ष्वर्थेषु प्रयुज्यते—१. उपहारे, २. उपस्थापने, ३. (अक०) लगने (प्रवृत्तौ), संगमे चेति (महा; सुपा; १६८; भवि०; पिंग; उप ९८६)।

३१–६. हिन्दीभाषाया 'ढूंकना' इत्यस्यार्थः प्रवेश इति (तुल० मभार० १२, १११, ५६)। तत्र 'ढूंका' इत्यस्यार्थः 'निलयनकार्यम्' 'गोपनकार्यम्' वा। धौलपुरादिक्षेत्रीयभाषायां व्रजभाषायां च 'ढोक लगाना' 'ढोक देना' इत्यनयोरर्थो भवति—'प्रणिपातपूर्वकं नमस्कारः' इति।

एवं तावत् षट्स्वर्थेष्वेष प्रयुज्यते धातुः—१. प्रवेशः, २. उपहारः (दानम्, उपदीकरणम्), ३. आच्छादनम्, ४. गमनम्, ५. प्रवर्तनम्, संगमः, ६. नमस्कारश्चेति।

धातुरेष उपहारार्थमुपस्थापनरूपमर्थं वा णिजन्तः सन् व्यनक्ति। णिजन्तं विना स सामान्यतो गत्यर्थ एव दृश्यते। ण्यन्तावस्थातः पूर्वमेव यत्र धातोरादिस्वरो वृद्धस्तत्र क्तप्रत्यययुतस्य धातोर्ण्यन्ताण्यन्तभेदो दुश्शकः कर्तुम्, उभयत्र 'ढौकित–'

इति रूपस्यैव सत्त्वात्। उपहारार्थे स ण्यन्तोऽन्यार्थेषु च ण्यन्ताण्यन्तो वा यथेप्सितं वेदितव्यः।

शाकुन्तले शकुन्तलाया लज्जावसरे कालिदासेन 'वक्त्रं ढौकते' इति प्रयुक्तम्। कतिपये विद्वांसः संवरणरूपमर्थं निश्चिन्वते, कतिचन तु 'अन्यतश्चालयति' इति, कालिदासकालेऽवगुण्ठनप्रथायास्तन्मतेनासत्त्वात्। तन्न समीचीनम्, तत्रैव पञ्चमेऽङ्के चतुर्दशश्लोके 'केयमवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या' इत्यवगुण्ठनप्रथायाः प्रमाणात्। तस्यैवाङ्कस्यैकोनविंशश्लोकानन्तरं गौतम्या वचनेनापि तत्पुष्टिर्भवति—'जाते मुहूर्तकं मा लज्जस्व, अपनेष्यामि तावत् तेऽवगुण्ठनम्, ततो भर्ता त्वामभिज्ञास्यति' इति। 'वक्त्रं ढौकते' इत्यत्र ढौक्धातोराच्छादनमर्थो नितरां संगतः प्रतीयते, तदुत्तरवर्तिन्यष्टत्रिंशे श्लोके 'मुहुरङ्गुलिसंवृताधरोष्ठम्' इति दुष्यन्तोक्तिप्रमाणात्। कन्या न भवन्ति स्मावगुण्ठनवत्य इत्यतो हस्तद्वारकमावरणं तत्कृतं युक्तियुक्तम्। [पाश्चात्यविदुषा बेनफाइमहाशयेन तु तत्रत्यां संस्कृतिमनुरुन्धानेन 'उपनयति, ददाति' वेत्यर्थः कृतः 'एप्प्रोच्' इति शब्दद्वारा, तत्र चुम्बनस्य कन्याभिः सादरं गृहीतत्वादिति]। प्राकृतभाषायामपि च्छादनार्थकः √ढक्क् धातुरुपलभ्यते—'ढक्किसं'—गा० ३, १४; 'ढक्किऊण'—सुपा० ६४० इति।

३२. § √तन् (तनु) ८/१ विस्तारे (उ)। शब्दार्थकेन √स्तन् (ष्टन) धातुनास्य संबन्धः। सन्तानपालनार्थकः √ताय् (तायृ) धातुरपि तुलनीयः। तन्धातोर्विस्तारार्थोऽस्माभिस्तन्तुरूपेण दृश्यते। सप्ततन्तुर्नाम यज्ञः, सप्तभिश्छन्दोभिरग्निजिह्वाभिर्वा तस्य ततत्वात्। तुल० 'यो यज्ञो विश्वतस्तन्तुभिस्ततः' (ऋ० १०, १३०, १)। 'पञ्चयामं त्रिवृतं सप्ततन्तुम्' (ऋ० १०, ५२, ४) सप्तभिश्छन्दोमयैः स्तुतिभिर्विस्तृतः सप्ततन्तुर्भवति यज्ञः। ऋग्वेदे (६, ५९, ७) 'इन्द्राग्नी आ हि तन्वते नरो धन्वानि बाह्वोः' इत्यत्र धनुषामाततनं नाम आततज्यम्। धन्वानि आतन्वते=आततज्यानि कुर्वत इत्यर्थः। 'अहं रुद्राय धनुरा तनोमि' (ऋ० १०, १२५, ६) इहापि ज्ययाततं करोतीत्यर्थः। 'धनुस्तन्वन्ति पौंस्यम्' (ऋ० ९, ९९, १) इत्यत्रापि धनुषि ज्यां कुर्वन्तीत्यर्थः। एवं तावत् तन्धातुना प्रत्यञ्चाया निर्देशः। तत्र शब्दोऽपि भवति। स धनुष्टङ्कारः। तत्र शब्दार्थके स्तन्धातौ सकारोऽधिकः, ऋग्वेदे (१०, १६८, १) 'स्तनयन्' इत्यनेन विविधं शब्दमुत्पादयन्नित्यर्थः। किन्तु 'घोषादिन्द्रस्य तन्यति ब्रुवाणः' इत्यृग्वेदे (६, ३८, २) घोषात्=घोषणीयात् स्तोत्रात्, ब्रुवाणः=स्तुवन्, शब्दं करोतीत्यर्थेन सकारविरहितोऽपि तन्धातुः शब्दार्थको दृश्यते। सायणेन तत्र तादृशेऽर्थे संदेहाद् विकल्पेन विस्तारार्थोऽपि दर्शितः। सकाररहितो गर्जनार्थकः √तन् धातुर्ग्रीक्भाषायामपि दृश्यते—'तेन्नेइ' इति (जूलि० १०२१ पृ०)। लैटिन्—तोनारे, तोनित्रु, एँ० सै०—थुनोर् इति सर्वे शब्दा गर्जनार्थकाः। ऋ० (१०, ६६, ११) 'एकपात् तनयित्नुरर्णवः' इत्यत्र तनयित्नुर्मेघः। भारोपीयभाषायां गर्जनार्थको मेघपर्जनार्थको वा (स्)तन्धातुः (द्र० जूलि० १०२१ पृ०)।

एवं खलु केवलस्य तन्धातोरपि शब्दार्थः। मूलतोऽयं धातुस्तन्तुम् (=प्रत्यञ्चाम्) अभिप्रैति। धनुष्टङ्कारस्तु 'ताँ' इत्येवंरूपेण जायत इत्ययमनुकरणध्वनिरूपः (ऑनोमैटोपोयटिक्) सिध्यति। प्रत्यञ्चाऽऽरोपेण धनुर्विततं भवति। प्रतिपादितानि पूर्वमेव मया कानिचिदुदाहरणानि यत्र तन्धातुना प्रत्यञ्चारोपो गम्यते। प्रत्यञ्चार्थेऽधुनापि 'ताँत'-शब्द उपलभ्यते प्रादेशिकीषु भाषासु। पश्चादयं सकारयुक्तः सन् मेघध्वनिवाचको जातः। घनरससादृश्येन पयोधारकत्वात् कुचार्थेऽपि स्तनशब्दः प्रयुक्तः।

३२–१. ऋ० (१, ५२, ११) 'विश्वा ततनन्त कृष्टयः' इत्यत्र कृष्टयः= मनुष्याः, विश्वाः=अहानि, ततनन्त=विस्तारयेयुरिति सायणः। 'वस्त्रा तन्वते' (ऋ० १, १३४, ४)=विस्तारयन्ति। 'वासस्तनुते सिमस्मै' (ऋ० १, ११५, ४); 'तनुं तनुष्व' (ऋ० १, १४२, १) इत्यत्र तनुशब्देन यज्ञोऽभिप्रेतः; यज्ञं विस्तारयेत्यर्थः। 'एते तु कीर्तिता मुख्या यैराख्यानमिदं ततम्' इति महाभारते (१, ६३, १२७) आख्यानपदसमभिव्याहारात् कथनप्रचाररूपो वार्थो न भवति तन्धातोः, दुर्योधनादिभिर्महाभारतरूपाख्यानस्य विस्तारत्वात्। व्यापनरूपोऽर्थस्तु पर्यायवचनो विस्तारस्य।

३२–२. ऋ० (१०, ७१, ९) 'त एते वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वते अप्रजज्ञः' इत्यत्र 'सिरीः=सीरिणो भूत्वा, तन्त्रम्=कृषिलक्षणं तन्वते=विस्तारयन्ति' इति सायणः। इह तन्त्रशब्देन तन्धातोरुक्तत्वात् तस्य करणमर्थः। 'मा चिरं तनुथाः' (ऋ० ५, ७९, ९) इत्यत्र 'विलम्बं मा कृथाः' इत्यर्थः। एवमेव नैषध० (४, २) 'यदतनुज्वरभाक् तनुते स्म सा प्रियकथासरसीरसमज्जनम्' इत्यत्र 'चकार' इति प्रकाशः। 'अविलम्बितुकामतामतानीत्' (नैषध० २१, १३२) इत्यत्र कृतवान् इत्यर्थः (जीवातौ)। 'ध्यानं ततान सः' (कथास० २४, ९८) इत्यत्र ध्यानं चकारेत्यर्थः।

अयं विस्तारार्थको धातुरमूर्तभावेष्वपि प्रयुज्यमानो दृश्यते—'सत्यं ततान' (ऋ० १, १०५, १२) इत्यत्र सत्यस्य विस्तारोऽभिहितः। सत्यस्यार्थस्तत्र तेजो भवितुं शक्नोति, तदाऽमूर्तभावे नास्ति प्रयुक्तो धातुः। 'पितुर्मुदं तेन ततान सोऽर्भकः' इत्यत्र रघु० (३, २५) मोदाधिक्ये तात्पर्यम्। 'यजतां शं तनोति' (भाग० पु० १, १७, ३४) इत्यत्र, 'कुतूहलं त्रस्नु ततान तस्य' (भट्टि० २, १७) इत्यत्र चामूर्तभावेषु प्रयोगः।

३२–३. ऋ० (१, १७०, ४) 'यज्ञं ते तनवावहै' इत्यत्रोपक्रमणार्थः। मनु० (४, २०५) 'नाश्रोत्रियतते यज्ञे' इत्यत्र कुल्लूकभट्ट आह—'अनधीतवेदेनोपक्रान्ते' इति। महाभारते (२, ५३, ४)—

अथ यज्ञविभूतिं तां काङ्क्षसे भरतर्षभ।
ऋत्विजस्तत्र तन्वन्तु सप्ततन्तुं महाध्वरम्॥

इत्यत्र √तन्धातोरुपक्रमणमर्थः। यद्यपि बोथलिङ्कादिमतेनेह √तन्धातुः करणार्थकः, तथापि करणार्थस्य सामान्यार्थत्वादिह न भवेत् स्पष्टतेति निश्चयः प्रासङ्गिक आरम्भरूपोऽर्थः।

३२–४. महाभारते (१, १२१, १६) 'सुषाव च बहुसोमान् सोमसंस्थास्तताम च' इत्यत्र तन्धातोः संस्थापनमर्थः, संस्थासमभिव्याहारात् ।

३२–५. ऋ० (१, ३८, १४) 'मिमीहि श्लोक आस्ये पर्जन्य इव ततनः । गाय गायत्रमुक्थ्यम्' इत्यत्र सायणः 'यथा मेघो वृष्टिं विस्तारयति तद्वत्' इत्याह, तन्न मनोरमम्, आस्ये निर्माणानन्तरं श्लोकस्य ध्वननमेव विस्तार इति तन्धातोः शब्दार्थकत्वात् । उपमानेन मेघेनापि तादृशस्यार्थस्य सूचितत्वात् । 'घोषादिन्द्रस्य तन्यति ब्रुवाणः' (ऋ० ६, ३८, २) इत्यत्र सायणोऽपि शब्दार्थकमाह तन्धातुम् ।

३२–६. ऋ० (८, २१, १८) 'पर्जन्य इव ततनद्धि वृष्ट्या' इत्यत्र प्रकरणतः √तन् [शब्दे] इत्यस्याप्यर्थो ध्वन्यत इति केचिदोल्डनबर्गादयोऽभ्यधुः, तन्न हृदयावर्जकम्, वृष्टिपदसमभिव्याहारात् तन्धातुः प्रीणनार्थकः । यथा पर्जन्यो वृष्ट्या पृथिवीं प्रीणयति तद्वच्चित्रो राजा याचमानान् धनैस्तर्पयतीति हृदयम् ।

३२–७. महाभारते (१, ४२, ८)—

सोऽसृजत् पूर्वपुरुषः पुराकल्पे प्रजापतीन् ।
ते तन्वानास्तनूस्तत्र ब्रह्मवंशाननुत्तमान् ॥

इत्यत्र सर्जनरूपोऽर्थस्तन्धातोः, पूर्वार्द्धे तथैवाभिप्रायात्, विस्तारार्थस्य चेह सर्जनपूर्वकत्वात् ।

३२–८. भागवतपुराणे (१, १७, ३४) 'यस्मिन् हरिर्भगवान् इज्यमान इज्यामूर्तिर्यजतां शं तनोति' इत्यत्र, भागं बर्हिषि या वृङ्क्ते न तनोति च नो वसु' (भाग० ४, १७, २२) इत्यत्र च तन्धातुर्दानार्थकः ।

३२–९. नैष० (२२, ७) 'तनोति तन्वा वियतापि तारश्रेणिस्रजा साम्प्रतमङ्ग हारम्' इत्यत्र तारश्रेणिमालया हारं रचयतीति मालापदसमभिव्याहारात् तन्धातोर्विरचनरूपोऽर्थो बोद्धव्यः ।

३२–१०. 'चिन्ता संतापमन्तस्तनुते हि जन्तोः' इति नैष० (१४, ७४) चिन्ता प्राणिनोऽन्तःकरणे संतापं महान्तमाधिं जनयतीत्यर्थः । यद्यपीह करणार्थेन गतार्थता, तथापि तस्य सामान्यार्थत्वान्नेह स्यात् स्पष्टतेति जन्धातुना विवरणम् ।

३२–११. भारोपीयभाषाया मूलधातुः—√तेन, √तेन्द् इति । स च विस्तारे, कर्षणे (आकर्षणे) [तु० हि० √तनना, √तानना] वेष्टने चेति त्रिष्वर्थेषु दृश्यते । तत्र कर्षणं धनुषः । वेष्टनं तु तन्त्वादिरूपेण विज्ञेयम् । संस्कृतभाषायामप्येते त्रयोऽर्था भवन्ति तन्धातोः । अवे०—'पइरि-तनव' = पृथग् निधास्यामि । अवे०—'उस्तान'=उत्तानम् । न० पारसी०—'तनीदन्' = वेष्टनम्, कर्तनम् । ग्रीक्—ततोस्, लै० तेन्तुस् (=ततम्) । ग्रीक्—तथिस् (=सं० ततिः) । न० पारसी०—तार्, अवे०—* तंथ्र (=सं० तन्त्रम्); अफ्गान०—तोर = तन्तुसन्तानम् । अवे०—तनू = सं० तनूः । ग्रीक्—तनुते = तनुते ।

लै०—तेन्दो, तेतेन्दि (<सं० तनुः=कनिष्ठः, पश्चाद्वर्ती)। पु० वर्चस्ला०—तेनेतो, तोनोतो (<सं० तन्तुः)=रज्जुः, दोरकम्, रेखेति।

'बहुग्राही तनुत्यागी' इत्यादौ तनुशब्दोऽल्पार्थकः। विस्तारोऽल्पतेति चोभौ शब्दौ मिथो विपरीतार्थकौ। तनूशब्दस्यार्थः शरीरमिति। तत् पूर्वं लघु सदपि वर्द्धते। अन्ते च क्षीणं सदल्पं जायते। अयमेव पश्चाद्विकसितः कृशोऽल्पो वार्थः 'तनुत्यागी' 'अतनुज्वरभाक्' (नैष० ४, २), हिन्दी—तनिक, लैटिन्—'तेन्दो, तेतेन्दो' इत्यादिषु परिलक्ष्यते।

एवं तावत् √तन् धातुरेकादशार्थेषु परीक्षितः—१. विस्तारः (व्यापनम्), २. करणम्, ३. उपक्रमणम्, ४. संस्थापनम्, ५. शब्दः, ६. प्रीणनम्, ७, सर्जनम्, ८. दानम्, ९. विरचनम्, १०. जननम्, ११. कर्षणम्, वेष्टनम्, अल्पत्वं चेति।

३३. § √तप् (तप) १/९७० संतापे (प)। नैरुक्ताः 'पत्यते' ऐश्वर्यकर्मसु (निघ० २, २१) इत्यैश्वर्यार्थकं पत्-धातुं पठन्ति। पाणिनीये धातुपाठेऽपि दिवादावैश्वर्यार्थकः पत्-धातुः 'वा-ग्रहणाद् ऐश्वर्येऽपि भ्वादिरित्येके' इति क्षीरस्वामी। चुरादौ दाहार्थकः√तप्-धातुरिति√तप् इति√पत् इति च धात्वोर्मिथः संक्रान्तिरवश्यं दृश्यते। उभयोर्वर्णविपर्ययेणोभयोः सिद्धिः। पतनेऽनुभूते सति मानवस्तपसि प्रवर्तते। वसिष्ठ-विश्वामित्रविवादे विश्वामित्रः पराभूतः संस्तपस्तप्तुं जगाम राज्यं विहाय सम्पूर्णम्। विमातुर्वचनबाणैर्विद्धो ध्रुवोऽप्यात्मपतनमनुभवन् वनं गतस्तपश्चरणाय। ब्रह्मापि पङ्कजनिकेतने विभ्रमन् पराजयमनुभवंस्तपसि प्रवृत्त इति पतनपूर्वकं तपनं दृश्यते सर्वत्र। अत एव 'तपस्वी=वराकः' इति। मनसोऽयमेव संताप ऐश्वर्यपूर्वपीठिका। जगति विलोक्यमानानामैश्वर्याणां मूले तपः=सन्तापः पीडा वा। तपोलक्षणं 'वैधक्लेशजनककर्म' इति।

३३–१. मूलतोऽयमौष्ण्यार्थको धातुः। भारोपीयमूलधातुरपि खल्वौष्ण्यार्थकः (द्र० जूलि० १०६९ पृ०)। मूलत इह दाहार्थकता नास्ति। 'तपति तनुगात्रि मदनस्त्वां पुनर्मां दहत्येव' इति शाकुन्तलप्रयोगेणापि तयोर्भिन्नता स्पष्टा। ऋ० (१०, ३९, ९) तप्तस्य ऋबीसस्य=अग्निकुण्डस्योल्लेखः। ऋ० (५, ४३, ७) 'विप्रा नाग्निना तपन्तः' इत्यत्र 'विप्रा मेधाविन ऋत्विजो वपावन्तं प्रवृद्धं पशुं यथाग्नौ तपन्ति तद्वत्' इत्यनेनौष्ण्यमर्थः। नैषधीये चरिते (२, ९४) औष्ण्यार्थकस्य तप्धातोर्मनोहारी प्रयोगः—

विधुदीक्षितजेन यत्पथं पयसा नैषधशीलशीतलम्।
शशिकान्तमयं तपागमे कलितीव्रस्तपति स्म नातपः॥ इति।

एवमेव—

तस्य तापनभिया तपनः स्वं तावदेव समकोचयदर्चिः।
यावदेव दिवसेन शशीव द्रागतप्यत न तन्महसैव॥ इति।

'तपाम्यहमहं वर्षम्' इति गीतायाम् (९, १९) उष्णीकरणमर्थः। 'वर्षते तपते कोऽन्यो ज्वलते तेजसा च कः' इति महाभारते (१३, १४, २२०) औष्ण्यमर्थस्तप्-

धातोः। 'तप्तमासेचयेत् तैलम्' इति मनु० (८, २७२)। हिन्दीभाषायामपि 'तपइ अवाँ इव उर अधिकाई' इत्युष्णताधिक्ये तुलसीदासकृतः प्रयोगः।

३३–२. दूरस्थ उष्णोऽग्निः समीपतो दाहकोऽपि भवतीति तप्धातुर्दहनेऽर्थेऽपि प्रयुज्यमानो लभ्यते—'ब्रह्मद्विषस्तपनो मन्युमीरसि' (ऋ० २, २३, ४) इत्यत्र, 'तेजिष्ठया तपनी तप' (ऋ० २, २३, १४), ब्रह्मद्विषो राक्षसान् दहेत्यर्थः। एवमेव 'तपुर्मूर्धा तपतु रक्षसो ये ब्रह्मद्विषः शरवे हन्तवा उ' (ऋ० १०, १८२, ३) इत्यत्र तापशिरस्को बृहस्पतिर्ब्राह्मणद्वेषकान् राक्षसान् तपतु=तापयतु=दहत्वित्यर्थं इति सायणः। 'तपन्त्यजस्रं वेगेन वह्नावग्निमतां वर' इति मभार० (१, ५२, ६) ज्वलनार्थः। श्रीमद्भागवते (७, ३, ४) दाहार्थकः सुस्पष्टः प्रयोगः—

तस्य मूर्ध्नः समुद्भूतः सधूमोऽग्निस्तपोमयः।
तिर्यगूर्ध्वमधोलोकानतपद् विष्वगीरितः॥ इति।

नैषधीये चरिते (३, १०२; ४, ५४) तु णिजन्तः प्रयोगो दाहार्थकः।

३३–३. ऋ० (१, १६२, २०) 'मा त्वा तपत्प्रिय आत्मापियन्तम्' इत्यत्र तप्तं मा कार्षीदित्यक्षरार्थः। वियोगजनिता व्यथा माभूदित्याकूतम्। इह संतापोऽर्थस्तप्धातोः। संतापो नाम पीडनम्—'सं मा तपन्त्यभितः सपत्नीरिव पर्शवः' इत्यृग्वेदे (१, १०५, ८) इत्यत्र कश्चिदिन्द्रं प्रार्थयते—हे इन्द्र ! सपत्न्यो यथैकं पतिं सं तपन्ति=सम्यक् पीडयन्ति, तथा कूपभित्तयो मां सर्वतः पीडयन्तीत्यर्थः। 'जाया तप्यते कितवस्य हीना' (ऋ० १०, ३४, १०) इत्यत्र खिद्यत इत्यर्थः। मनु० (११, ८६) 'ब्रह्महत्याकृतं तापम्' इत्यत्र तप्-धातुः पापरूपसंतापार्थकः। भट्टि० (१, २३) 'क्रुध्यन् कुलं धक्ष्यति विप्रवह्निर्यास्यन् सुतस्तपस्यति मां समन्युम्' इत्यत्र तप्-धातुर्मनःसंतापार्थकः। महाभारते (१, ७८, ५) 'यश्च तप्तो न तपति दृढं सोऽर्थस्य भाजनम्' इत्यत्र यः पीडितः सन्नपि न पीडयतीत्यर्थः। 'अन्वेतारः कङ्कपत्राः शिताग्रास्तदा तप्स्यस्यर्जुनस्यानुयोगात्' (मभार० ८, ३९, १४) इत्यत्र पीडानुभवस्तप्-धातोरर्थः। एवमेव 'तदिमामापदं प्राप्य भृशं तप्यामहे वयम् (मभार० १, १६०, १३) इत्यत्र 'कामार्थः परिहीणोऽयं तप्येयं तेन पुत्रकाः' (मभार० १, ७५, ४०) इत्यत्र च संतापार्थको धातुः। मभार० (१३, १, १७) 'तपामि'=व्यथां प्राप्नोमीति नीलकण्ठः। 'न च तप्यति दान्तात्मा दृष्ट्वा परगतां श्रियम्' (मभार० ३, १५८, २३) इत्यादावीर्ष्यादिभावोऽपि दुःखरूप एव। हिन्दीभाषायां 'डाहना (<सं० दाहनम्)' इत्यस्यार्थस्तादृश एव।

३३–४. ऋ० (६, ५९, ८) 'इन्द्राग्नी तपन्ति माघा अर्यो अरातयः' इत्यत्र 'अघाः=आहन्त्र्यः, अर्यः=अभिगन्त्र्यः, अरातयः=शत्रुसेना मां तपन्ति=बाधन्ते' इत्यर्थः। निरुष्णाभिः शत्रुसेनाभिर्दाहनस्यासंभवेन सामर्थ्यात् तप्धातोर्बाधनार्थस्यौचित्यम्। एवमेव 'तपन्ति शत्रुं स्वर्ण भूमा महासेनासो अमेभिरेषाम्' (ऋ० ७, ३४, १९) इत्यत्र महासेना राजान एषां मरुतां देवानां वा बलैः शत्रुं तपन्ति=बाधन्त इत्यर्थः, महासेनाबलसामर्थ्यात्।

३३–५. दाहके वस्तुनि दीप्तिर्भवति। ऋ० (२, २४, ९) 'सूर्यस्तपति तप्यतुर्वृथा' इत्यत्र तप्यतुः=तापकः सूर्यो वृथा=अनायासेन तपति=दीप्यत इत्यर्थः। 'शमग्निरग्निभिः करच्छं नस्तपतु सूर्यः' (ऋ० ८, १८, ९) इत्यत्र 'अग्निः=देवः शं करत्=अस्माकं रोगशान्ति सुखं वा करोतु। सूर्यः=सर्वस्य प्रेरक आदित्यश्च नः=अस्माकं सुखं यथा भवति तथा तपतु=प्रदीप्यताम्' इत्यर्थः। शान्तिपूर्वकं तपनं नाम प्रकाशः। 'स्वतेजसा विश्वमिदं तपन्तम्' इति गीतायाः (११, १९) व्याख्यायां नीलकण्ठ आह 'प्रकाशयन्तम्' इति। 'सूर्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रा' (रघु० ५, १३) इत्यत्र 'प्रकाशमाने' इति मल्लिनाथः, तमिस्रेति दर्शनात्। 'रविस्तप्स्यति निश्शङ्कं वास्यत्यनियतं मरुत्' (भट्टि० १६, ६) इत्यत्र 'द्योतिष्यते' इति जयमङ्गलः, सूर्ये प्रकाशनस्य स्वाभाविकव्यापारात्। हरिवंशपुराणे (१, ४४, २२) 'उदयास्तमयं चक्रे मेरुपर्यन्तगामिना। त्रिदिवद्वारचक्रेण तपता लोकमव्ययम्' इत्यत्र तपता=दीपयता रथेन 'चचार' इत्यग्रेणान्वयः। 'सहस्ररश्मियुक्तेन भ्राजमानः स्वतेजसा' इत्यग्रिमे श्लोकेऽपि भ्राजमानत्वं तस्य प्रस्फोरितम्।

३३–६. अग्नेरर्चिषस्तापेन संस्कारः=पाको जायत इति तादृशोऽर्थोऽपि दृश्यत ऋग्वेदे (१०, १६, ४) 'अजो भागस्तपसा तं तपस्व तं ते शोचिस्तपतु तं ते अर्चिः' इत्यत्र तपःशोचिरर्चिःशब्दानां संतापतारतम्येन भेदः। अयमर्थः—हे अग्ने! त्वदीयेन तपसा=तापनेन तं तादृशं भागं तपस्व=तप्तं कुरु (इह तपसा संस्कारो भवितुं नार्हति), तथा ते=तव शोचिः=शोकहेतुर्ज्वालाविशेषस्तं भागं तपतु=संस्करोतु ते=तव, अर्चिः=भासको ज्वालाविशेषस्तं भागं तपतु=संस्करोतु' इति।

३३–७. ऋग्वेदे (८, ८७, ७) संतापार्थकस्य √तप्धातोर्वास्तवोऽर्थविस्तारः परिलक्ष्यते। स च तादृश एव यादृशः कुक्कुट्या संताप्यमानमण्डं तीक्ष्णीभवति, ततश्च वर्द्धते निर्गत्य पोतः। अण्डानामुपरि शयनेन संताप एव। 'धर्मं न सामन्तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत्' इत्यृग्वेदे 'हे स्तोतारः! सुवृक्तिभिः=शोभनाभिः स्तुतिभिः, तपत=इन्द्रं तीक्ष्णीकुरुत' इत्यर्थः। लोकेऽपि तोष्टूय्यमानो धनिक उदारो दानार्थं तीक्ष्णीभवतीति स्तुतिरूपतापस्तीक्ष्णीकरणे हेतुः। वस्तुतस्त्विह 'इन्द्रं स्तुतिभिरैश्वर्यसमन्वितं कुरु' इति √तप्धातोरैश्वर्यमर्थः। क्षीरस्वाम्यप्याह—'वाग्रहणादैश्वर्येऽपि भ्वादिरित्येके' इति। सायणस्त्वेनमर्थमजानान आह—'इन्द्रं स्तुतिभिः प्रवर्धयतेत्यर्थः' इति। यद्यपि प्रवर्द्धनरूपोऽर्थ ऐश्वर्यार्थस्य नेदीयस्त्वं बोधयति, तथापि भौवादिकस्य √तप्धातोरैश्वर्यार्थेऽदर्शनात् तादृशार्थस्याकृतत्वात्। धातुवृत्तावपि सायणो न स्मरति भौवादिके √तप्धातावैश्वर्यरूपमर्थम्।

३३–८. मनु० (२,१६७) 'आहैव स नखाग्रेभ्यः परमं तप्यते तपः' इत्यत्र, 'वेदमेव सदाभ्यस्येत् तपस्तप्स्यन् द्विजोत्तमः' (मनु० २, १६६) इत्यत्र च तप्धातुराचरणार्थकः, तप इति कर्मणा धात्वर्थस्योक्तत्वाद् धातोस्तादृशार्थात्। पाणिनिरप्यसूत्रयत्—'तपस्तपःकर्मकस्यैव' (३,१,८८) इति। काशिकाकारेणेह 'तप्यते तपस्तापसः'

इत्युदाहृतवता 'तपोऽर्जयतीत्यर्थः' इत्यर्जनमर्थो विहितः । वस्तुतस्तु स तपश्चरतीत्यस्यैव तात्पर्यार्थः । एवमेव 'तपस्तप्यामहे' (अ० वे० ७,६१,२), 'तपस्तेपे सुतस्यार्थे सभार्यः कुरुनन्दनः' (मभार० १,९७,१७),

सा कन्या तु महाराज प्रविश्याश्रममण्डलम् ।
यमुनातीरमाश्रित्य तपस्तेपेऽतिमानुषम् ॥

इति महाभारते (५,१८७,१९) च तपश्चरणरूपोऽर्थः ।

३३–९. भट्टि० (८,१३)—

ये सूर्यमुपतिष्ठन्ते मन्त्रैः सन्ध्यात्रयं द्विजाः ।
रक्षोभिस्तापितास्तेऽपि सिद्धिं ध्यायन्ति तेऽधुना ॥

इत्यत्र सन्ध्यात्रयानुष्ठानविघात उपद्रवसूचक इति तप् धातुरुपद्रवार्थकस्तदाह जयमङ्गलः—'तापिताः=उपद्रुताः' इति ।

३३–१०. महाभारते (१३, १०, १३) 'अथास्य बुद्धिरभवत् तपस्ये भरतर्षभ' इत्यत्र 'तपः करिष्यते' इति नीलकण्ठः । आख्यातचन्द्रिकायामपि 'तप्यते तपः कृतौ' इति भट्टमल्लः । प्राकृतभाषायामस्मिन्नर्थे सकर्मकोऽयं धातुः प्रयुज्यते । औष्ण्यादौ त्वकर्मकः ।

३३–११. वाल्मीकीयरामायणे (१,२९,१२)—

व्रतं समाप्य वरदं तुष्टाव मधुसूदनम् ।
तपोमयं तपोराशिं तपोमूर्तिं तपात्मकम् ॥

इत्यत्र तिलकटीकायाम्—'घञर्थे कविधानम्' इति कप्रत्यये तपनम्—तपः = ज्ञानम्, तप आलोचने इति धात्वनुसाराद् इति, तन्न, आलोचनार्थकस्य तपधातोः क्वाप्यसत्त्वात्[1] । तपसा ज्ञानं जायत इत्ययमर्थ आरोपित उत्तरवर्ती ।

३३–१२. भारोपीयभाषाया मूलध्वनिः 'तप्' इत्यौष्ण्यार्थकः । अवेस्ताभाषायां तापइति (=तपति) इति । संविधाने तु—तापयेइति (< सं० तापयति) इति । पकारस्य महाप्राणत्वेन विकसितः फकारवर्णोऽपि तत्र विलोक्यते—तफ्सत् (< तप्सत्) इति—अवे०, यस्न ९,११ । सत्तायां वर्द्धने प्रापणे च 'तफ्सैति' इति प्रयोगः (तुल० पारसी०—'तफ्सीदन') इति । सर्बियन्भाषायां द्रवार्थकं मार्दवार्थकं वा 'ताँपिति' इति क्रियारूपमधिगम्यते । उष्णतायां पाके सति मार्दवं स्वाभाविकम् । कुरुवर्षीयभाषायां 'ताँपित' इति, इँग्लिश्भाषायां च 'टैपिड' इति कदौष्ण्ये प्रयोगः ।

एवं तावद् द्वादशार्थाः √तप्धातोः परीक्षिता इह—१. औष्ण्यम्, २. दाहः, ३. संतापः (दुःखम्), ४. बाधनम्, ५. दीप्तिः, ६. संस्कारः (पाकः), ७. तीक्ष्णीभावः

---

१. हरिवंशपुराणस्य (३,२४,४) व्याख्यायां नीलकण्ठोऽप्याह 'तप आलोचने' इति । अतोऽयमर्थस्तदानीन्तने कस्मिंश्चिद् धातुपाठेऽभूदिति ज्ञायते ।

(ऐश्वर्यम्), ८. आचरणम् (अर्जनम्)। ९. उपद्रवः, १०. तपःकृति, ११. ज्ञानम्, १२. सत्ता, वर्द्धनम्, प्रापणम्, मार्दवं चेति।

३४ §√तॄ १/९५४ प्लवनतरणयोः (प)। वोपदेवस्तु—'तारेऽभिभवे प्लुत्याम्' इत्येकमर्थमधिकमाह। चुरादौ कर्मसमाप्त्यर्थकः √तीर धातुरेनमेवाभिसंबध्नाति। प्रतिष्ठार्थकस्य √तलू-धातोरप्यनेन सह संबन्धः।

३४–१. ऋ० (६, १०६, ९) 'बृहन्तेव गम्भीरेषु प्रतिष्ठां पादेव गाधं तरते विदाथः' इत्यत्र 'गम्भीरेषु गहनेषु जलेषु तरते=तरतः पुरुषस्य पादौ यथा गाधं जलं जानीथः' इत्यर्थेन जले गमनं नाम तरणम्। 'तदव्यथी जरिमाणं तरन्ति' (ऋ० १०, २७, २१) इत्यत्र स्तोतारो मरुदादयस्तत्=तादृशमुदकं तरन्तीत्यर्थः।

३४–२. ऋ० (७, ३३, ३) 'एवेन्नु कं सिन्धुमेभिस्ततार' इत्यत्र प्लवनरूपोऽर्थः। 'न विण्मूत्रमुदीक्षेत न बाहुभ्यां नदीं तरेत्' इति मनुस्मृतौ (४, ७७) बाहुभ्यां नद्या उत्तरणं दर्शितम्। तत्रैव (४, १९४) 'यथा प्लवेनौपलेन निमज्जत्युदके तरन्' इत्यत्र प्लवस्यापि जलस्योपरि तरणेनोत्तरणमभिप्रेतम्। भट्टि० (१४, २७)—

संबभूवुः कबन्धानि प्रोहुः शोणिततोयगाः।
तेरुर्भटास्यपद्मानि ध्वजैः फेणैरिवाबभे॥

इत्यत्र भटानां योधानां मुखपद्मान्यत्र नद्यां तेरुः=प्लवन्ते स्मेत्यर्थः।

३४–३. 'आदाय च न शक्नोमि पुत्रांस्तरितुमात्मना' इति महाभारते (१, २२९, ६) तॄधातोर्लङ्घनमर्थः, वनं तरितुम्=लङ्घितुं न शक्नोमीति सामर्थ्यात्। अत्र बेनफाइमहोदयो रक्षणमर्थं कुर्वाणो बाढं प्रत्याख्यातः।

३४–४. उत्पूर्वकस्य तॄधातोरर्थं उत्तरणम्—उद्गम्य, उत्थाय वा तरणं नामातिक्रमणम्। इहोद्वुत्सर्गमन्तरैव तॄधातोरुत्तरणरूपोऽर्थो दृश्यते। ऋ० (३, ४९, २) 'यं नु नकिः पृतनासु स्वराजं द्विता तरति नृतमं हरिष्ठाम्' इत्यत्र 'यम्=इन्द्रम्, नकिः= न कश्चिदपि, तरति=उत्तीर्य गच्छतीति शब्दार्थः। वस्तुतस्त्वतिक्रमणरूपोऽर्थो विज्ञेयः। 'ऊती ष बृहतो दिवो द्विषो अंहो न तरति' इत्यृग्वेदे (६, २, ४) द्विषः= द्वेष्टॄन् तरति=अतिक्रामतीत्यर्थः। एवमेव 'ईजानस्तरति द्विषः' (ऋ० ७, ५९, २) इत्यत्रापि सोऽर्थः, द्वेष्टृपदसमभिव्याहारात्।

एको ह्यहमयोध्यां च पृथिवीं चापि लक्ष्मण।
तरेयमिषुभिः क्रुद्धो ननु वीर्यमकारणम्॥

इति (वा० रा० २, ५३, २५) रामोक्तिः। निरस्तारातिकां कर्तुं शक्नोमीति तदर्थः। 'मायामेतां तरन्ति ते' इति गीतायाम् (७, १४) 'अतिक्रामन्ति' इति शाङ्कर-भाष्यम्। 'मत्प्रसादात् तरिष्यसि' इत्यत्रापि (गी० १८, ५८) 'अतिक्रमिष्यसि' इति शाङ्करभाष्यम्। इह सर्वत्राभिभवाधिकरणरूपोऽर्थः। स च जयरूपः। 'तरद्द्वेषाः

सासहि' इत्यृग्वेदे (१, १००, ३) द्वेषांसि=शत्रूंस्तरन्=जितशत्रुक इत्यर्थः। हरिवंश-पुराणे (३, १९, ४०)—

प्रसादं काङ्क्षमाणाश्च योगस्यान्तरविघ्नतः।
बहुप्रकारं कथयन्नृत्यन्ति च तरन्ति च॥

इत्यत्र योगिनस्तरणेन तस्य जयोऽभिप्रेयते। योगिनं जयन्ति चेत्यर्थं इति नीलकण्ठः। छान्दोग्योपनिषदादौ (७, १, ३) 'तरति शोकमात्मवित्' इत्यत्रामूर्त-भावस्यापि तरणं नाम विजयः कथितः।

३४–५. तरणेन=अतिक्रमणेनाभिभवस्तिरस्कारो बाधश्च भवन्ति। ऋ० (७, १, ५) 'न यं यावा तरति यातुमावान्' इत्यत्र 'यातुमावान्=हिंसायुक्तो यावा=अभि-गन्ता शत्रुः, न तरति=न बाधते' इत्यर्थः। हिंसायुक्तस्य शत्रोर्दर्शनाद् बाधनरूपोऽर्थो न त्वभिभवादिरूपः।

३४–६. ऋ० (९, ११०, १) द्विषस्तरध्या ऋणया न ईयसे' इत्यत्र नः=अस्मा-कम्, ऋणयाः=ऋणानां यापयिता=विनाशयिता त्वं द्विषः=शत्रून्, तरध्यै=तरीतुं हन्तुम्, ईयसे=परिगच्छसीत्यर्थं इति √तॄधातुर्हननार्थकः, ऋणविनाशवद् शत्रु-विनाशकरूपार्थस्योज्जृम्भणात्।

३४–७. ऋ० (७, ३२, १३) 'पूर्वीश्चन प्रसितयस्तरन्ति तं य इन्द्रे कर्मणा भुवत्' इत्यत्र 'यो जनः, इन्द्रे=इन्द्रस्य चित्ते भुवत्=भवेत्, तं जनं पूर्वीः=बह्व्यः प्रसि-तयः=पाशादीनि बन्धनानि, चन=न, तरन्ति=व्याप्नुवन्ति' इत्यर्थः।

३४–८. 'द्रक्ष्यामि च पुनस्त्वां तु तीर्णवन्तं पितुर्वचः' इति वा० रा० (२, २५, ४४) दशरथस्य पितुर्वचस्तीर्णवन्तं त्वां राममहं पुनर्द्रक्ष्यामीत्यन्वयः। इह प्रसङ्गात् पितुर्वचसस्तरणं नाम पूरणं परिपालनं वाऽभिप्रेतम्। पितुर्वचः परिपालितवन्तं त्वां पुनर्द्रक्ष्यामीति तदर्थः। वा० रा० (१, ६८, १०) प्रतिज्ञां तर्तुमिच्छामि तदनुज्ञातु-मर्हसि' इति जनकस्य वचनम्। इह तिलकटीकाकारेण तर्तुम्=पूरयितुमिति व्याख्यायि। एवमेव 'शापमेव तरिष्यामि' (कथास० २,२२), ततार विद्याः (रघु० ३, ३०) इत्यादौ पूरणरूपोऽर्थः समाश्रोतव्यः।

३४–९. ऋ० (९, ५८, १) 'तरत्स मन्दी धावति धारा सुतस्यान्धसः' इत्यत्र तरत्=स्तोतॄन् पाप्मनः सकाशात् तारयन्=रक्षन्नित्यर्थः। महाभारते (१४,३,४)—

तपोभिः क्रतुभिश्चैव दानेन न युधिष्ठिर।
तरन्ति नित्यं पुरुषा ये स्म पापानि कुर्वते॥

इत्यत्र ये पापानि कुर्वते ते तरन्ति=रक्षिता भवन्तीत्यर्थः। तत्रैव (५, ३८, २५) णिजन्तः प्रयोगो हृदयावर्जकः—'ज्ञातयस्तारयन्तीह ज्ञातयो मज्जयन्ति च' इति। सुश्रुते (१, १२३, १३)—

वैद्यस्तु गुणवानेकस्तारयेदातुरान् सदा।
प्लवं प्रतितरैर्हीनं कर्णधार इवाम्भसि॥

इत्यादौ रक्षणमर्थस्तॄधातोः।

३४–१०. मनु० (११, ३४)—

क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः।
धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमः॥

इत्यत्र √तॄधातोर्निस्ताररूपोऽर्थ इति 'निस्' इत्युपसर्गपूर्वकस्यार्थो विना तेन भवति।

३४–११. महाभारते (१२, १९३, ४)—

शौचमावश्यकं कृत्वा देवतानां च तर्पणम्।
धर्ममाहुर्मनुष्याणामुपस्पृश्य नदीं तरेत्॥

इत्यत्र √तॄधातोरवगाहनमर्थः। जलाशयादिवाचकस्य तीर्थशब्दस्यापि तथार्थो विज्ञेयः। वस्तुतस्तु तस्य जलदानादिरूपेण रक्षणादयोऽनेकेऽर्थाः संभवन्ति। बृहत्-संहितायाम् (८१,१४)-'(वज्रम्)लघ्वम्भसि तरति' इत्यत्राप्यवगाहनं नाम मज्जनमर्थः।

३४–१२. यशस्तिलकचम्पूकाव्ये (१ आ० ७६ श्लोकात् पूर्वम्, ११२ पृ०) 'इन्द्रियग्राममतियत्नेनापि संरक्षितुं न तरति पुरश्चारी लोकः' इति गद्यांशे तॄधातुः सामर्थ्यार्थिकः। इन्द्रियग्रामं संरक्षितुं न तरति—न शक्नोतीत्यर्थः। टीकाकारः श्रुत-सागरसूरिरप्यत्रानुकूलः, अन्यस्यार्थस्यानुपपत्तेः। यद्यपि वा० रा० (२, ५३, २५) तिलकटीकायां 'तरेयम्' इत्यस्य 'निरस्तारातिकां कर्तुं शक्तः' इत्यर्थे सामर्थ्यस्य ध्वनिः, तथापि स्पष्टतैव जैनसंस्कृतग्रन्थे दृश्यते तादृशस्यार्थस्येति।

३४–१३. प्राकृतभाषायां √तर्धातुर्नीरोगतार्थः कुशलार्थको वा—तरइ (पिंड ४१७)। एषोऽर्थोऽन्यत्र सुदुर्लभः। वस्तुतस्तु 'रोगांस्तरति' इत्येतादृशे प्रयोगे सोऽर्थो द्रष्टुं शक्यः। एवं तत्तत्पदसमभिव्याहारेणानन्ता अर्था जायन्ते धातूनाम्। अत एव 'सर्वे सर्वार्थवाचकाः' इत्युद्घोषो वैयाकरणानाम्।

एवं तावत् त्रयोदशार्थाः परीक्षितास्तॄधातोः—१. तरणम्, २. प्लवनम्, ३. लङ्घनम्, ४. अभिभवः (अधिकरणम्, जयः), ५. बाधनम्, ६. हननम्, ७. व्यापनम्, ८. पूरणम् (परिपालनम्), ९. रक्षणम्, १०. निस्तारः, ११. अवगाहनम् (मज्जनम्), १२. सामर्थ्यम्, १३. नीरोगता (कुशलम्) चेति।

एतानर्थानतिरिच्यापि बहवोऽर्था दृश्यन्ते तॄधातोः। यथा—१. अभिलाषः (तूर्यः, तर्षः), २. द्युतिः (तारा, तारः, तरुणो), ३. अभिषवः (तलुनी=सुरा), ४. रोहणम् (तरुः, तालुः), ५. वेगः (तरस्) ६. वीचिः (तरङ्गः), ७. अलङ्कारः (तिरीटम्) इति। ऋग्वेदे प्रयुक्तस्तिरधातुरपि संबद्धः। तस्य तत्र वर्धने प्रयोगाः।

वस्तुतस्तु प्रकृतो धातुः परपारगमनार्थे मुख्यतोऽवगन्तव्यः प्रयुक्तः। अन्येऽर्था लक्षणादिद्वारा परतो विकसिताः। तरणे स्थूलतः क्रियाद्वयमन्तर्भूतम्। एका क्रिया

जलस्योपरिभागे भवति, द्वितीया च जलस्यान्तः। लोके 'डुबकी साधकर नदी पार करना' इति कथ्यते। प्रथमक्रियया नद्याः (लक्षणया वान्यस्य) जायतेऽतिक्रमणम्। द्वितीयक्रियया चावगाहनं लक्ष्यते। एवमेव तरणक्रियाया अङ्गरूपा प्लवक्रियाऽपि। जलस्थलोभयचारी मण्डूकोऽस्याः क्रियाया विशेषज्ञः। शरीराङ्गानां जलस्यान्तर-प्रवेशपूर्वकमुत्प्लुत्योत्प्लुत्य स जलपृष्ठभागे पलायितुं शक्नोति; अवगाहनपूर्वकं जलाशयमुत्तरीतुं पारयते। मण्डूकः, सूर्यः, कपिर्नौकेत्यादयः प्लवशब्दवाच्याः। √तॄधातोः प्लवनार्थस्तु नौकावाचकेन तरणिशब्देन संबध्यते। तरिरप्यस्या नामधेयम्। तरणिः=सूर्योऽपि।

अर्थविकासः शब्दस्वरूपात् परवर्तीति निश्चितम्। √तॄधातोः प्रक्रमः कस्मात् कथं वाजनीति विचिकित्सितम्। अस्य तिस्र आकृतयो दृश्यन्ते—१. तर्, २. तिर् (तीर्), ३. तुर् (तूर्) इति। १. तारा, तारका, तरणिः (=सूर्यः), तरिः (नौः), तरुः (=वृक्षः), तरुणः, २. तिर्यंच् (तिर्यञ्च्>लैटि०-ट्रांस्), तिरस्, तिरीटम् (=शिरोऽ-लङ्कारः), तीरम् (=तटम्), ३. तूर्यः (=अभिलाषः, वाद्यविशेषः) इत्युदाहरणानि। रलयोरनेकाः संक्रान्तय इहोपलभ्यन्ते—तलुनी [=सुधा (सुरा)], तालुस्तलमित्यादौ। √तल्धातुस्तु नूनं (√तॄ>तर्>√तल्) तॄधातोर्विकासरूपः।

सम्प्रति समुदेति प्रश्नः कस्य नाम्न इयं प्रथमा क्रिया तरणरूपा ? अपि नामेयं सूर्यवाचकतरणिनाम्नामाधारेण नक्षत्रवाचकताराद्याधारेण वा प्रकटिता ? विहायसा चरणात् खगा अपि तरणय उडवश्च, जले तरणेन च नौरपि तरणि-रुडुश्च।

कापि क्रिया न भवति स्वतन्त्रा। नामाधृत्य भवति प्रस्फुरणं तस्या इति सिध्यति नाम्नां सत्ता प्राक्तनी क्रियाणां च परवर्तिनी। यद्यपि नायं सिद्धान्तो निष्कल्मषः, क्वचन क्रियाणामाधारेण नाम्नां कल्पनात्, तथापि सूर्यनक्षत्रवाचक-तरणितारादिषु गमनाऽऽरोहणदीपनार्था दृश्यन्त इति तॄधातोः क्रमशस्तरणार्थकत्वम्। अन्तरिक्षलोके मरुदादिद्वारा तादृशजलस्य तरणमृग्वेदे (१०, २७, ११) द्रष्टव्यम्।

भारोपीयभाषाया मूलध्वनिः—√*तेर्, तेर–, √*तॄ–, तेरु' इति; तदर्थः पारगमनमिति। लैटि० – तेर्मो = सीमाचिह्नम्, हित्ताइत् तर्म = (पटकुटी) शङ्कुः। हिन्दीभाषायां त्रयो ध्वनयः पृथगर्थकाः—१. √तरना=पारगमनम्, २. √तिरना= जलस्योपरिभागे पादादिचालनं विना तरणम्, तरणम्, पारगमनं च। ३. √तैरना = जले पादादिचालनपूर्वकं चरणम् इति।

३५. § √दा (डुदाञ्) ३/९ दाने (उ)। तुलनीयो भौवादिको ददधातुः, धारण-पोषणार्थकश्च √धा (डुधाञ्) धातुः। दानार्थको दाण्धातुरेतस्यैव रूपमार्धधातुके।

३५–१. ऋग्वेदे (६, २४, २) 'वाजी स्तुतो विदथे दाति वाजम्', 'अस्मभ्यं दद्धि पुरुहूत रायः' (ऋ० ४, २०, ७) इत्यादौ च दानार्थको दाधातुः। ऋग्वेदे सर्वत्रायमस्मिन्नेवार्थे लभ्यतेऽपरिवर्तनार्थः।

३५–२. अस्य धातोर्द्वित्वेन सम्पन्नस्य ददधातोर्धारणरूपोऽर्थो लभ्यत ऋग्वेदे (१, ४१, ९) 'चतुरश्चिद् ददमानाद् बिभीयादा निधातोः' इत्यत्र 'चतुरः=चतुःसंख्याकान् कपर्दकान् ददमानाद्=ददतो हस्ते धारयतः पुरुषात्' इति। ऋ० (३,५३,१७)—

स्थिरौ गावौ भवतां वीळुरक्षो मेषा वि वर्हि मा युगं वि शारि।
इन्द्रः पातल्ये ददतां शरीतोररिष्टनेमे अभि नः सचस्व॥

इत्यनयर्चया राज्ञः सुदासो यज्ञेऽवभृथं कृत्वा यज्ञशालातो निर्गन्तुमिच्छन् रथेऽश्वादिकं युञ्जानो विश्वामित्रो रथाङ्गानि स्तौति—अक्षश्च वीळुः=दृढो भवतु, ईषा=दण्डश्च मा वि वर्हि=विनष्टो मा भवतु। युगं च मा वि शारि=विशीर्णं मा भवतु। पातल्ये=पतनशीले कीलके शरीतोः=विशरणात् प्राक् 'ददताम्=धारयतु' इति धारणमर्थः, कीलकयोर्दानं नाम स्थापनं ततश्च धारणम्। एवमेव (ऋ० ७, ३३, ११) 'द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वे देवाः पुष्करे त्वाददन्त' इत्यत्रापि उर्वशीसकाशाज्जातं त्वां विश्वे देवाः पुष्करेऽधारयन्तेत्यर्थः। (ऋ० ४, २६, ६) 'ऋजीपी श्येनो ददमानो अंशुं परावतः शकुनो मन्द्रं मदम्' इत्यत्र 'श्येनः पक्षी सोमं ददमानः=धारयन्' इत्यर्थः। वस्तुत इह आङ्पूर्वकस्य धातोरर्थ इवार्थ इत्यादानं नाम धारणम्।

३५–३. प्रपूर्वकस्य दाधातोरर्थः प्रदानम् इति। स च मनु० (८, ४७) 'दापयेद् धनिकस्यार्थम्' इत्यत्र दृश्यते, धनस्वामिना राज्ञो बोधित्वात् प्रकर्षोऽर्थस्तत्र ज्ञेयः।

३५–४. प्रतिपूर्वकस्य दाधातोः प्रत्यर्पणमर्थः। स च तस्य निरुपसर्गस्यापि दृश्यते हरिवंशपुराणे (१, २५, ३७) 'ददावङ्गिरसे तारां स्वयमेव पितामहः'—'ददौ=प्रत्यर्पयत्' इति नीलकण्ठः। आदानस्य परावर्तनं नाम प्रतिदानम्। मनु० (८,२२२)—

क्रीत्वा विक्रीय वा किञ्चिद् यस्येहानुशयो भवेत्।
सोऽन्तर्दशाहात् तद् द्रव्यं दद्याच्चैवाददीत च॥

इत्यत्रापि दाधातोः प्रत्यर्पणमर्थः, गृहीतद्रव्यस्यान्तर्दशाहात् पुनर्दानात् प्रतिदानस्यार्थात्। याज्ञ० (२, २६९) 'दापयित्वा हृतं द्रव्यं चौरदण्डेन दण्डयेत्' इत्यत्रापि प्रत्यर्पणमर्थः।

इदानीं तावदुपपदसमभिव्याहारप्रभावेण परिवर्तितानामर्थानामिहोपन्यासः क्रियते—

३५–५. 'इह भूम्यां मलं दत्त्वा' इति वा० रा० (१, २४, २०) भूमौ मलस्य दानं नाम त्यागः, सामर्थ्यात्। इह भूमिपदसमभिव्याहारात् तादृशोऽर्थो बुध्यते। मनु०

(८, २७५) 'आक्षारयञ्छतं दाप्यः पन्थानं वाददद् गुरोः' इत्यत्र 'अददद्=अत्यजन्' इति कुल्लूकभट्टः।

३५-६. 'असूयकाय मां मा दास्तथा स्यां वीर्यवत्तमा' इति मनु० (२, ११५) असूयकं प्रति विद्याया दानं नामाध्यापनं वदनं वार्थः, विद्यापदसन्निधानात्। 'दाः= वदेः' इति कुल्लूकभट्टः। पुस्तकोत्थापनपूर्वकं तस्या दानं नैव सम्भवति। दाता प्रवचनद्वारा ददाति विद्याम्, ग्रहीता च श्रवणद्वारा समाददातीति विद्याकर्मक-दाधातोरर्थः कथनं प्रवचनमध्यापनं वेति। 'ब्रह्मसूत्रपदां वाणीं दापयन्तं मुनीश्वरम्' (हरिवं० ३, ११८, १५) इत्यत्र शिष्येभ्यः पाठयितुमनुज्ञां प्रयच्छन्तम्' इति नीलकण्ठः।

३५-७. 'न चादत्त्वा कनिष्ठेभ्यः' इति मनु० (९, २१४) दानेन सहानुजानां सम्बन्धोऽनाधिकारिकत्वेन पुण्यदृष्ट्या वा क्रियमाणस्य दानस्य प्रत्याख्यानं करोति। अनुजानां तु तस्मिन् धने वैधानिकोऽधिकारः। स त्वानुक्रमतः कल्पितः। ज्येष्ठताक्रमेण प्राप्तत्वादनुक्रमतः कल्पनं नामेति तद् दानं विशुद्धं दानमसदनुकल्पनात्मकं जातम्। एवं दृशा दाधातुरनुकल्पनार्थकः।

३५-८. 'त्रिषु देशेषु ददतुः शिविरस्य हुताशनम्' इति महाभारते (१०, ८, ११०) शिविरस्य त्रिषु देशेष्वग्निदानं नामाग्नियोजनम्। अग्नियोजनं नाम दाहः। 'भार्यायै पूर्वमारिण्यै दत्त्वाग्नीनन्त्यकर्मणि' इति मनु० (५, १६८) दाहस्तु तात्पर्यार्थः। 'तं लेपं कुड्येषु दापय' इति महाभारते (१, ५७, २४) इत्यत्रापि योजन-मर्थोऽभ्युपगन्तव्यः।

३५-९. 'गवां शतसहस्रेण दीयतां शबला मम' इति वा० रा० (१, ५३, ९) विश्वामित्रोक्तिः। गवां शतसहस्रमूल्येन शबला-दानं नाम विनिमयरूपो विक्रयः। इह शतसहस्रगोमूल्यसंनिधानेन तादृशोऽर्थो जायते।

३५-१०. महाभारते (१, १७१, ११)—

संप्राप्तयौवनां पश्यन् देयां दुहितरं तु माम्।
नोपलेभे ततः शान्तिं सम्प्रदानं विचिन्तयन्॥

इत्यत्र संप्राप्तयौवनाया दुहितुर्दर्शनपूर्वकं दानं नाम विवाहः, तादृश्या दानेन भारतीयपरम्परायां तादृशार्थादिति दाधातोरुपयमनमर्थः।

३५-११. मनु० (८, २३४)—

कर्णौ चर्म च बालांश्च वस्तिं स्नायुं च रोचनाम्।
पशुषु स्वामिनां दद्यान्मृतेष्वङ्गानि दर्शयेत्॥

इत्यत्र मृतपशूनां कर्णचर्मबालवस्तिस्नायुरोचना-दानं तत्स्वामिनां कृते न युज्यते। स मृतपशुचर्मोत्पाटकः स्वयमगृहीत्वा स्वामिनां कृते मोचयेदिति तदर्थः। एवं खल्विह मोचनरूपोऽर्थो दाधातोः। यद्यपि त्यागरूपेणार्थेनास्य विवरणं युक्तम्, तथापि सूक्ष्मभेदप्रदर्शनार्थमिहोपन्यासः।

३५–१२. हरिवंशपुराणे (३, ११५, ३७)—

करदः कृष्ण इत्येव ब्रुवन्तः सर्वसात्त्वताः ।
हासं मुमुचुरत्यर्थं तलं दत्त्वा परस्परम् ॥

इत्यत्र तलस्य दानं नामाऽऽस्फोटनम्, सामर्थ्यात् । एवमेव 'ततः प्रहसिताः सर्वे तेऽन्योऽन्यस्य तलान् ददुः' इति महाभार० (३, २३७, २४), 'नृत्याव सहितावावां दत्ततालाननेकशः' इति च महाभार० (१, १५२, १३) सङ्गीतसमयमात्रानुसारेणाऽऽस्फोटनमर्थो ज्ञेयः ।

३५–१३. 'दद्यात् पिण्डं धनं हरेत्' इति मनु० (९, १३६) पिण्डस्य दानं नामोपहरणम् ।

३५–१४. 'तस्य दत्त्वार्गलं ताभिः स्नानव्याजात् प्रवेश्य सः' इति कथास० (४, ६०) अर्गलदानं नाम स्कम्भनम्, सामर्थ्यात् । अत एव विष्कम्भशब्दोऽपि तद्वाचको दृश्यते ।

३५–१५. महाभारते (१, ३४, ९)—

किञ्चित् कारणमुद्दिश्य सोमोऽयं नीयते मया ।
न दास्यामि समादातुं सोमं कस्मैचिदप्यहम् ॥

इति गरुडोक्तिः । इह 'अहं कस्मैचिदपि सोमं समादातुं न दास्यामि' इति वाक्ये 'दास्यामि' इत्यस्यार्थः 'अनुज्ञास्यामि', 'अनुमोदिष्ये', 'अनुमंस्ये' इति । एषोऽर्थोऽनुपूर्वकस्य दाधातोर्भवति—ऋ० (१, १९०, ५) 'न दूढ्ये अनु ददाति वामम्' इत्यत्र वामम् = धनम्, अनुकूलं न वितरसि इति सायणः । एवमेवान्यान्यप्युदाहरणान्यृग्वेदे (१, ६१, १५; २, २०, ८; ६, २५, ८; ६, २०, ११) द्रष्टव्यानि । एवं खलु सोपसर्गस्य दाधातोरर्थो निरुपसर्गेणापि तेन प्रकटीक्रियते ।

३५–१६. 'सौमित्रे योऽहमम्बाया दद्मि शोकमनन्तकम्' इति वा० रा० (२, ५३, २१) दाधातुरुत्पादनार्थः, शोकस्याविर्भाव्यमानत्वात् ।

३५–१७. पञ्चतन्त्रे (२, १४८)—

यः स्तोकेनापि सन्तोषं कुरुते मन्दधीर्जनः ।
तस्य भाग्यविहीनस्य दत्ता श्रीरपि माज्र्यते ॥

इत्यत्र दाधातुः संचयार्थकः, 'भाग्यविहीनस्य तस्य संचिता लक्ष्मीरपि नश्यति' इत्यर्थसामर्थ्यात् । वस्तुत इह आङ्पूर्वकस्य दाधातोरादानं प्रापणं वेत्यर्थं निरुपसर्गो धातुराविष्करोति । एवं 'प्राप्ता लक्ष्मीरपि नश्यति' इत्यर्थस्यौचित्यम् ।

३५–१८. 'अधिकरणकमस्तके हस्तं दत्त्वा' इति मृच्छकटिके दाधातुः स्थापनार्थकः, सामर्थ्यात् । एवमेव मनु० (३, २२३) 'तेषां दत्त्वा तु हस्तेषु सपवित्रं तिलोदकम्' इत्यत्र, 'तच्छीघ्रमर्धचन्द्रोऽस्य गलेऽस्मिन् दीयताम्' इत्यत्र 'मूर्ध्नि मूर्धाभिषिक्तस्य ददति स्म विधानतः' इत्यत्र च दाधातुः स्थापनार्थकः ।

३५–१९. 'ददौ दानान्यनेकशः' इत्यत्र महाभारते (१४, ६१, ३७) दाधातोः करणरूपोऽर्थः, दानपदेनैव दाधातोरुक्तत्वात् ।

३५–२०. 'प्रेमदत्तवदनानिलः पिबन्' इति रघु० (१९, ३५) प्रेम्णा प्रवर्तितं मुखवायुं पिबन्निति दाधातोः प्रवर्तनरूपोऽर्थः सामर्थ्यात् ।

३५–२१. एवमेवाऽन्येऽप्यर्था विज्ञेयाः। इह केचन संक्षेपेण निर्दिश्यन्ते— १. 'वीरं जातमात्रस्य ददुः' इत्यत्र सामर्थ्यात् पाययामासुरित्यर्थो दाधातोः । २. 'कथमस्य स्तनं दास्ये मातृभावेन जानती' इति हरिवं० (२, १०४, १२) स्तनपदसमभिव्याहारेण सामर्थ्याच्चूषणमर्थः । ३. 'सेचनघटैर्बालपादपेभ्यः पयो दातुम्' इत्यत्र पादपपदसंनिधानेन सामर्थ्यात् सेवनमर्थो दाधातोः । 'देवदत्तः' इत्यस्य 'देवेन रक्षितः' इत्यर्थः (द्र० त्रिकाण्ड० ३, ३, १६०), दत्तम्=अर्चनम् इति मेदिनी० ते २३ ।

एवं तावदिह संक्षेपतो द्वाविंशतिरर्था विचारिताः—१. दानम्, २. धारणम्, ३. प्रदानम्, ४. प्रतिदानम्, ५. त्यागः, ६. वदनम् (अध्यापनम्), ७. अनुकल्पनम्, ८. संयोजनम्, ९. विक्रमः, १०. विवाहः, ११. मोचनम्, १२. आस्फोटनम्, १३. उपहरणम्, १४. स्कम्भनम्, १५. अनुज्ञा, १६. उत्पादनम्, १७. प्राप्तिः (संचयः), १८. स्थापनम्, १९. करणम्, २०. प्रवर्तनम्, २१. चूषणम्, २२. सेचनं रक्षणं चेति ।

भारोपीयभाषाया मूलध्वनिः—√* दो—दँ इति दानार्थकः । तत्रास्यार्थे न जातमर्थपरिवर्तनमित्याश्चर्यम् (द्र० जूलि० २२३ पृ०) ।

३६ § √ दिश् (दिश) ६/३ अतिसर्जने (उ) । वोपदेवस्तु 'ओचे' इत्याह । दुर्गादासेन 'ओचः=दानम् आज्ञापनं वा' इत्यर्थोऽकारि । दानार्थकस्य दाधातोर्दर्शनार्थकस्य च दृश्धातोरिह प्रभावः ।

३६–१. अतिसर्जनं नाम त्यागः । 'प्रजां देवि दिदिड्ढि नः' इति (२, ३२, ६) ऋग्वेदे 'हे देवि=सिनीवालि, अस्माकं प्रजां पुत्रादिकां दिदिड्ढि=उपचिनु, अतिसर्जय वा, देहीत्यर्थः' इति सायणः । कञ्चिदुद्देशं प्रत्युद्दिश्यातिसर्जनमेव दानं भवति तात्पर्यतः । 'प्रजां देवि दिदिड्ढि नः' इतीयमृक् पुनः (२, ४१, १७) ऋग्वेदे दृश्यते । तत्र सायणेन स्पष्टं दानरूपोऽर्थः कृतः । एवमेव 'दिदेष्टु देव्यदिती रेक्णः' (ऋ० ७, ४०, २) इत्यत्रार्थो ज्ञेयः । 'दिदेश राजा रुचिरं रामाय परमासनम्' इति वा०रा० (२, ३, ३५), 'करं दिश यथायोगं यदि प्राणान् प्रकाङ्क्षसे' इति हरिवंशपु० (३, १२७, २८), 'दिदेश कुशगर्भं च पीठमात्मासनोपमम्' (हरिवंश० २, ६९, १९), 'दिदेश कौत्साय समस्तमेव' इति च रघु० (५, ३०) दानमर्थो दिश्धातोः (तुल० 'प्रत्यावृत्तिभिया दिशन्' इति नैष० २०, १६१) ।

३६–२. 'स्तोमं वो अद्य रुद्राय शिक्वसे क्षयद्वीराय नमसा दिदिष्टन' इति (१०, ९२, ९) ऋग्वेदे रुद्राय नमसा=अन्नेन नमस्कारेण वा सह स्तोमम्=स्तोत्रम्, दिदिष्टन=सृजतेति सर्जनमर्थः, स्तोत्ररूपकर्मणः संनिधानाद् दानरूपस्यार्थस्याकल्पनात् ।

दा-दिशोर्मिथः संक्रमः सुनिश्चितः। अत एव ऋ० (५, ३६, ६) 'अदिष्ट' इत्यत्राह सायणः—ददातेर्दिशतेर्वा लुङीदं रूपमिति।

३६–३. 'प्राचीनं ज्योतिः प्रदिशा दिशन्ता' इति (१०, ११०, ७) ऋग्वेदे दिश्-धातोर्निर्वाहरूपोऽर्थः, मन्त्रेण हवनकर्त्रोर्देशनस्य तथार्थात्।

३६–४. 'अपिबत्कद्रुवः सुतमिन्द्रः सहस्रबाह्वे। अत्रादेदिष्ट पौंस्यम्' इति (८, ४५, २६) ऋग्वेदे दिश्धातुर्दीपनार्थकः, अत्र=अस्मिन्नवसरे पौंस्यस्य=इन्द्रवीर्यस्य समभिव्याहारेण तथार्थकल्पनस्यौचित्यात्।

३६–५. निरुपसर्गपूर्वकस्य दिश्धातोर्निर्देशोऽर्थः। स च माध्यन्दिनसंहितायामुपसर्गेण विनैव लभ्यते—'देदिश्यते'=कुटिलगमनेन निर्दिश्यते लक्ष्यते नारीत्युव्वटभाष्यम्। 'निर्दिश्यतेऽत्यन्तं लक्ष्यते' इति च महीधरभाष्यम्। 'अभियोक्ता दिशेद् देश्यम्' इति मनु० (८, ५२) निर्दिशेदित्यर्थः। अयं निर्देशार्थो दर्शनमप्यभिप्रैतीति बहवो व्याख्याकारा दर्शनरूपमर्थमपि कुर्वन्ति—'अभियोक्ता दिशेद् देश्यम्' इत्यत्र मनुस्मृतौ दिशेत्=निर्दिशेद्=दर्शयेदिति। वस्तुतो दिश्धातौ √दा+ईक्ष्, √धा+ईक्ष्, √दृश् इत्येतेषां ध्वनीनां समावेशो लक्ष्यते। भारोपीयमूलध्वनिः √*'दाइक्' (तालव्यः ककारः) इति दर्शनार्थकः।

३६–६. निरुपसर्गपूर्वकस्य दिश्धातोरादेशरूपोऽर्थोऽपि भवति (निरदिक्षच्च काञ्चनम्—भट्टि० १५, ८=आदिष्टवान् इति जयमङ्गलः)। 'सैनिका भयनाम्नो ये बर्हिष्मन् दिष्टकारिणः' इति भागवतपुराणे (४, २८, १) दिश्धातुरादेशार्थकः, 'दिष्टकारिणः सैनिकाः' इत्यत्र दिष्टशब्दस्याऽऽदेशार्थपरत्वादिति। 'सा हि दिष्टानवद्याङ्गि' इति वा० रा० (२, ३०, ४०) 'दिष्टा=अनुज्ञाता' इति तिल०। 'दिदेश यानाय निदेशकारिणः' इति नैष० (१, ५६) 'दिदेश=आज्ञापयामास' इति प्रकाशटीका, निदेशकारिणं प्रति तादृशार्थस्य सामर्थ्यात्। लैटि० 'दिकिस्'=आदेशः (जू० १८८ पृ०)।

३६–७. निर्देशरूप आदेशरूपो वाऽयमर्थः क्रमेण भाग्ये पर्यवसितः, तस्य ब्रह्मणो निर्दिष्टतेति परम्परागतत्वात्। महाभारते (१४, ५३, १६)—

ततस्ते निधनं प्राप्ताः सर्वे ससुतबान्धवाः।
न दिष्टमभ्यतिक्रान्तुं शक्यं बुद्ध्या बलेन वा॥

इत्यत्र दिष्टशब्दो भाग्यवाचकः, (कालवाचकश्च—'कालो दिष्टोऽप्यनेहापि—अ० को०) बुद्ध्या बलेन वा तस्यानतिक्रमणात्। तुल० लैटिनभाषायाः 'दिक्तुस्' इति शब्दः (जूलि० १८८ पृ०)।

३६–८. दिश्धातोरुच्चारणक्रियत्वं व्याकरणनिकाये सुप्रथितम्—'दिशिरुच्चारणक्रियः' इति महाभाष्यात्। वस्तुतस्तु उपोपसर्गपूर्वकस्य दिशधातोरुपदेशरूपोऽर्थ उच्चारणपरः। त्रिकाण्डशेषेऽपि (३, ३, ९७) दिष्टम्=उपदिष्टमिति। भट्टि० (२, ३२) 'गाधेयदिष्टं विरसं रसन्तम्' इत्यत्र '–दिष्टम्=कथितम्' इति जयमङ्गलः। महाभारते (३, १०६, २३)—

ततः पुत्रसहस्राणि षष्टिं प्राप्स्यसि भारत।
महादेवेन दिष्टं ते पुत्रजन्म नराधिप॥

इत्यत्र दिष्टम्=कथितम् इत्यर्थः, 'प्राप्स्यसि' इत्युद्घोषात्। यद्यपि निरूपण-निर्णय-निश्चय-निर्देश-कथन शब्दार्थेषु मिथो न्यूनो भेदः, तथापि प्रसङ्गेन समभिव्याहृतपदानां पूर्वापरसंबन्धनिरूपणेन च निर्णयस्य सुशकत्वम्। 'श्लेष्मातकमयो दिष्टः' इति वा० रा० (१, १४, २३) तिलकटीकायाम्—'दिष्टः=उपदिष्टः' इत्यर्थः। महाभारते (१०, ५, ६)—

अनेयस्त्ववमानी यो दुरात्मा पापपूरुषः।
दिष्टमुत्सृत्य कल्याणं करोति बहुपापकम्॥

इत्यत्र 'दिष्टम्=उपदिष्टम्' इति नीलकण्ठः, अवमान्यादिविशेषणैस्तथाऽवगमात्। 'स्मरेषवः शक्रदृशां दिशन्ति' इति नैष० (८, ६५) 'दिशन्ति=कथयन्ति' इति प्रकाशटीकाकारः, 'कुहूगिरः' इति कर्तृपदसान्निध्यात्। पालिभाषाया धातुमञ्जर्यां सद्दनीतौ चोच्चारणे पठितोऽयं धातुरुच्चारणादिषु—धा० म० (८६१); दिसी उच्चारणे (सद्दनी० १६६८)। प्राकृतभाषायामपि कथनार्थकः—दिसइ (भवि०)। लैटिन्—'दीकेरे' इति कथनार्थकः (जूलियस्० १८८ पृ०)।

३६–९. निर्देशनपूर्वकं कथनपूर्वकं वा शिक्षणं जायते। 'धर्म्यं देशय पन्थानम्' (६, ३, ५३) इति महाभारते 'देशय=शिक्षय' इति नीलकण्ठः। यद्यपि शिक्षोपदेशयोर्भेदो नास्ति स्थूलः, तथापि धर्मादनपेतस्य मार्गस्य शिक्षणौचित्यम्, निर्देशनप्रकारत्वात्। अवेस्ताभाषायाम् 'आदिश्ति-स्' इति शब्दः शिक्षणार्थक आङ्पूर्वकः। लैटिनादिभाषास्वस्यार्थस्य विस्तारोऽपि दृश्यतेऽधिक्षेपणरूपेण—लैटि० 'दिक्ति-ओ', एँ० सै०—'तिहृत्' इत्यधिक्षेपणार्थकौ। पु० उ० ज०–'बि-त्सिह्‌त्' इति, न० उ० ज० फेर्त्सिस्त्' इति च विपूर्वकौ तुलनीयौ शब्दौ।

३६–१०. 'यस्मिन् देशे निषीदन्ति' इति मनु० (८, ११) 'देशे=स्थाने' इति कुल्लूकभट्टः। नैषधीये चरितेऽपि (१, ३३) 'दिदेश तस्मिन् बहुशः श्रुतिं गते' इत्यत्र निधानरूपोऽर्थो दिश्धातोः प्रकाशकारेण निर्दिष्टः, अन्यनृपेभ्यो मन आकृष्य नलस्योपरि स्थापनात्। सूक्ष्ममनःकर्मकस्थापनक्रियाया असंभवादिह तस्या आरोपः।

३६–११. 'ध्वजे भूतान्यदेशयत्' इति महाभारते (४, ४६, ४) ध्वजाधिकरणकं भूतानां देशनं नाम योजनम्, संलगनम्, अर्जुनद्वारकाग्निस्मरणानन्तरमग्निनाऽल्पकालाय तत्र भूतानां योजनं कृतमिति तथार्थात्। यद्यपि विराटपुत्रयोत्तरस्य 'अमानुषाणां शब्देन भूतानां ध्वजवासिनाम्' इत्युक्त्या ध्वजे भूतानां वासः=निवासोऽपि, तथापि तस्यार्जुनध्वजेऽल्पकालजातत्वाद् योजनरूपस्यार्थस्यैवौचित्यं तत्र ज्ञेयम्।

३६–१२. 'दिदेश दूतान् पथि यान् यथोत्तरम्' इति नैष० (१६, ५) दिश्धातोः प्रेषणमर्थः, नलाऽऽकारणार्थं दूतानां तत्र सामर्थ्यात्। यद्यपि मल्लिनाथकृत आज्ञापन-

रूपोऽर्थ इह मननीयः, तथापि प्रसङ्गालोचनेन ज्ञायते यद् आज्ञापनस्य स्थाने प्रेषणरूपार्थदिशो नाम। प्रकाशटीकाकारेण तथ्यं विभाव्य निर्दर्शितोऽसौ।

३६–१३. 'दिशन्तु वा दण्डममी ममागसा' इति नैष० (९, १३१) दण्डप्रकारनिर्देशाभावात् सामान्ये करणमर्थो दिश्धातोः। प्रकाशटीकाकारोऽप्याह—'दिशन्तु= कुर्वन्तु' इति। तुलनीयो ग्रीक्भाषाया विध्यर्थकः 'दिके' इति शब्दः (जूलि० १८८ पृ०)।

एवं तावदेष धातुस्त्रयोदशार्थेषु प्रयुज्यमानः परीक्षितः–१. दानम्, २. सर्जनम्, ३. निर्वाहः, ४. दीपनम्, ५. निर्देशः (दर्शनम्), ६. आदेशः, ७. भाग्यम् (कालः), ८. कथनम्, ९. शिक्षणम्, १०. स्थानम् (निधानम्), ११. योजनम्, १२. प्रेषणं चेति। एतदतिरिक्तो विस्तारार्थको दिष्टिशब्दोऽपि वितस्त्यर्थक इति विस्तारोऽप्यर्थो दिश्धातोः। एवमन्येऽप्यर्था ऊहनीयाः।

३७. § √दृश् (दृशिर्) १/९७३ प्रेक्षणे (प)। इह धातुरूपेषु द्वे प्रकृती–दृश् इति पश् (< स्पश्) इति च। धातुरेष विशेषज्ञानार्थकः, दर्शनस्य चक्षुरिन्द्रियजन्यत्वात्। अन्यत्र तु सामान्यज्ञानार्थको गृह्यते।

३७--१. 'हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्' इति (१,३५,२) ऋग्वेदे सवितृकर्तृकेण दर्शनेन प्रकाशनमर्थः। भुवनानि प्रकाशयन् यातीत्यर्थः, तस्य प्रकाशात्मत्वात्। एवमेव 'तस्येदं पश्यता भूरि' इत्यत्र (१, १०३, ५) ऋग्वेदे सायणेन 'आलोकयत' इति व्याख्यायि। 'वि द्यामेषि रजस्पृथ्वहा मिमानो अक्तुभिः। पश्यञ्जन्मानि सूर्य' इत्यत्र (१, ५०, ७) ऋग्वेदे जन्मानि=भूतजातानि प्रकाशयन्नित्यर्थः। 'त्वं वरुण पश्यसि' इति (१, ५०, ६) ऋग्वेदे वरुणकर्तृके दर्शनेऽपि प्रकाशनमर्थः, तस्य देवरूपत्वात्। 'रागं दर्शयते सैषा' इति नैष० (२०, ३३) प्रकाशयतीत्यर्थः। यद्यपि 'बोधयते' इत्यर्थः प्रकाशकारेणावलम्बितः, तथापि रागस्य व्यक्तीकरणत्वात् तादृशार्थो बोधनीयः। मल्लिनाथेनेह प्रकाशरूपोऽर्थ एवाङ्गीकृतः। तुल० हरिवं० (२, ३९, ७४) नीलकण्ठः।

३७–२. 'दृश्यन्ति चैवात्र भयानकानि' महाभारते (५,१४२,४), 'न पश्येत् प्रसवन्तीं च' मनु० (४,४४) निरीक्षेदिति कुल्लूकः, 'नायुध्यमानं पश्यन्तम्' मनु० (७,९२) प्रेक्षकम् इति कुल्लूकः। ऋग्वेदादौ तु दर्शनार्थकस्य दृश्धातोर्बहून्युदाहरणानि सन्ति।

३७–३. 'तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम्' इति (१, १६४,१) ऋग्वेदे भावनयाऽऽत्मत्वेन वा साक्षात्काररूपोऽर्थः। वा० रा० (२,५१,२४)—

अपि जीवेद् दशरथो वनवासात् पुनर्वयम्।
प्रत्यागम्य महात्मानमपि पश्याम सुव्रत॥

इत्यत्र वनवासानन्तरं दशरथेन सह साक्षात्कारचर्चेति दृश्धातुः साक्षात्कारार्थकः। आङ्गलभाषायामपि भवति तादृशः (टु सी=साक्षात्करणम्) प्रयोगः। अयमर्थो दर्शनरूप एव, अक्षिसंबन्धात्।

३७–४. 'न स देवा अतिक्रमे तं मर्तासो न पश्यथ वित्तं मे अस्य रोदसी' इति (१, १०५, १६) ऋग्वेदे सूर्यस्य दर्शनाभावो नामाज्ञानम्, चक्षुरिन्द्रियवद्भिः सूर्य-दर्शनस्य कर्तुं शक्यत्वात्। सायणोऽप्याह—'एवं च सति हे मर्तासः=पापकृतो मनुष्याः! तं महानुभावं सूर्यं युवां न जानीथः। अहमेव मन्त्रद्रष्टा तं सूर्यं जानामि' इति। 'यन्मरुतो गोतमो वः। पश्यन्' इति (१, ८८, ५) ऋग्वेदे मरुतः पश्यन्=जानन् गोतम इति सायणः। 'ते अग्ने पश्यन्तो अन्धं दुरितादरक्षन्' इति (१, १४७, ३) ऋग्वेदे 'अन्धं पश्यन्तः=अन्धोऽयम् अतोऽस्माभी रक्षणीय इत्यवगच्छन्तः सन्तः' इत्यवगमरूपोऽर्थो दृश्धातोः। 'तद् विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इति (१, २२, २०) ऋग्वेदेऽपि ज्ञानार्थको धातुः, विष्णोः संबन्धिन उत्कृष्टस्य शास्त्रप्रसिद्ध-स्य तस्य स्वर्गस्थानरूपस्य पदस्य शास्त्रदृष्ट्याऽवगमत्वात्। 'कर्तव्यः शास्त्रदृष्टो हि विधिर्धर्ममनुस्मर' इति (२, ५६, २) वा० रा० शास्त्रबोधित इत्यर्थः। 'चक्रुस्ते शास्त्रतो दृष्ट्वा कर्माणि मुनिपुङ्गवाः' इत्यत्र वा० रा० (१, १४, ७) त्वध्ययन-पूर्वकं ज्ञानम्। मनु० (७, २५)—

यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा।
प्रजास्तत्र न मुह्यन्ति नेता चेत् साधु पश्यति॥

इत्यत्र दृश्धातुर्ज्ञानार्थकः, नेता=दण्डप्रणेता यदि विषयानुरूपं दण्डं सम्यग् जानातीति प्रसङ्गेन दण्डस्य दर्शने तात्पर्याभावात्। 'अनिर्वृतं नियोगार्थं पश्यन्तो धर्मतस्तयोः' इति मनु० (९, ६१) 'पश्यन्तः=मन्यमानाः' इति कुल्लूकभट्टः। महा-भारते (१२, १३, ११)—

बाह्यान्तरं च भूतानां स्वभावं पश्य भारत।
ये तु पश्यन्ति तद् भूतं मुच्यन्ते ते महाभयात्॥

इत्यत्र दृश्धातुर्ज्ञानार्थकः, स्वभावस्य लोचनाभ्यामेव द्रष्टुमशक्यत्वात्। नेत्र-वक्त्रविकाराणां चक्षुर्भ्यां दर्शनानन्तरमन्तर्गतमनसः स्वभावस्य वा दर्शनं नाम ज्ञानम्। एवमेव 'द्रक्ष्यसे देशकालतः' महाभार० (१३, १९, ९६) इत्यत्र कामेन मोहितायाः स्त्रियाः प्रसङ्गात् 'स्पर्शसुखं ज्ञास्यते' इति तदर्थः। एवमेव वा० रा० (१, ५७, २१), मनु० (९, २४९), भा० पु० (८, ८, ३४) इत्यत्र च ज्ञानरूपा अर्था विज्ञेया दृश्धातोः। क्वचित्तु स्पष्टं ध्यानचक्षुषा दर्शनम्, 'दृष्ट्वा वै ध्यानचक्षुषा' इति, 'एता दृष्ट्वास्य जीवस्य गतीः स्वेनैव चेतसा' (मनु० १२, ३३) इति चेतसा=अन्तःकरणेन दर्शनस्य=ज्ञानस्य स्पष्टता कृता।

३७–५. 'पश्येत् कार्याणि कार्यिणाम्' इति मनु० (८, २) दृश्धातोर्विचार-रूपोऽर्थः, सभायामासीनः कार्यिणां कार्याणि विचारयेदेवेति सामान्यदर्शनप्रसङ्गा-भावात्। विचारो बुद्धिजो व्यापार इति ज्ञानार्थकोटिसादृश्यं बिभर्ति। उभयत्र स्थूला-र्थतः सूक्ष्मार्थं प्रति प्रवृत्तिर्धातोरभ्युपेया। महाभारते (४, ७, १६)—

समानयानो भवितासि मे सखा प्रभूतवस्त्रो बहुपानभोजनः।
पश्येस्त्वमन्तश्च बहिश्च सर्वदा कृतं च ते द्वारमपावृतं सदा॥

इत्यत्र 'पश्येः = पर्यालोचय' इत्यर्थः, 'पश्य प्रह्लाद भूतानामुत्पत्तिमनिमित्ततः' इति (१२, १७९, १०) महाभारते 'आलोचय' इत्यर्थोऽप्येवञ्जातीयक एव। 'तस्या दोषमदर्शयन्' इति मनु० (८, २२५) 'अविभावयन्' इति कुल्लूकभट्टः। तुल० याज्ञ० (२, ३०५) मिताक्षरावीरमित्रोदयव्याख्ये। 'ददर्श संशयच्छेद्यान् व्यवहारानतन्द्रितः' इति रघु० (१७, ३९) 'ददर्श=अनुसंदधौ' इति मल्लिनाथः। अनुसन्धानं नाम विचारः। तथा च मनु० (१२, १०६) 'यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः' इत्यत्रानुसन्धानेन विचारोऽर्थः।

३७–६. 'योऽर्थान् धर्मेण पश्यति' इति मनु० (८, १७५) दर्शनं नाम निरूपणम्। यद्यपि निरूपणं व्याख्यानं वा विचाराद् नास्ति भिन्नम्, तथापि सूक्ष्मभेदस्य विद्यमानत्वादिह पृथगुपन्यासः। कुल्लूकभट्टेनापि 'निरूपयेत्' इत्यास्थितोऽर्थः।

३७–७. वा० रा० (२, ५४, २६)—

एकान्ते पश्य भगवन्नाश्रमस्थानमुत्तमम्।
रमते यत्र वैदेही सुखार्हा जनकात्मजा॥

'वैदेह्या मम चापि प्रेक्षको जन इहाऽऽगमिष्यतीति कारणेनेहावासं न रोचये' इति विचार्य रामचन्द्रेण शून्यस्याश्रमस्थानदर्शनस्य कृत आगृहीतो मुनिः। इह 'एकान्ते पश्य' इत्यनेन 'ज्ञात्वा निर्दिश' ज्ञानपूर्वको निर्देश इत्यर्थः, केवलेन ज्ञानार्थस्वीकारेणोद्देश्यनिर्वाहाभावात्। अर्थपरिवर्तनस्य सूक्ष्मतेह द्रष्टव्या।

३७–८. महाभारते (७, १११, ३९)—

एतद् विचार्य बहुशो बुद्धया बुद्धिमतां वर।
दृष्ट्वा श्रेयः परं बुद्धया ततो राजन् प्रशाधि माम्॥

इत्यत्र पूर्वार्द्धे बुद्धया विचारस्योक्तत्वादुत्तरार्द्धे 'बुद्धया दृष्ट्वा' इत्यस्यार्थो निश्चय इति, बुद्धिरूपान्तःकरणस्य निश्चयात्मकत्वात्। याज्ञवल्क्यस्मृतौ (१,३२६)—

कृतरक्षः समुत्थाय पश्येदायव्ययौ स्वयम्।
व्यवहारांस्ततो दृष्ट्वा स्नात्वा भुञ्जीत कामतः॥

इत्यत्र व्यवहाराणां दर्शनं नामावधारणम्। 'अहो न सम्यग् दृष्टोऽयं न्यायः' इति पञ्चतन्त्रोक्तावपि न्यायरूपव्यवहारस्य दर्शनमपि निश्चयार्थकम्, व्यवहारादीनां निर्णये पर्यवसानात्। अत एव मिताक्षराकारेणोक्तम्'—दृष्ट्वा = अवधार्य' इति।

३७–९. महाभारते (४,३६,२)—

तं त्वहं नावगच्छामि यो मे यन्ता भवेन्नरः।
पश्यध्वं सारथिं क्षिप्रं मम युक्तं प्रयस्यतः॥

इत्यत्रान्वेषणमर्थो दृश्धातोः, यन्तुरनवगमात्। एवमेव हिन्द्यादिभाषायामपि प्रसङ्गेन दर्शनस्य गवेषणमर्थो भवति।

३७–१०. वा० रा० (२, ३८, ७)—

रामेण यदि ते पापे किञ्चित् कृतमशोभनम् ।
अपकारः क इह ते वैदेह्या दर्शितोऽधमे ॥

इतीयमुक्तिर्दशरथस्य कैकेयीं प्रति । हे पापे ! अधमे ! रामेण यदि तव किञ्चिद् अशोभनं कृतम्, तदस्तु, किन्त्विह तव वैदेह्या कोऽपकारो दर्शितः ? अत्र '**संपादितः**' इति तिलकटीका ।

३७–११. 'अधर्मेणैधते तावत् ततो भद्राणि पश्यति' इति मनु० (४, १७४) 'पश्यति =लभते' इत्यर्थः । एवमेव 'यं तु पश्येन्निधिं राजा पुराणं निहितं क्षितौ' इति मनु० (८, ३८) निधिदर्शनं नाम प्राप्तिः । 'पश्चाद् दृश्येत यत् किञ्चित् तत् सर्वं समतां नयेत्' इति मनु० (९, २१८) ऋणे पित्रादिधार्यमाणे धने च देये सर्वस्मिन् यथाशास्त्रं विभक्ते सति पश्चाद् यत् किञ्चित् पैतृकमृणं धनं वा विभागकालेऽज्ञातमुपलभ्येत तत् सर्वं समं कृत्वा विभजनीयमित्यर्थः । ['दृष्टस्तत्रापि तद् ब्रूयाद् यथादृष्टं यथाश्रुतम्' इति मनु० (८, ७६) यथोपलब्धं ब्रूयादित्यर्थः । इह तु वस्तुत उपलब्धिर्ज्ञानमित्यर्थो ज्ञेयः साक्षात्कारात्मकः] । 'उपेत्य सा दोहददुःखशीलतां यदेव वव्रे तदपश्यदाहृतम्' इति रघु० (३,६) आहृतम्=आनीतम्, अपश्यत्=अलभतेत्यर्थः । भट्टि० (७, ९०)—

म्रियामहे न गच्छामः कौसल्यायनि-वल्लभाम् ।
उपलभ्यामपश्यन्तः कौमारीं पततां वर ॥

इत्यत्र 'उपलभ्याम्=प्रशस्ताम्, अपश्यन्तः=अनुपलभमानाः' इत्यर्थः ।

३७–१२. वा० रा० (२, ७५, ५८)—

भक्त्या विवदमानेषु मार्गमाश्रित्य पश्यतः ।
तेन पापेन युज्येत यस्यार्योऽनुमते गतः ॥

इति भरतस्य कौसल्यां प्रति शपथः । इह दृश्धातोरर्थः श्रवणम्, विवादस्य श्रवणविषयत्वात् ।

३७–१३. वा० रा० (३, ५०, २८)—

तिष्ठ तिष्ठ दशग्रीव मुहूर्तं पश्य रावण ।
वृन्तादिव फलं त्वां तु पातयेयं निशाचर ॥

इति जटायुष उक्ती रावणं प्रत्याह्वानरूपा । 'मुहूर्तं पश्य' इत्यस्य 'मुहूर्तं प्रतीक्षस्व' इत्यर्थः, न तु साक्षात्काररूपदर्शनमर्थः । अयमर्थः स्थाधातुनाऽपीतः पूर्वं प्रकटितः— 'युध्यस्व यदि शूरोऽसि मुहूर्तं तिष्ठ रावण' (वा० रा० ३, ५०, २३) इति ।

३७–१४. राजतरङ्गिण्याम् (५, १२४)—

आत्मनस्तत्र निश्चित्य विपत्तिं चिरगोपिताम् ।
प्राणान्ते प्राञ्जलिः शूरो वैष्णवत्वमदर्शयत् ॥

इत्यत्र दृश्धातुरङ्गीकारार्थकः, विपत्तिप्राणान्तादिशब्दान् दृष्ट्वा प्राणान्तात् पूर्वं वैष्णवत्वस्यानङ्गीकारात् ।

एवं तावदिह चतुर्दशार्थाः परीक्षिता दृश्धातोः—१. प्रकाशनम्, २. प्रेक्षणम्, ३. साक्षात्कारः, ४. अवगमः, ५. विचारः (परीक्षणम्), ६. निरूपणम्, ७. ज्ञानपूर्वक-निर्देशः, ८ निश्चयः, ९. गवषेणम्, १०. संपादनम्, ११. लाभः, १२. श्रवणम्, १३. प्रतीक्षा, १४. अङ्गीकारश्चेति ।

भारोपीयभाषासमूहे नैतस्य धातोर्दर्शनातिरिक्तोऽर्थः । तत्र मूलध्वनिस्तालव्यककार-युतः √*दर्क् इति । 'पश्' इति द्वितीयप्रकृतिप्रसङ्गे √*स्पक् इति मूलध्वनिस्तत्र तालव्यककारयुतः । तस्य समीक्षणनिरीक्षणानुसन्धानादयोऽर्थाः । आङ्गलभाषायाम् 'टु स्पाई' इति क्रियापि तादृशार्थिका । लैटिन्—स्पेक्तुस्, अवेस्ता—स्पश्येइति [ग्रीक्—स्केप्तोमै], स्पस्, स्पश्तरर् [=लैटि० स्पेक्टर्; उम्ब्रिश्—स्पेक्तुर्] इत्यादयः शब्दास्तादृशार्थकाः (द्रष्ट० जूलियस् पॉ०—पृ० २१३; ९८४) । एते सर्वेऽर्थाः पूर्वमेव विवेचिताः संस्कृतदृश्धातोर्मया । ते यथास्थानमवलोकनीयाः ।

३८. § √द्रु १/९३० गतौ (प) । निघण्टौ (२, १४) अप्यस्य गतिकर्मत्वम् । वस्तुत इह 'वेगितायां गतौ' इत्यर्थः समीचीनो भाति । भट्टमल्लेन तथैवाभिहितम् (आ० च० २, ३, १०९) । वोपदेवेन तु 'स्रुतौ गतौ' इत्यभिधाय स्पष्टता कृता । पर्यन्ततयाऽर्थद्वय-मेव प्रमुखम् ।

३८–१. 'द्रवन्त्यस्य वाजिनो न शोकाः' इति (४, ६, ५) ऋग्वेदे परितो गच्छन्तीति सायणः । 'यत्रा नरः सं च वि च द्रवन्ति' (६, ७५, ११) इत्यत्र च 'द्रवन्ति=चरन्ति' इति सामान्यतो गमनमर्थो द्रुधातोः । अवेस्ताभाषायाम् 'द्वरइति' (<द्रवति)= गच्छतीत्यर्थः (जूलि० २०५ पृ०) ।

३८–२. 'द्रवन्त्यस्य वाजिनो न शोकाः' इति (४, ६, ५) ऋग्वेदे परिगमनमर्थः । इहैव धावनरूपा द्रुतगतिरपि । 'अभिद्रवत भद्रं वो द्रुतं द्रवत कौरवाः' इति (८, ६०,३८) महाभारते द्रुतशब्दः शीघ्रतावाचकः, साध्यावस्थापन्नायाः क्रियायास्तु गत्यर्थकत्वमेव । महाभारते (१३, २६, ८२) 'वाय्वीरिताभिः सुमनोहराभिर्द्रुताभिः··· गङ्गोर्मिभिः' इत्यत्र तु पूर्णतया द्रुतगतिः । महाभारते (८, ६०, २८)—

एते द्रवन्ति रथिनस्त्वदीयाः पाण्डुनन्दन । इति ।

रथानां द्रवते वृन्दमेतच्चैव समन्ततः ।
द्राव्यमाणं रणे आर्य कर्णेनामित्रकर्षिणा ॥

इति च (८,६०, ३०) धावनार्थे मनोहारि निदर्शनम् । 'द्रुतम्' इति क्षिप्रार्थको जातः शब्दः । अस्य शीघ्रगामितारूपस्यार्थस्य मूलमृग्वेदेऽस्ति 'अद्रोघो न द्रविता चेतति' (६, १२, ३) अग्निरोषधीषु द्रविता=शीघ्रगामी सन्निति तदर्थः । 'मां चत्वार आशवः शविष्ठस्य द्रवित्नवः' इति (८, ७४, १४) ऋग्वेदेऽश्वानां गमनशीलतया वेगिताया गतेः प्रतीतिः । ऋक्प्रातिशाख्ये वाचो द्रुता वृत्तिः प्रसिद्धा—'तिस्रो वृत्तीरुपदिशन्ति वाचो विलम्बितां मध्यमां च द्रुतां च' (१३, १८) इति । नवीनोच्च-जर्मनभाषायां तु 'त्रोत्तेल्न्' इत्ययं मन्दगमनार्थकः (जूलि० २०५ पृ०) ।

३८–३. इमामेव वेगरूपां गतिमवलम्ब्य महाभारते (१, १३८, ३५) आक्रमणरूपोऽर्थो लभ्यते ' ततः किरीटी सहसा पाञ्चालान् समरे ऽ द्रवत्' इति, 'पाञ्चालं वै परिप्रेप्सुर्धनञ्जयमदुद्रुवत्' इति (१, १३८, ४०) च ।

३८–४. अपरत्र तु सैव वेगिता गतिः पलायनरूपा । 'अर्दिता यूथपा मत्ताः सयूथाद् दुद्रुवुर्दिशः' इति वा० रा० (२, ९६, ४), 'सच्छिन्नबन्धद्रुतयुग्यशून्यम्' इति च रघु० (५, ४९) पलायनमर्थः । 'द्रुताः=पलायिताः' इति मल्लिनाथः । 'द्रावयिष्यामि राक्षसान्' इति (८, ५८) भट्टि० जयमङ्गलः पलाययिष्यामीति । पलायनरूपस्यार्थस्य मूलमप्यृग्वेदे (१०, ३९, १०) 'चर्कृत्यं ददथुर्द्रावयत्सखं भगम्' इति । शत्रुसखीनां शत्रुसखानां वा द्रावयितारमिति तदर्थः 'रक्षांसि भीतानि दिशो द्रवन्ति' इति (११,३६) गीतायां भीतानीति कर्तृविशेषणाद् द्रुधातोः पलायनार्थकता स्पष्टा ।

३८–५. ऋ० (८, ३४, १८) 'द्रवच्चक्रेषु रातिषु' इत्यत्र 'प्रसर्पत्सु रथचक्रेषु' इत्यर्थः । एवं तावत् प्रसपर्णरूपोऽर्थोऽत्र विज्ञेयः । भट्टि० (१०, ५) 'न च न द्रवता' इत्यत्र विसपर्णमर्थः कृतो जयमङ्गलेन । धर्माद् विचलनरूपोऽर्थस्त्ववेस्ताभाषायाम्— 'द्रवतो' (<द्रवतः)—यस्न ९, ३१ ।

३८–६. गीतायाम् (११, २८) 'समुद्रमेवाभिमुखा द्रवन्ति' इत्यत्र प्रविशन्तीति शाङ्करभाष्यम्, विशन्तीति च मधुसूदनः, अभिमुखपदस्य सांनिध्येन तादृशस्यार्थस्य स्पष्टत्वात् ।

३८–७. द्वितीयस्तु मुख्योऽर्थः स्रवणम् । 'सूर्यस्येव रश्मयो द्रावयित्नवः' इति (९, ६९, ६) ऋग्वेदे द्रावयित्नुपदं सोमविशेषणमिति द्रवणशीलाः सोमा इति तदर्थः । तथा च मेदिनी—'द्रवः प्रद्रावनर्मणोः । रसेऽपि च' इति वे ९ । 'अध्वर्यो द्रावया त्वं सोममिन्द्रः पिपासति' इति (८, ४, ११) ऋग्वेदे 'द्रावय=रसात्मना द्रवणशीलं कुरु' इत्यर्थः । 'अभिषिणु' चेति तात्पर्यार्थः । 'वह्निना द्रवमाणं कालायसं निषिञ्चन्ति' इति (५, २६, २९) भागवते विलापनार्थः । स च रसात्मना द्रवणरूप एव । एवमेव 'संतापद्रुतभूरिसर्पिषि घटे' इति राजतरङ्गिण्याम् (२, ७८) अपि सर्पिषो विलापनम् । भट्टि० (१०, ११) 'द्रुतं द्रुतम्' इत्यत्र 'विलीनम्' 'प्रवाहरूपेण प्रवृत्तम्' इति जयमङ्गलः । 'गभस्तिधाराभिरिव द्रुतानि' इति भट्टि० (२, १२) गलितानीति जयमङ्गलः । द्रवाद्याधारकवस्तुन्यपि द्रोणशब्दप्रयोगः । वा० रा० (२, ६६, १४) 'तैलद्रोणी' इत्यत्र 'तैलपूर्णः कटाहः' इति तिलकटीका । एवमेव द्रविणद्रव्यादिशब्दानां प्रवृत्तिर्ज्ञेया । आढकवाचको द्रोणशब्दोऽपि द्रव्याधारक एव । रसरूपद्रव्योत्पादकस्य वृक्षस्य संज्ञापि द्रुर्द्रुमो वा । तादृशफलादि द्रव्यम् । ततश्च रैवाचकत्वात् तादृशार्थे सर्वत्र प्रयुक्तो द्रव्यशब्दः पदार्थमात्रे ।

अदृष्टेष्वपि पदार्थेषु धातोरेतस्य प्रयोगो भागवते पुराणे (३, २८, ३४) 'भक्त्या द्रवद्धृदय उत्पुलकः प्रमोदात्' इति ।

३८-८. ऋ० (६, ३, ४)—

तिग्मं चिदेम महि वर्पो अस्य भसदश्वो यमसा न आसा ।

विजेहमानः परशुर्न जिह्वां द्रविर्न द्रावयति दारु धक्षत् ॥

इत्यत्र भस्मसात्करणे द्रुधातोः प्रयोगः । स्वर्णादिधातूनां विलापनम् अग्निसंयोगेन जायते । इह वेदेऽग्निसंयोगपूर्वकं मूर्तभूतस्य सर्वस्य वनस्य द्रावणं दाहपूर्वकमभिप्रेतम् । तथा च सायणः—'कीदृशोऽग्निः ? अश्व इव आसा=आस्येन यमसानः= तृणादिकं नियच्छन्, यथा परशुः स्वकीयां धारां काष्ठे प्रक्षिपति, तथा स्वकीयां जिह्वां ज्वालां विजेहमानः=तरुगुल्मादौ प्रक्षिपन् दारु=काष्ठं धक्षत्=दहन्, द्रविर्न=द्रावयिता स्वर्णकारः । स यथा स्वर्णादिकं द्रावयति, तथा सर्वं वनं द्रावयति । मूर्तभूतं सर्वं भस्मसात्करोति' इति ।

एवं तावदिह द्रुधातोरष्टावर्थाः परीक्षिताः—१. गमनम्, २. धावनम्, ३. आक्रमणम्, ४. पलायनम्, ५. प्रसर्पणम् (विसर्पणम्, विचलनम्), ६. प्रवेशः, ७. स्रवणम्, ८. भस्मसात्करणं चेति ।

भारोपीयभाषाया मूलध्वनिरस्ति-√* द्रोइ इति । प्रवाह-धावनाद्यर्थस्तदीयः । अवेस्ताभाषायां 'द्रओनह्' (<सं० द्रविणम्) इति सम्पदर्थकः । 'द्वरइति' (<सं० द्रवति) इति च गमनार्थकः । संस्कृतभाषाया अधिक एक एवार्थस्तत्र नवीनोच्चजर्मनभाषायाः शाखायां प्रादेशिक्यामवाप्यते—त्रोल्लेन=भूतः, वेतालः पिशाचो राक्षसो वेति (द्र० जूलि० २०५ पृ०) ।

३९. § √धा (डुधाञ्) ३/१० धारणपोषणयोः (उ०) । क्षीरस्वामी तु—'दाने धारणे च' इत्याह । वोपदेवोऽपि 'धारणे पुष्टौ दाने' चेति वदन् दानार्थमधिकमाह । क्रियारत्नसमुच्चये 'डुधांग्क् धारणे दाने' इति पाठः । धारणस्य खल्वनेके भेदा आधानवहनस्थापनादिप्रकारेण विज्ञेयाः । इह निरुपसर्गस्य तस्य धारणपोषणार्थकस्य √धाधातोरर्था विवेच्यन्ते ।

३९-१. ऋ० (१, ८१, ३) 'यदुदीरत आजयो धृष्णवो धीयते धना । दधोऽस्मॉं इन्द्र वसौ दधः' इत्यत्र धनप्रङ्गेन निधानमर्थः । 'यः सूरिषु बृहद्धे स्वर्ण हर्यतः' (९, ९८, ८) इत्यत्र तु श्रवसः=अन्नस्य कर्मत्वाद् विधानमर्थः, स्थापनं तु तात्पर्यतः । 'त्वा सह पत्या दधामि' इति (१०, ८५, २४) ऋग्वेदे त्वां पुत्राद्यर्थं पत्या सह दधामि= स्थापयामीत्यर्थः । 'कान्तमूर्ध्नि दधती पिधित्सया' इति नैष० (१८, ८६) स्पष्टं कान्तमूर्ध्नि श्रवणपूरस्योत्पलस्य स्थापनमर्थः ।

'अधाय्यग्निर्मानुषीषु विक्ष्वपां गर्भो मित्र ऋतेन साधन्' इति (३, ५, ३) ऋग्वेदेऽपां गर्भस्याग्नेः कर्मत्वादाधानमर्थः । एवमेव 'युवं ह गर्भं जगतीषु धत्तः' ऋ० (१, १५७, ५) इत्यत्र जगत्यधिकरणकं गर्भकर्मकमाधानम् । आधानस्य च निक्षेपणं समर्पणं वार्थः (द्र० गीता० ५, १० शाङ्करभाष्यम्) । 'तस्मिन् गर्भं दधाम्यहम्' इति

गोता० (१४, ३) 'निक्षिपामि' इति शाङ्करभाष्यम्। उभयत्र गर्भधारणे समानेऽपि विद्यत ईषदर्थभेदः। स्त्रीद्वारकगर्भस्य धारणं नामाऽऽधानम्। पुरुषैश्च तत्र गर्भधारणं नाम निक्षेपणम्। 'आधित कापि मुखे सलिलं सखी' इति (४, १११) नैषधीये काव्ये धाधातुर्निक्षेपणोत्तरमाधानार्थकः, मुखाधिकरणस्य स्थापनस्याऽऽधानार्थकत्वात्। अत एव 'आहितवती' इति जीवातुकारः। लोके 'आधान' इति शब्दो गर्भाधानपरक एव।

३९-२. 'येन तोकं तनयं च धामहे' ऋ० (१, ९२, १३) पोषणार्थको धाधातुः, इतः पूर्वं धनस्य याचमानत्वात्। 'हे वाजिनीवति! उषोदेवते! अस्मभ्यं चित्रम्=चायनीयं तद् धनम् आभर=आहर, प्रयच्छ, येन धनेन तोकं पुत्रं तनयम्=तत्पुत्रं च दध्महे' इत्युक्ताया ऋचोऽर्थः। 'विद्यात् कविः सुकृतं मे दधाति' इति महाभार० (५, ३६, ९) सुकृतं पुष्णातीत्यर्थः। 'धत्ते धारयते चेदमेतस्मात् कारणाद् धनम्' इति महाभार० (५, ११४, २) धत्ते=पुष्णाति, धारयते=जीवयतीत्यर्थः। एवमेव १२, २३२, ४२; १२, ३४०, १०० इत्यादौ पोषणरूपोऽर्थोऽनुसन्धेयो धाधातोः। रघु० (१, २६) 'दधतुर्भुवनद्वयम्' इत्यत्र 'पुपुषतुः' इति मल्लिनाथः।

३९-३. ऋग्वेदे धाधातोर्दानमर्थः खल्वनेकत्र दृश्यते। 'त्वं हि रत्नधा असि' ऋ० (१, १५, ३) रत्नधा=रत्नानां दातेत्यर्थः। एवमेव 'पात रत्नधा इन्द्रवन्तः' ऋ० (४, ३४, ६), 'हिरण्याक्षः सविता देव आगाद् दधद्रत्ना दाषुसे वार्याणि' ऋ० (१, ३५, ८) इत्यत्र 'हिरण्याक्षः=हितरमणीयचक्षुर्युक्तो हिरण्मयाक्षो वा सविता देवः आगात्=इहागच्छतु। किं कुर्वन्? दाषुसे=हविर्दत्तवते यजमानाय वार्याणि=वरणीयानि रत्नानि दधत्=प्रयच्छन्' इत्यर्थः। दाषुसे हविर्दत्तवते यजमानायेति चतुर्थी धाधातोर्दानार्थमिङ्गति, हविर्दाता धनकामो ददाति हविरिति प्रसङ्गेनापि सोऽर्थः। 'वयो दधत्पद्वते रेरिहत्सदानु श्येनी सचते वर्तनीरह' ऋ० (१, १४०, ९) पद्वते=पादवते, द्विपदे चतुष्पदे च वयः=अन्नं तत्तदुचितं दधत्=ददिदित्यर्थः। निरुक्तेऽपि (७, १५) 'रत्नधातमम्=रमणीयानां धनानां दातृतमम्' इत्यर्थः।

क्षीरस्वामिवोपदेवावर्थमिमं नारोपितं मेनाते इति पेठतुर्धातुपाठे। अन्ये तु वैयाकरणा न पेठुर्दानार्थं धाधातोरिति तेषां मतेन धातोरारोपितोऽर्थो ज्ञायते। सायणोऽप्यनेकत्र विकल्पं दर्शयति, क्वचिच्च धारणार्थमेव व्याख्याति—ऋ० (१, १८८, २) 'दधत्सहस्रिणीरिषः'=सहस्रिणीः=एतत्संख्याकान्, इषः=अन्नानि, दधत्=यजमानेभ्यो धारयन्' इति सत्यामपि चतुर्थीविभक्तौ स दानमर्थं न करोति, एवमेव 'अग्निश्चिद्धि ष्मातसे शुशुक्वानापो न द्वीपं दधति प्रयांसि' ऋ० (१, १६९, ३) इत्यत्र 'अग्निः, प्रयांसि=चरुपुरोडाशादिहवींषि, दधति=धारयन्ति ददति वा यजमानाः' इति दर्शितवान् विकल्पम्। 'प्राता रत्नं प्रातरित्वा दधाति' ऋ० (१,१२५,१) इत्यत्र 'रत्नम्=रमणीयं निष्कादिकम्, प्रातः=प्रभातकाले, दधाति=अस्मत्संनिधौ स्थापयति, ददाति' इति दर्शितवान् आरोपस्य क्रममपि। संनिधौ स्थापनेन स्वस्वत्वनिवृत्तिपूर्वकत्वाद् दानार्थको जातो धाधातुः। ऋ० (१, १२५, २) इत्यत्रापि सः 'दधाति=दधातु, ददातु' इत्यर्थमाह। ऋग्वेदे धाधातोर्दानार्थं एषु स्थानेष्वन्वेष्टव्यः—

१, ९४, १४; १, २०, ७; १, ६४, १४; १, ४७, १; १, ९३, २; १, १५९, ५; २, २९, ३; ३, २६, ३ इति। प्रायशो द्रव्यसंनिधानेन तादृशोऽर्थो भवति धाधातोः।

ऋ० (३, २६, ३) 'स्वश्व्यं दधातु रत्नममृतेषु जागृविः' इत्यत्र सायणः—'स्वश्व्यम् = शोभनाश्वादिपशुयुक्तम्, रत्नम् = धनम्, नः = अस्माकम्, दधातु = विदधातु, प्रयच्छतु' इति विपूर्वकस्य धाधातोरर्थं कुर्वाणस्तात्पर्यार्थं दानमाह, षष्ठीसांनिध्यात्। वस्तुतस्तु धाधातोर्दानमर्थ आरोपितः, 'धूनुथ द्यां पर्वतान् दाशुषे' ऋ० (५, ५७, ३) इत्यत्र √धूधातोरपि दानमर्थो भवति 'दाशुषे' इति पदसांनिध्यात्। आख्यातचन्द्रिकायां तु दानार्थः पठितः—'दधात्यपि च दाशति' (२, २, ५८), 'तयोर्दधाति दाने च' (३, ३, ११२) इति।

३९-४. विपूर्वको धाधातुः कृधातुपर्यायवाचको दृश्यते। व्युपसर्गादृतेऽपि स करणार्थे प्रयुज्यते। ऋ० (१,६६, ७) 'सेनेव सृष्टामं दधाति' इत्यत्र 'अयमग्निः, अमम्=शत्रूणां भयं दधाति=विदधाति करोति' इत्यर्थः। कृधातुरुत्पादनार्थ इति भयं जनयतीत्यर्थो भवति तात्पर्यतः। 'स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु' इति (१,८९,६) ऋग्वेदे दधातु=विदधातु करोत्वित्यर्थः। एवमेव 'अथा धत्त यजमानाय शं योः' ऋ० (१, ९३, ७) इत्यत्र, 'अधात्पीतिं सं मदा अग्मता वः' ऋ० (४, ३४, १) इत्यत्र च करणमर्थः। 'गमनाय मतिं दधुः' इति (१, १०, १८) वा० रा० निश्चयं चक्रुरित्यर्थः। 'अयं मे धास्यति श्रेयः' इति (१२, २७१, ७) महाभारते 'विधास्यति' इत्यर्थः। 'दधुः कुमारानुगमे मनांसि' भट्टि० (३, ११) 'कृतवन्तः' इति जय०। 'चन्द्राभमाभ्रं तिलकं दधाना' नैष० (६, ६२)=कुर्वाणेति प्रकाशकारः। इह रचनायां तात्पर्यम्। अवेस्ताभाषायां रचनार्थे लभ्यतेऽयं धातुः—'हुदातो' (<सुधितः) अवे० यस्न ९, १६=उत्तमरचनायुतः।

भय-स्वस्ति-शम्-पीति-निश्चयश्रेयःप्रभृतीनां कर्मणां धारणरूपेणार्थेनाऽचारितार्थ्यात् क्रियासामान्यवाचकेन कृधातुना निस्तारः। 'नारायणो दधे निद्रां ब्राह्मं वर्षसहस्रकम्' इति हरिवंश० (१, ८, ३२) निद्रापदसांनिध्यात् करणमर्थः, करणस्य च स्वापे तात्पर्यम्।

३९-५. 'धर्मे दध्यात् सदा मनः' मनु० (१२, २३) संगतिकरणं संयोजनं वार्थो धाधातोः।

३९-६. यद्यपि 'सपत्नीशः शङ्करः सारधाता' हरिवंश० (२, ७२, ४४), 'अमरपुरमतिं सुराङ्गनानां दधतम्' भट्टि० (१०, ५०) इत्यत्र च सारस्य बोधस्य कर्ता=जनयितेति, सुराङ्गनानाममरपुरमतिं दधतम्=कुर्वन्तम्=जनयन्तम् इति तात्पर्यार्थात् कृधातुना निर्वाहः, तथापि—

शशबिन्दोर्दुहितरि बिन्दुमत्यामधान्नृपः।
पुरुकुत्समम्बरीषं मुचुकुन्दं च योगिनम्॥

इति भाग० पु० (९, ६, ३८) धाधातोः स्पष्टं जननमर्थः। वस्तुतस्तु व्युपसर्गपूर्वके धाधातौ कृधातोरेव प्रपञ्चः। अवेस्ताभाषायामुत्पत्तिरूपोऽर्थः—'अर्श-दातो' (<ऋत-धितः)—यस्न ९, १६=ऋतादुत्पन्न इत्यर्थः।

३९–७. 'समीक्ष्य सुकृतिनां दधाति लोकान्' इति (१२, ३२१, २८) महाभारते √धाधातुः प्राप्त्यर्थकः। लोकाद् दधाति=प्राप्नोतीत्यर्थः। अस्यार्थस्य मूलं शतपथब्राह्मणे लभ्यते—'यदा योषा रेतो धत्तेऽथ पयो धत्ते' (७, १, १, ४४) इति।

३९–८. 'विषधराभबिसाभरणा दधे रतिपतिं प्रतिशम्भुविभीषिकाम्' इति (४, २७) नैष० सा भैमी रतिपतिं कामं प्रति शम्भुसंबन्धिनीं विभीषिकाम्=भयानकतां दधे=अङ्गीकृतवतीत्यर्थः, धारणार्थस्येहानौचित्यात्। एवमेव 'जनुरधत्त सती स्मरतापिता' इति (४, ४५) नैषध० सती=दाक्षायणी स्मरतापिता सती हिमवतः सकाशाज्जनुः=जन्म, अधत्त=अङ्गीचकारेत्यर्थः, सामर्थ्यात्।

३९–९. ऋतुसंहारे (६, १३)—

गुरूणि वासांसि विहाय तूर्णं तनूनि लाक्षारसरञ्जितानि।
सुगन्धिकालागुरुधूपितानि धत्ते जनः काममदालसाङ्गः॥

इत्यत्र धाधातुः परिधानार्थकः, वाससां संनिधानात् परिपूर्वकस्य धातोरर्थं व्यक्तीकरोति। 'दधतो मङ्गलक्षौमे' रघु० १२, ८; 'वर्म चान्ये दधुर्द्रुतम्' (१७, ५४) इत्यत्र च भट्टि० परिधानार्थः।

३९–१०. महाभार० (५, ३२, ११०) 'जानाति विश्वासयितुं मनुष्यान् विज्ञातदोषेषु दधाति दण्डम्' इत्यत्र दण्डपदसांनिध्याद् धाधातोः प्रयोगरूपोऽर्थः, दण्डस्य प्रयोगेणैवौचित्यात्।

३९–११. 'जहीहि शोकं वैदेहि प्रीतये धेहि मानसम्' इति भट्टि० (२०, १०) प्रीतये=प्रीत्यर्थं पुनर्मानसं धेहि=घटयेत्यर्थः। रावणविषयकद्वेषत्यागपूर्वकस्य प्रीत्यर्थं मानसधानस्यार्थो नाम चेष्टैव।

३९–१२. 'नामोक्ष्याम वयं शङ्कामिहाधास्यन्न चेद् भवान्' इति भट्टि० (२१, १४) यदि भवान् सीतां वह्नौ नाधास्यत्=न रोपितवान्, तदा वयं किं शुद्धा नेति शङ्कां नामोक्ष्यामेत्यर्थः। अग्निसांनिध्यादिह √धाधातू रोहणार्थकः। इहान्तर्भावितो ण्यर्थः।

३९–१३. 'बुद्धौ न दध्मः खलु शेषबुद्धौ' इति नैष० (३, ३६) स्मरणरूपोऽर्थो धाधातुर्बुद्धिपदसंनिधानात्। बुद्धिपदमिह चित्तवाचकमिति चित्ते न दध्मः। मनसापि न स्मराम इत्यर्थः संपद्यते।

३९–१४—क्तप्रत्ययान्तो हितशब्दे धाधातुरानुकूल्यार्थकः। 'या रोगिणी स्यात् तु कथं हिता' इति मनु० (९, ८२) हिता=अनुकूलेत्यर्थः। महाभारते (१२, १४३, १३) 'आत्मानं योऽभिसंधत्ते सोऽन्यस्य स्यात् कथं हितः' इत्यत्र हितशब्दः सुहृद्वाचकः। इह

कल्याणमभिप्रेयते। तच्च धारणपोषणाभ्यां समर्थितम्। 'अनुक्त्वैव हितं तत् तत् प्राणांस्त्यक्त्वाप्यसाधयत्' इति (५, ६२) राजतरङ्गिण्याम्। 'हितैः साधुसमाचारैः शास्त्रज्ञैर्मतिशालिभिः' इति पञ्चतन्त्रे (१, ३७०) योग्यतार्थः।

३९–१५. आख्यातचन्द्रिकायां धाधातोर्बन्धनरूपोऽर्थो भट्टमल्लेन प्रतिपादितः—'नह्यत्यपि दधाति च' (२, ५, २३६)। रज्ज्वाद्युपपदसंनिधानेन बन्धनाद्यर्थसंभवः। 'युवतयः कुसुमं दधुराहितम्' इति (९, ४०) रघुवंशेऽलकाधिकरणकस्य कुसुमस्य स्थापनेऽपि नेहाऽऽधानमर्थः, अलके कुसुमस्य बन्धनपूर्वकमवलम्बनत्वाद् बन्धनरूपोऽर्थो विज्ञेयो धाधातोः। एवमेवान्येऽप्यर्था यथायथमूह्याः। संधानानुसन्धानावधानाभिधानाद्यर्था धातोरेवेति ते गवेष्याः।

एवं तावद् धाधातुः पञ्चदशस्वर्थेषु प्रयुज्यमानः समीक्षितः—१. निधानम् (आधानम्), २. पोषणम्, ३. दानम्, ४. विधानम् (करणम्), ५. सांगत्यम्, ६. जननम्, ७. प्राप्तिः, ८. अङ्गीकारः, ९. परिधानम्, १०. प्रयोगः, ११. घटनम्, १२. रोपणम्, १३. स्मृतिः, १४. आनुकूल्यम्, १५. बन्धनं चेति।

भारोपीयभाषाया मूलध्वनिर्विद्यते √*धे इति धारणार्थकः स्थापनार्थको वा। अवेस्तालैटिनभाषयोः संस्कृतधकारो दकारतया लभ्यते—अवे० ददाइति (<सं० दधाति), अवे०, पु० पर्सि०–दात, लिथु०-देतस् (<वै० धितः)। ग्रीकभाषायां संस्कृतधकारस्थकारत्वेनोपलभ्यते—एथेतो (<सं० अधित), थेतोस् (<वै० धितः) इति (द्र० जूलि० २३५ पृ०)। अवेस्ताभाषायामपि संस्कृतस्य धकारस्थकारत्वेन दृश्यते—'दथानहे' (<सं० दधानस्य)–यस्न ९, ३१=प्रीतिं कर्तुं। दथन्तम् (<सं० दधन्तम्)–यस्न (९, १) इति। एवं तावदिह तर्पणार्थको धाधातुः। इयं 'धे' इति प्रकृतिः संस्कृतभाषायां 'धेहि' इत्यत्र लभ्यते। प्राकृतभाषायां तु 'धे' इति स्वतन्त्रो धातुर्धारणार्थकः–धेइ—संक्षि० ३३, कुप्र० १०० इति।

४०. § √धू (धूञ्) ५/९ कम्पने (उ)। इह कम्पनार्थे 'धु' इति 'धू' इति च द्विविधो ध्वनिः। प्रथमस्तावत् स्वादौ, अन्तिमश्च स्वादितुदादिक्र्यादिषु पठ्यते।

४०–१. कम्पनं नाम चलनं चालनं वा। 'यत्सीमन्तं न धूनुथ' ऋ० (१, ३७, ६) इत्यत्र 'यत्=यस्मात् कारणात्, सीम्=सर्वतः; अन्तम्=वृक्षाग्रमिव न धूनुथ=चालयथ' इत्यर्थः। 'धुनिरा देवयुं भजति' ऋ० (५, ३४, ५) इत्यत्र धुनिः=कम्पकः शत्रूणामित्यर्थः। एवमेव द्रष्ट० १, १७४, ९। 'आगमिष्यति धुन्वानो गदां दण्डमिवान्तकः' इति (२, ८१, ३३) महाभारते भ्रामणरूपं चालनम्।

४०–२. 'तस्मा इद्विश्वे धुनयन्त सिन्धवः' ऋ० (२, २५, ५) इत्यत्र प्रवाहोऽर्थो धातोः। तथा च सायणः—'सिन्धवः=स्यन्दनशीला नद्यः, धुनयन्त=चलन्ति, एतदभीष्टसिद्ध्यर्थं प्रवहन्तीत्यर्थः। प्रवाहरूपादर्थादेव नदीनामधेयेषु धुनिरित्यप्यन्यतमम्—'दिवेदिवे धुनयो यन्त्यर्थम्' ऋ० (२, ३०, २)। धुनोति स्तोतॄणां पापानीति धुनिरित्यर्थः पश्चात्तनः। सायणः (२, १५, ५) इत्यृग्वेदभाष्ये तादृशमेव व्याख्याति।

४०-३. कम्पनं नाम गतिविशेषः । 'ये ये गत्यर्थास्ते ते प्राप्त्यर्थाः' इति सुप्रथितमिदं वचनं व्याकरणनिकाये । 'धूनुथ द्यां पर्वतान् दाशुषे' इति (५, ५७, ३) ऋग्वेदे द्याम् = दिवि, पर्वतान्=मेघान्, दाशुषे=हविर्दात्रे यजमानाय, वसु=धनानि च, धूनुथ=प्रापयथेत्यर्थः । तात्पर्यार्थस्तु दानेऽवगन्तव्यः । वस्तुतस्तु 'दाशुषे' इति 'वसु' इति च पदयोः सामर्थ्याद् धूञ् इति धातुरिह दानार्थक एव संजातः । धाधातोर्दानार्थस्येवास्यापि बहून्युदाहरणानि संप्राप्यन्ते वाङ्मये । 'वृक्षं पक्वं फलमङ्कीव धूनुहीन्द्र संपारणं वसु' इति (३, ४५, ४) ऋग्वेदे त्वं संपारणम्=अस्मदिच्छायाः सम्यक् पूरकम्, वसु = धनम्, धूनुहि = चालय, प्रयच्छेत्यर्थः । विश्वानि धूनुषे' ऋ० (१०, १३४, ४) त्वं विश्वानि = व्याप्तान्यन्नानि धनानि वाऽवधूनुषे = अभिगमयसि, ददासीत्यर्थः ।

४०-४. 'आ धेनवो धुनयन्तां सबर्दुघाः शशया अप्रदुग्धाः' ऋ० (३, ५५, १६) 'अशिश्वीः=शिशुरहिता धेनवः=वृष्टिद्वारा सर्वस्य प्रीणयित्र्यः, शशयाः=नभसि शयानाः, अप्रदुग्धाः=अक्षीणरसाः, सबर्दुघाः=उदकलक्षणस्य क्षीरस्य दोग्ध्र्यः, युवतयः=परस्परमिश्रणोपेताः, भवन्तीः=दिशो मेघा वा आ धुनयन्ताम्=आ दुहन्तु' इति दोहनार्थको धातुः । दोहनं च कम्पनविशेषः ।

४०-५. 'अप्सु धूतस्य' इति (१०, १०४, २) ऋग्वेदे जलेषु प्रक्षालितस्याभिषुतस्य वार्थः स्पष्टो धूधातोः, अबधिकरणकं धवनं नाम स्नानप्रक्षालनादयोऽर्थाः प्रसङ्गतोऽभ्युपगन्तव्याः ।

४०-६. 'समिन्द्रो रायो बृहतीरधूनुत सं क्षोणी समु सूर्यम्' इति (८, ५२, १०) ऋग्वेदे करणं रमणं चार्थद्वयं धूधातोः । 'य इन्द्रो बृहतीः=महान्ति रायः=हिरण्यादिधनानि समधूनुत=सम्यग् अकरोत् । यश्चेन्द्रः क्षोणी=द्यावापृथिव्यौ समधूनुत=सम्यग् रमयाञ्चक्रे' इत्यर्थद्वयं धातोः, कर्मभेदात् ।

४०-७. वैश्वानरो दस्युमग्निर्जघन्वाँ अधूनोत् काष्ठा अव शम्बरं भेत्' ऋ० (१, ५९, ६) धूधातोः पातनमर्थः, वैश्वानरकर्तृकजलकर्मकपातनस्य दिवः सकाशात् सामर्थ्यमित्यतः शोषणार्थो नेह भवितुमर्हति । 'धुनोत्यघम्' इति भाग० पु० (४,७,६१) √धु (धुञ्) धातुरपसारणनाशाद्यर्थपरकः । एवमेव 'धूतपाप्मा' इत्यादौ ज्ञेयम् । 'अधुन्वन् भूधरैर्भृशम्' इति भट्टि० (१७, १३) तु हननमर्थः । प्राकृतभाषायां √धुअ इति धातुः कम्पनप्रक्षेपणत्यागार्थकः ।

वस्तुतस्तु गतिशुद्ध्यर्थकस्य √धाव् इति धातोः संबन्धोऽनेन विज्ञेयः । 'धूतपाप्मा' इत्यादौ शुद्धिरूपः प्रक्षालनरूपो वार्थः । प्रकम्पनम्, ततः संचलनम्, ततः प्रवाहः प्राप्तिर्दानं वा, दोहनं प्रक्षालनं चेत्यादयोऽर्थाः क्रमशो विकासं प्राप्ताः ।

एवं तावद् √धू (धूञ्) इति धातुः सप्तस्वर्थेषु परीक्षितः–१. कम्पनम् (चलनम्, चालनं वा), २. प्रवाहः, ३. दानम्, ४. दोहनम्, ५. अभिषवः (प्रक्षालनम्), ६. करणम् (रमणम्), ७. पातनम् (अपसारणम्) चेति ।

भारोपीयभाषाया मूलध्वनिरस्ति—√*धोइ इति विकिरणार्थकः। धूमधूलि-प्रभृतयः शब्दा इह निदर्शनम्। अर्मेनियन्भाषायां 'दे-देव्-इम्' इत्ययं नमनार्थकः शब्दः संस्कृतभाषाया 'दोधवीति' इति यङन्तरूपेण सह तुलनीयः।

४१. § √धृ १/९०४ धारणे (आ)। अन्यावपि द्वौ धृधातू इहैव बोध्यौ—अविध्वंसनावस्थानार्थकौ। केचन वैयाकरणाः (क्षी-मै-सा-च-काकृ-कात०) 'अवध्वंसने' इत्यर्थमूरीकुर्वन्ति; केचित् तु (पुरुषकार-जै-शा-हे-वो०) 'अविध्वंसने' इति। मम मतेन तु 'अविध्वंसने' इत्यर्थस्यैव समीचीनता, अवध्वंसनार्थे प्रयोगानुपलम्भात्। उपरि स्वयमेव प्रेक्षावद्भिरवेक्षणीयम्। तौदादिकस्य √धृ इति धातोरवस्थानमर्थः। एवं तावत् त्रयस्त्रिष्वर्थेषु पठिताः। भ्वादौ चौरादिकस्य 'धृ धारणे' इति धातोर्निर्देशं करोति क्षीरस्वामी, किन्तु तत्र नोपलभ्यते।

४१–१. व्रतविशेषणत्वाद् धृतशब्दो ग्रहणार्थकोऽङ्गीकारार्थको वा (१, २५, ८; १, ४४, १४; १, १४१, ९; २, १, ४) ऋग्वेदे (धृतव्रतः)।

४१–२. 'दुर्गे चन ध्रियते विश्वा आ' इति (५, ३४, ७) ऋग्वेदे 'आस्थाप्यते' इत्यर्थः। 'धृङ् अवस्थाने' इत्यस्यार्थ इह तथैव लक्ष्यतेऽपरिवर्तमानः। नैष० (४, ८) 'अधृत यद्विरहोष्मणि मज्जितं मनसिजेन तदूरुयुगं तदा' इत्यत्र 'जीवशेषमतिष्ठत्' इति प्रकाशकारः। म्रियमाणस्य (न तु मृतस्य) स्थितिर्जीवन आरोप्यते।

ऋग्वेदे (७, ८५, ३) 'कृष्टीरन्यो धारयति प्रविक्ता' इत्यत्र, (८, ३२, २५) 'यो गोषु पक्वं धारयत्' इत्यत्र चावस्थापनमर्थः। पक्वम्=पयः। महाभारते (१२, ९, १) मनस आत्मनि धारणं नाम स्थिरीकरणम्। एवमेव तत्रैव (१२, ३१६, १०) 'प्राणायामो हि सगुणो निर्गुणं धारयेन्मनः' इत्यत्र स्थिरीकरणरूपोऽर्थः। 'चिरं चित्ते धृतामपि'—नैष०=अवस्थापितामित्यर्थः। 'धरा धारयते सर्वम्' इति मनु० (९, ३११) 'ययेदं धार्यते जगत्' (गीता० ७, ५) इत्यादावपि तथार्थः।

स्थिरीकरणेऽर्थे महाभारते (७, १६, १)—

तद्बलं सुमहद् दीर्णं त्वदीयं प्रेक्ष्य वीर्यवान्।
दधारैको रणे राजन् वृषसेनोऽस्त्रमायया॥

इत्यत्र स्थिरोऽभूदित्यर्थः।

४१–३. इदं धारणं नाम विभिन्नानामुपपदानां सांनिध्येन विन्यासविशेषेण च विभिन्नेष्वर्थेषु दृश्यते। 'उपानहौ च वासश्च धृतमन्यैर्न धारयेत्' इति मनु० (४, ६) वासो धारणं नाम **परिधानम्**।

४१–४. इदं धारणं नाम प्राणधारणे रूढं विलोक्यते। यद्यपि क्वचित् क्वचित् प्राणकर्मकस्यापि प्रयोगः—'धारयामास च प्राणान्' (महाभार० १,१०७,१५), 'कथञ्चिज्जीवितं दध्रे' (कथासरि० ९,५४), तथापि धातुरयं प्राणान् विनैव जीवनार्थे प्रयुज्यते रूढः। महाभारते (५, ११४, २) 'धत्ते धारयते चेदमेतस्मात् कारणाद् धनम्' इत्यत्र

नीलकण्ठः—'धारयते=जीवयति' इति । महाभार० (५, २६, २५) 'गाण्डीवविस्फारितशब्दमाजावश्रृण्वाना धार्तराष्ट्रा ध्रियन्ते' इत्यत्र गाण्डीवशब्दमश्रृण्वाना धार्तराष्ट्रा जीवन्ति, शब्दं श्रुत्वा तु म्रियन्त एवेति तदाशयः। इह धृधातुर्जीवनार्थकः। एवमेव (२, ४३, ९४) इति हरिवंशे—

चाक्रं मौसलमित्येवं संग्रामं रणवृत्तयः।
कथयिष्यन्ति लोकेऽस्मिन् ये धरिष्यन्ति पार्थिवाः॥

'ये प्राणान् धरिष्यन्ति=जीविष्यन्ति' इत्यर्थः। यद्यपोहाविध्वंसरूपेणार्थेन गतार्थता भाति, तथापि तौदादिकोऽपि प्रयोगो जीवनेऽर्थे उपलभ्यते—'यथा ध्रियेदपत्यं मे तथा कुरु जनार्दन' इति हरिवंश० (२, १११, १२) ध्रियेत्=जीवेदित्यर्थः। 'ध्रियमाणे तु पितरि सर्वेषामेव निर्वपेत्' इति मनु० (३, २२०) 'जीवति' इत्यर्थः।

एवमेव महाभारते (३, १५०, २९)—

वेदैर्यज्ञाः समुत्पन्ना यज्ञैर्देवाः प्रतिष्ठिताः।
वेदाचारविधानोक्तैर्यज्ञैर्धार्यन्ति देवताः॥

इत्यत्र बोध्यम्।

४१–५. बुद्धीन्द्रियमनःप्राणानां धारणं नाम निग्रहः। हरिवंशे (३, २७, ३) 'विमुक्ताः सर्वसङ्गेभ्यो धारयन्ति परिग्रहान्' इत्यत्र 'परिगृह्यन्ते विषया यैस्ते परिग्रहाः=बुद्धीन्द्रियमनःप्राणास्तान् धारयन्ति=निगृह्णन्ति' इत्यर्थः।

४१–६. हरिवंशे (२, ८७, १) 'आत्मनो मांसमुत्कृत्य कपोततुलया धृतम्' इत्यत्र तुलाशब्दो दृश्यत इति तोलनरूपस्यार्थस्य सूत्रम्। एवमेव 'अथ स दक्षिणादूरोरुत्कृत्य स्वमांसपेशीं तुलयाऽधारयत्' इति महाभार० (३, १९७, २१) तुलापदसंनिधानेन धृधातोस्तोलनरूपोऽर्थो विज्ञायते। किन्तु—

महत्त्वे च गुरुत्वे च ध्रियमाणं यतोऽधिकम्।
महत्त्वाद् भारवत्त्वाच्च महाभारतमुच्यते॥

इति महाभारते (१, १, २७३) स्वातन्त्र्येण तोलने प्रयोगो धृधातोः। स चार्थो 'भारवत्त्वात्' इति पदेन सुस्पष्टं व्यज्यते। अधिकपदेनापि संपुष्टिस्तादृशार्थस्य। एवमेव 'द्वे कृष्णले समधृते' इति मनु० (८, १३५) तोलनेऽर्थे धृधातुप्रयोगः। कृष्णलं समं कृत्वा तुलया धृतमिति कुल्लूकः।

४१–७. 'भ्राजमाना तथात्यर्थं दधार परमं वपुः' इति महाभारते (२, ३, २४) नगरी परमं वपुस्तात्कालिकेन निर्माणेन प्राप्तवतीत्यर्थः। वा० रा० (१, ४८, ३२)—

तस्यातिथ्येन दुर्वृत्ते लोभमोहविवर्जिता।
मत्सकाशे मुदा युक्ता स्वं वपुर्धारयिष्यसि॥

इति गौतमोक्तिरहल्यां प्रति।

४१–८. वा० रा० (१, ५६, २०)—

तततोऽस्तुवन् मुनिगणा वसिष्ठं जपतां वरम् ।
अमेयं ते बलं ब्रह्मंस्तेजो धारय तेजसा ॥

इत्यत्र प्रसङ्गात् तेजसा तेजोधारणं नाम विलाप्यैकीकरणम् ।

४१–९. वा० रा० (२, २२, २)—

आसाद्य रामः सौमित्रिं सुहृदं भ्रातरं प्रियम् ।
उवाचेदं स धैर्येण धारयन् सत्त्वमात्मना ॥

इत्यत्र 'आत्मना सत्त्वम् = चित्तम्, धारयन् = प्रकटयन्' इत्यर्थः । 'धारयन् = निगृह्णन्' इत्यर्थस्येहासामर्थ्यम्, इतोऽग्रे 'निगृह्य शोकं रोषं च' इत्यस्याभिधानात् ।

४१–१०. धृधातुरुत्पादनार्थको रक्षणार्थकश्चेह भागवतपु० (३, ३, १७)—

उत्तरायां धृतः पूरोर्वंशः साध्वभिमन्युना ।
स वै द्रौण्यस्त्रसंछिन्नः पुनर्भगवता धृतः ॥

इति पूर्वार्द्धेऽभिमन्युद्वारोत्तरायां धृतः = उत्पादितो गर्भरूपेण, उत्तरार्द्धे च द्रौण्यस्त्रसंछिन्नः सन् भगवता कृष्णेन धृतः=रक्षितः । एवमेवोत्पादनार्थेऽन्योऽपि प्रयोगो महाभारते (३, १४७, ३) हनूमन्तं प्रति भीमसेनोक्तिरूपः—

कौरवः सोमवंशीयः कुन्त्या गर्भेण धारितः ।
पाण्डवो वायुतनयो भीमसेन इति श्रुतः ॥ इति ।

४१–११. महाभारते (५, ३८, १) 'धात्रा तु दिष्टस्य वशे कृतोऽयं तस्माद् वद त्वं श्रवणे धृतोऽहम्' इति धृतराष्ट्रोक्तिर्विदुरं प्रति । श्रवणे सावधानतया तत्परोऽहमिति धृधातोस्तत्परतारूपोऽर्थः । उद्यतः प्रस्तुतो वार्थो निर्धारणीयः ।

महाभारते (५, ५२, ३) 'स श्रेष्ठो जगतः कृष्णः पाण्डवानां जये धृतः' इत्यत्र व्यवसायरूपोऽर्थो धृधातोः । पाण्डवानां जये व्यवसित इत्यर्थः । 'एष धर्मो गवाश्वस्य' इति (९, ५५) मनु० धर्मः = व्यवस्थेति कुल्लूकः । 'मन्त्रिभिर्धार्यते राज्यम्' इति (१, १३७) पञ्चतन्त्रेऽपि व्यवस्थारूपोऽर्थः ।

४१–१२. महाभारते (१३, ९३, ५९)—

ऋषीणां गच्छ सप्तानामरुन्धत्यास्तथैव च ।
दासीभर्तुश्च दास्याश्च मनसा नाम धारय ॥

इत्यत्र मनसा धारणं नाम स्मरणम्, नामपदसंनिधानेनान्येऽर्था वारिताः । याज्ञवल्क्यस्मृतौ तु 'धारयेत् तत्र चात्मानं धारणां धारयन् बुधः' (३, २०१) आत्मानं धारयेन्नाम मनसा स्थिरीकुर्यादिति वीरमित्रोदयः ।

४१–१३. 'एते देवास्त्रयः कृत्स्नं त्रैलोक्यं धारयन्ति वै' इत्यत्र महाभारते (३, ७६, ३५) उत्पत्तिपालनसंहाररूपास्त्रय एवार्था लक्ष्यन्ते । पालनार्थस्तु पूर्वं भागवतोदाहरणे दर्शितः (१८, १० प्रघट्टके) ।

४१–१४ मनु० (३, ७८)—

यस्मात् त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम् ।
गृहस्थेनैव धार्यन्ते तस्माज्ज्येष्ठाश्रमो गृही ॥

इत्यत्र वेदार्थव्याख्यानान्नदानाभ्यां गृहस्थकर्तृकं धारणं नामोपकारः। गृहस्थेनैवोपक्रियन्त इति तदर्थः।

४१–१५. यद्यपि दण्डभुशुण्ड्यादीनां धारणं स्कन्धे भवति हस्ते वा, तथापि दण्डप्रयोगः प्राणिषु क्रियते। 'प्राप्तकालं यथा दण्डं धारयेयुः सुतेष्वपि' इति (१, ७, १०) वा० रा० कुर्युरिति तिलकटीकायामर्थः, दण्डस्वरूपस्यानिश्चयात् क्रियासामान्यवाचकेन कृधातुना कृतस्य विवरणस्यौचित्यात्। तात्पर्यं तु प्रयोगे विज्ञेयम्। मनु० (९, ५६)—

एतद् वः सारफल्गुत्वं बीजयोन्योः प्रकीर्तितम् ।
अतः परं प्रवक्ष्यामि योषितां धर्ममापदि ॥

'अतः=अनन्तरं स्त्रीणां सन्तानाभावे यो धर्मः=कर्तव्यम्, तं वक्ष्यामि' इत्यर्थादिह धर्मशब्दः कर्तव्यपरो धृधातुं करणार्थकमाख्याति। 'न तस्मिन् धारयेद् दण्डम्' इति मनु० (११, २१) धारयेत्=कुर्यादिति कुल्लूकः। एवमेव—'मन्दरं पर्वतं गन्तुं मनो दध्रे महेश्वरः' हरिवं० (२, ८७, १) 'दध्रे मतिं विनाशाय' इत्यादौ कृधातुना विवरणम्। 'तं समये धृत्वा' इत्यत्रापि तथा। कोपरोषादीनां सन्निधाने धृधातोर्विवरणं करणेन जायते। 'चिरं चित्ते धृतामपि' नैष० (१७, २) 'चित्ते कृताम्' इत्यर्थः। तदनु विद्यापदपरामर्शेन चित्ते करणं नामाभ्यासः।

४१–१६. 'अतस्तद्दूतोऽयं शुकः समाश्वास्य तावद् ध्रियतां यावद् दुर्गं सज्जीक्रियते' इति हितोपदेशीये वाक्ये धृधातुरवरोधार्थकः, समाश्वासनपूर्वकधारणेन तथावगमात्।

४१–१७. तेजोदुःखपापादीनां भावानां संनिधानेन सहनरूपोऽनुभवरूपो वाऽर्थो धृधातोः। 'न लोका धारयिष्यन्ति तव तेजः सुरोत्तम' इति (१, ३७, ११) वा० रा० तेजःपदम्, 'प्रस्थितो रथमास्थाय तद्दुःखमपि धारयन्' इति (२, ५९, ७) वा० रा० दुःखपदम्।

नह्यहं पापसंकल्पे पापे पापं त्वया कृतम् ।
शक्तो धारयितुं पौरैरश्रुकण्ठैर्निरीक्षितः ॥

इत्यत्र वा० रा० (२, ७४, ३२) पापपदं धृधातोः कर्म।

४१–१८. धृधातुर्व्यवहारार्थे मनुस्मृतौ प्रयुक्तः—'पशुधर्मो विगर्हितः' (९, ६६) =व्यवहारः (कु०) इति। 'धर्म एव नराशिनाम्' भट्टि० (९, १२२)=आचारः (जय०)। 'अवृत्तिकर्षितः सीदन्निमं धर्मं समाचरेत्' इति (१०, १०१) मनु० अवृत्तिकर्षितपदसान्निध्येन धर्मशब्दो वृत्तिपरः।

४१–१९. 'सोऽहं कथं नाम तवाचरेयमाराधनोयस्य धृतेर्विघातम्' इति रघु० (१६, ८२) मल्लिनाथेन व्याख्यायामुक्तम्—तव धृतेः=प्रीतेः, धृ प्रीताविति धातोः 'स्त्रियां क्तिन्' इति, तन्न विचारसहम्, प्रीत्यर्थकस्य धृधातोरभावात्। 'धृतिर्नेष्टौ स्त्रियां तुष्टौ योगभिद्-धैर्यधारणे' इति मेदिनीकोशे धृतिशब्दस्तुष्ट्यर्थकोऽवश्यं पठ्यते। एतस्य मूलं मनुस्मृतौ (१०, ११६) लभ्यते—

विद्या शिल्पं भृतिः सेवा गोरक्ष्यं विपणिः कृषिः।
धृतिर्भैक्ष्यं कुसीदं च दश जीवनहेतवः॥ इति।

कुल्लूकभट्टोऽत्र 'धृतिः=संतोषः' इत्याह।

महाभारतेऽपि तादृशो ध्वनिः—

क्षत्रियो रक्षणधृतिर्ब्राह्मणोऽनर्थनाधृतिः।
ब्राह्मणो धृतिमान् विद्वान् देवान् प्रीणाति तुष्टिमान्॥

इति (१३, ६०, ३) तुष्टिः संतोषः सुखं वेहाभिधीयते। श्लोकान्ते तु 'तुष्टिमान्' इति पदं स्पष्टतया स्थापितम्। संतोषरूपस्यार्थस्य स्पष्टता त्वव्यवहितपूर्ववर्तिना श्लोकेन ज्ञायते—

श्रेयो वै याचतः पार्थ दानमाहुरयाचते।
अर्हत्तमो वै धृतिमान् कृपणादधृतात्मनः॥

'अधृतात्मनः कृपणात्' इति कृपणविशेष्यत्वेन ज्ञायते विशेषणस्य 'असंतुष्टात्मनः' इत्यर्थः। 'कुक्षौ यावदिमे भवन्ति धृतये भिक्षाहृताः सक्तवः' इति वैराग्य० (३, ९७) धृतिशब्दः सुखवाचकः। महाभारते (१३, ९१, ३०) 'बलं धृतिर्विपाप्मा च पुण्यकृत् पावनस्तथा' इत्यादिदेवेष्वन्यतमो देवो धृतिरिति। नै तैः सर्वैरुदाहरणैर्धृधातोः प्रीतिरूपार्थस्य संगतिः। धृतिरूपदेवस्य नाम्नापि न भवति तस्य तथार्थः, तस्मिन्नेव काले महाभारते प्रीत्यर्थे धृधातोः प्रयोगात्, तादृशकल्पनायां च मानाभावात्।

वस्तुतस्तु धृधातोः स्वीकारार्थो ग्रहणार्थो वेति (द्र० प्रथमः प्रघट्टः) यदङ्गीकृतं तदेव संतोषाय प्रीतये सुखाय वा मन्यते मानवः। अयमेवाङ्गीकाररूपोऽर्थो धृधातोः क्रमशः संतुष्टिप्रीतिसुखादिपरो जातः

४१–२०. धृधातुर्दृढग्रहणार्थे बहुत्र प्रयुज्यते 'हस्ते धृत०' 'त्सरौ धृतः' इत्यादौ। हरिवंशे (३, १२५, १९) तु द्वात्रिंशद्युद्धप्रकारेष्वन्यतमो धृतम् इति प्रकारो ध्यानीयः।

४१–२१. 'इति धर्मस्य धारणा' इति (८, १८४) मनु० धारणाशब्दो निश्चयपरः। 'वेलां समुद्रे सगरश्च दध्रे' इति (१, ४४) बु० च० दध्रे=निश्चिकायेत्यर्थः। अयं निश्चयरूपोऽर्थो मत्यादिशब्दसंनिधानाभावे। तेषां संनिधाने तु कृधातुना विवरणम्, तदनु निश्चयस्मरणाद्यर्थस्य निर्णयः।

४१–२२. 'धृतविधुरधरं महावराहम्' इति (१०, ५९) भट्टिकाव्ये महावराहेति विशेष्यबलेन धृता=उद्धृता, विधुरा=विह्वला धरा मही येनेति धृधातुरुत्पूर्वक-धृधात्वर्थपरः।

एवं तावद् धृधातोर्द्वाविंशतिरर्थाः परीक्षिताः—१. स्वीकारः, २. अवस्थानम्, स्थिरीकरणम्, ३. परिधानम्, ४. जीवनम्, ५. निग्रहः, ६. तोलनम्, ७. प्राप्तिः, ८. विलाप्यैकीकरणम्, ९. प्रकटनम्, १०. उत्पादनं रक्षणं च, ११. तत्परता, १२. स्मरणम्, १३. पालनम्, १४. उपकारः, १५. करणम् (प्रयोगः, अभ्यासः), १६. अवरोधः, १७. अनुभवः, सहनम्, १८. व्यवहारः, आचारः, १९. प्रीतिः, २०. दृढग्रहणम्, २१. निश्चयः, २२. उद्धारश्चेति।

भारोपीयभाषाया मूलध्वनिरस्ति √*'धर' इत्यवस्थानार्थकः। अवेस्ताभाषायां 'दारयेइति' (< धारयति) इति प्रयोगः। पालिभाषाया धातुमञ्जरीसद्दनीत्यादिग्रन्थेषु धारणार्थकः √*धर इति धातुः (धा० मं० ८५०, सद्द० १५९३)। सद्दनीतौ (७५१) 'अवत्थाने' इत्यप्यर्थः। प्राकृतभाषायां धारणे दृढंग्रहणे चेति द्वयोरर्थयोः पठति हेमचन्द्रः (४, २३४, ३३६) धातुम्।

हिन्दीभाषायाम् १. दाढर्येन ग्रहणे प्रयुज्यते √'धरना' इति धातुः; 'पैर धरना' इत्यत्र स परम्पराकारणाद्; २. शरणापन्नतायां प्रणामे वार्थे; ३. स्थापनार्थे; ४. बुन्देल० भाषायां ताडनार्थे; 'पगड़ी पैर पर धरना' इत्यत्र च शरणापन्नतायां धातुर्द्रष्टव्यः।

४२. §√नश् (णश) ४/८१ अदर्शने। वोपदेवस्तु 'नाशे' इत्याह। नाशः=दर्शनाभाव इति प्राञ्चः, लुक्कायनमिति सर्वस्वः (शब्दकल्प०)। निघण्टौ (२, १९) 'नशत्' इति व्याप्तिकर्मा। महाभारते (१३, ६१, २०) 'धर्मो विप्रणशेद् ध्रुवम्' इति, (३, ६०, १८) 'नहि मे शुध्यते भावः कदाचिद् विनशेदपि' इत्यत्र च शब्विकरणको नश्धातुर्नाशार्थक इत्यर्थव्यत्यासो लक्ष्यते। ऋग्वेदे (१०, १४६, १) 'या प्रेव नश्यति' इत्यत्र सायण आह—'नशतिः प्राप्तिकर्मा। व्यत्ययेन श्यन्। संप्रति रक्षणाय प्राप्नोषि' इति। एवं खलु व्याप्तिनाशरूपयोरर्थयोरस्ति किमपि पौर्वापर्यम्।

४२–१. आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा' इति (१०, ९७, ११) ऋग्वेदे यथा जीवगृभोः=मृत्योः सकाशाद् यथा जीवोऽपह्रियते तद्वद् यक्ष्मरूपरोगस्याऽऽत्मा नष्टो भवतीत्यर्थः। अपहरणेऽदर्शनम्। तथा च भट्टि० (१७, १०२) 'सूतो रथमनाशयत्' इत्यत्र 'दूरमपनीतवान्' इति जयमङ्गलः।

४२–२. 'अवेदयानो नष्टस्य देशं कालं च तत्त्वतः' इति (८, ३२) मनु० नष्टस्य=परिच्युतस्येत्यर्थः।

४२–३. 'तथा सीमा न नश्यति' इति (८, २४७) मनु० अन्तर्धानरूपोऽर्थः।

४२–४. 'नाशयन्त्याशु पापानि' इति (११, २४५) मनु० अपमार्जने नश्धातुर्दृश्यते। एवमेव प्रोञ्छनादिरूपा अर्था अपि यथायथमुन्नेयाः।

४२–५. 'गृहीता यदि नष्टः स्यात् कुटुम्बार्थे कृतो व्ययः' इति (८, १६६) मनु० 'मृतः' इति प्राणवियोगानुकूलव्यापारोऽर्थः ।

४२–६. वाल्मीकीयरामायणे (२, ६१, १८)—

तथा ह्यात्तमिदं राज्यं हृतसारां सुरामिव ।
नाभिमन्तुमलं रामो नष्टसोममिवाध्वरम् ॥

इत्यत्र नश्धातुरभ्यवहारार्थकः, भुक्ते सोमे यज्ञस्य सार्थक्यं क्व ? इति ।

४२–७. 'नश्यतीषुर्यथा विद्धः खे विद्धमनुविध्यतः' इति (९, ४३) मनु० नैष्फल्ये नश्धातुः ।

४२–८. द्रुतगतिरूपपलायनेऽर्थे नश्धातुः परवर्तिसाहित्ये प्रयुज्यते—'नेशुश्चित्रा निशाचराः' इति (१४, ११२) भट्टि० 'पलायिताः' इति जयमङ्गलः । आख्यातचन्द्रिकायाम् (२, ३, १२३) भट्टमल्लोऽपि पलायनमर्थमाह । प्राकृतभाषायां 'णसइ' (पिंग०) इति, णस्सइ (कुमा०), णासइ (हे० ४, ३१) इति च पलायनार्थे ।

४२–९. बुन्देलीयभाषायां वैरूप्येऽर्थेऽयं धातुः प्रयुज्यते । 'नसबौ' 'नसाबौ' इति कृषेरुत्पलादिना क्षतौ प्रयोगः । एवमेव 'तं नाशयामि' इति संकल्पपूर्वकं दुर्हृद्देहदारणेन 'नाशितोऽयम्' इति देहस्य (वधे) कर्तनेऽभिप्रयन्ति जनाः । बुन्देलीयभाषायां म्लानतायामपि धातोरस्य प्रयोगो भवति । मनुस्मृतौ (८, ३६७) 'अभिषह्य तु यः कन्यां कुर्याद् दर्पेण मानवः' इत्यत्र विकारार्थे कुल्लूकभट्टेन नश्धातोः प्रयोगोऽकारि । 'दत्तानि हव्यकव्यानि नाशयेते प्रदायिनाम्' इति (३, १७५) मनु० हव्यकव्यानां नाशनं नाम नैष्फल्यम् । वाल्मीकीयरामायणे (२, ६२, १५) मनोरमः प्रयोगो द्रष्टव्यः—

शोको नाशयते धैर्यं शोको नाशयते श्रुतम् ।
शोको नाशयते सर्वं नास्ति शोकसमो रिपुः ॥

एवमेव 'नाशयाम्येष ते दर्पम्' इति (वा० रा० १, ५६, ३) चूर्णनादौ वृत्तिर्द्रष्टव्या धातोः । एतादृशः प्रयोग एतरेयब्राह्मणेऽपि (७, ९) 'यदि कपालं नश्येत्' इत्यादौ प्राप्यते । मूर्छायां वा० रा० (२, ५९,३३) धातुरयं प्रयुक्तः । भ्रंशे, विपरिणामे, विशरणे चापि सन्ति प्रयोगाः प्राद्युपसर्गपूर्वकाः (गीता० ४, ४०; मनु० १, २७; ११, २६३) ।

एवं तावन्नश्धातुर्नवस्वर्थेषु परीक्षितः–(व्याप्तिः) १. अपहरणम्, २. परिच्युतिः, ३. अन्तर्धानम्, ४. अपमार्जनम्, ५. मरणम्, ६. अभ्यवहारः ७. नैष्फल्यम्, ८. पलायनम्, ९. वैरूप्यम्, (वधः, विकृतिः, चूर्णनम्, मूर्च्छा, भ्रंशः, विशरणम्) चेति ।

४३. § √नी (णीञ्) १/८८६ प्रापणे (उ) । भारोपीयभाषायामस्य मूलध्वनयः सन्ति—√*नाइ–, √*नय–, √*'नी' च प्रापणार्थकाः । अवेस्ताभाषायां 'नयेइति' (< नयति) इति प्रयोगः ।

४३-१. 'भास्वती नेत्री सूनृतानाम्' इति (१, ९२, ७) ऋग्वेदे भास्वती = तेजस्विनी सूनृतानाम्=प्रियसत्यात्मकानां शब्दानां नेत्री=प्रणेत्री कारयित्रीत्यर्थः। उषसि हि जातायां मनुष्यप्रमुखाः प्राणिनः स्वस्वव्यापारायेतस्ततः शब्दं कुर्वन्ति। प्रपूर्वकस्य नीधातोः प्रणयनम्, करणम्, उत्पादनं वार्थः। ऋ० (१, ११३, ४) 'भास्वती नेत्री सूनृतानाम्' इत्यत्र सायणः—'भास्वती=विशिष्टप्रकाशनयुक्ता, सूनृतानाम्=वाचाम्, नेत्री=उत्पादयित्री' इत्याह। 'वर्धते ते तपो भीरु व्यजेष्ठा विघ्ननायकान्' इति भट्टि० (६, ६८) विघ्नानां नायकाः=प्रणेतार इत्यर्थः।

४३-२. मनुस्मृतौ (७, २५) श्यामलोहिताक्षस्य दण्डस्य प्रयोगार्थे नीधातुः प्रयुक्तः—

यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा।
प्रजास्तत्र न मुह्यन्ति नेता चेत् साधु पश्यति॥

इत्यत्र नीधातुः प्रवर्तनार्थकः प्रेरणार्थको वा, दण्डपदसांनिध्यात्। नेह दण्डस्य रचनादिकमभिप्रेतम्। अग्रिमे श्लोके तु संप्रपूर्वकस्य धातोरस्मिन्नेवार्थे प्रयोगः— 'तस्याहुः संप्रणेतारं राजानं सत्यवादिनम्' (७, २६) तस्य दण्डस्य संप्रणेतारम् = प्रवर्तयितारम् इति। ततश्च 'तं राजा प्रणयन् सम्यक्' (७, २६) इत्यत्र प्रपूर्वकस्यापि नीधातोः प्रवर्तनरूपोऽर्थः कुल्लूकभट्टेन कृतः। एवं खलूपसर्गप्रयोगमन्तरैव नीधातुः प्रपूर्वकनीधात्वर्थाभिधायकः। एतस्य मूलमृग्वेदे (२, १२, ७) 'अपां नेता स जनास इन्द्रः' इत्यत्र स इन्द्रो जलानां प्रेरक इत्यर्थः। एवमेव 'रथे तिष्ठन्नयति वाजिनः पुरो यत्र यत्र कामयते सुषारथिः' इत्यत्र (६, ७५, ६) ऋग्वेदे नयति = प्रेरयतीत्यर्थः। प्रेरणान्ते प्रापणरूपोऽर्थोऽपि संगच्छते। वस्तुतस्तु प्रेरणप्रापणयोरर्थयोर्नास्ति स्थूलो भेदः, प्रापणस्य प्रेरणपूर्वकत्वात्। मनु० (७, ३०) 'न शक्यो न्यायतो नेतुं शक्तेन विषयेषु च' इत्यत्र स दण्डो मन्त्रिसेनापतिपुरोहितादिसहायरहितेन मूर्खेण लोभवता शास्त्रासंस्कृतबुद्धिपरेण नृपतिना शास्त्रतः प्रणेतुं न शक्यत इत्यर्थः। अस्यार्थस्य स्पष्टता त्वग्रिमे श्लोके प्रपूर्वकस्य धातोः प्रयोगेण तत्रैव संपद्यते—'प्रणेतुं शक्यते दण्डः सुसहायेन धीमता' इति।

४३-३. 'यथावशं नयति दासभार्यः' इति (५, ३४, ६) ऋग्वेदे नयति=प्रापयतीत्यर्थः। इह प्रेरणपूर्वकमेव प्रापणम्। मनु० (६, ८८) 'यथोक्तकारिणं विप्रं नयन्ति परमां गतिम्' मोक्षलक्षणां गतिं प्रापयन्तीत्यर्थः। महाभारते (२, ७३, २) 'नीयतां परलोकाय साध्वयं कुलपांसनः' इत्यत्रापि तथार्थः। 'स्थानान्तरं तदनु निन्युरिमां विमानवाहाः पुनः सुरभितामिव गन्धवाहाः' इति नैष० (११, ४७) निन्युः = प्रापयामासुः (प्र०)।

४३-४. 'यज्ञस्य नेत्री शुचयद्भिरर्कैः' इति (४, ५६, २) ऋ० निर्वाहार्थे वृत्तिर्धातोः। यज्ञस्य नेत्री=निर्वाहयित्र्यौ द्यावापृथिव्यावित्यर्थः।

४३-५. अपपूर्वकस्य नीधातोरपनयनं दूरे प्रापणमर्थः। 'यस्माद् राजभटा मां हि नयन्ते त्वत्सकाशतः' इति वा० रा० (१, ५४, ८) वसिष्ठं प्रति कामधेनोर्वचनम्।

इह 'त्वत्सकाशतः' इत्यपादाननिर्देशान्नीधातुरपनयनार्थो जायते। महाभारते (१२, ९१, २५) 'यदा युक्त्या नयेदर्थान् कामादर्थवशेन वा' इत्यत्रापहरणमर्थः कामादर्थवशेन वेति समभिव्याहारात्। एवमेव 'ये न लोभान्नयन्त्यर्थान् राजानो रजसान्विताः' इत्यत्र महाभार० (१२,११०,८) हरणमर्थः। रघु० (१६, ४९) 'शिलाविशेषानधिशय्य निन्युर्धारागृहेष्वातपमृद्धिमन्तः' इत्यत्र धनवन्तो धारागृहेषु शिलाविशेषानधिशय्याऽऽतपं निन्युः=आतपपरिहारं चक्रुरित्याशयः।

४३–६. 'यथा नयत्यसृक्पातैर्मृगस्य मृगयुः पदम्' इति मनु० (८, ४४) यथा मृगस्य शस्त्रहतस्य रुधिरपातैर्व्याधः पदम्=स्थानं नयति=गवेषयतीत्यर्थः। कुल्लूकभट्टोक्तस्य प्राप्नोतीत्यर्थस्य तु निष्कृष्टता विज्ञेया, गवेषणायाः प्राप्तौ पर्यवसानता।

४३–७. महाभारते (५, १३६, १३)—

उदके भूरियं धार्या मर्तव्यं प्रवणे मया।
यस्य मे भवती नेत्री भविष्यद्भूतिदर्शिनी॥

इति विदुलां प्रति तत्पुत्रोक्तिः। नेत्री=शिक्षयित्रीति नीलकण्ठः, युद्धात् पलायितं भीरुं पुत्रं प्रति तादृश्याः शूरतोत्तेजकशिक्षायास्तया प्रोक्तत्वात्। प्रपूर्वकस्य नीधातोः शिक्षार्थो वाल्मीकीये रामायणे (२, ९७, ३१)। इह तूपसर्गमन्तरा विशुद्धस्य धातोः सोऽर्थः। विपूर्वकनीधातोरपि शिक्षार्थो रघुवंशे (३, २९) 'विनिन्युरेनं गुरवो गुरुप्रियम्' इत्यत्र लभ्यते। प्राकृतभाषायामपि नीधातोः शिक्षणं बोधनं वाऽर्थः (हे० ४, ३३७; विसे० ९१४)।

४३–८. मनु० (८, ४४) 'नयेत् तथानुमानेन धर्मस्य नृपतिः पदम्' इत्यत्र तथाऽनुमानेन दृष्टप्रमाणेन वा धर्मस्य तत्त्वं निश्चिनुयादिति निश्चयरूपोऽर्थो नीधातोः।

मनु० (८, २४५)—

सीमां प्रति समुत्पन्ने विवादे ग्रामयोर्द्वयोः।
ज्येष्ठे मासि नयेत् सीमां सुप्रकाशेषु सेतुषु॥

इत्यत्र ज्येष्ठे मासि ग्रीष्मरवितापसंशुष्कतृणत्वात् प्रकटीभूतेषु सीमालिङ्गेषु राजा सीमां निश्चिनुयादित्यर्थः। इतोऽग्रे 'सीमाज्ञाने नृणां वीक्ष्य' इत्यत्र (मनु० ८, २४९) नीधातोरर्थः स्वयमेव मनुस्मृतिकारेण प्रकटितः। 'एतैर्लिङ्गैर्नयेत् सीमाम्' इत्यत्रापि मनु० (८, २५२) निश्चयरूपोऽर्थः।

एवमेव 'सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समञ्जसम्' इत्यत्र मनु० (८, २५६) ते साक्षिणो लोहितवाससो मस्तके मृल्लोष्ठानि गृहीत्वा यदस्माकं सुकृतं तन्निष्फलं स्यादित्येवमात्मीयैः सुकृतैः शापिताः सन्तस्तां सीमां यथाशक्ति निर्णयेयुरिति निर्णयरूपोऽर्थो धातोः। याज्ञवल्क्यस्मृतावपि (२, १५२) 'रक्तस्रग्वाससः सीमां नयेयुः' इत्यत्र नीधातुनैव तादृशोऽर्थो दर्शितः। 'विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतं दमम्' इति

मनु० (८, २५७) नीधातुर्निश्चयार्थकः। 'विपरीतं नयन्तः' = 'अतथ्यं निश्चिन्वन्तः' इति मन्वर्थमुक्तावली। इतोऽग्रे च मनुस्मृतिकारेणैव निर्णयरूपोऽर्थः प्रकटितः—'सीमाविनिर्णयं कुर्युः' (८, २५८) इति श्लोकयता। एवं तावन्निरुपसर्गपूर्वकस्य नीधातोर्निर्णयरूपोऽर्थस्तमुपसर्गमन्तरापि ज्ञायते। महाभारते (१३, ६, ४७) 'अनुपहत-मदीनं कामकारेण दैवम्। नयति पुरुषकारः सञ्चितस्तत्र तत्र' इति पाठभेदे काम-कारेण = इच्छया यत्र पुरुषकारः संचितस्तत्रैव दैवम् अदीनमनुपहतं चेति नयति = ज्ञापयतीत्यर्थः। 'संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः' (पा० अ० १, ३, ३६) इत्यत्र नीधातोर्ज्ञानरूपस्यार्थस्योदाहरणं काशिकायाम्—'नयते चार्वी लोकायते' इति। तत्र प्रमेयं निश्चिनोतीत्यर्थः। सूत्रे ज्ञानेन प्रमेयनिश्चयोऽर्थः। वैया-करणसिद्धान्तकौमुद्यां दीक्षितस्तु—'तत्त्वं नयते = निश्चिनोति' इत्याह।

४३-९. महाभारते (१३, ६, ४७)—

गुरुमिव कृतमग्र्यं कर्म संयाति दैवं
नयति पुरुषकारः संचितस्तत्र तत्र।

इति पाठे दैवं कर्तृकर्म संयाति = पुरुषकारमनुसरति गुरुं शिष्य इवेत्यर्थः। अत एव पुरुषकारो यत्र यत्र विषये संचितः = सम्यगनुष्ठितस्तत्र तत्र दैवं नयति = आविर्भावयतीत्यर्थः संचितपुरुषकारकर्तृकस्य दैवकर्मकस्य नयनं नामाविर्भावः प्रकटनं वा।

४३-१०. महाभारते (१२, २४०, १३)—

धूतपाप्मा तु तेजस्वी लघ्वाहारो जितेन्द्रियः।
कामक्रोधौ वशे कृत्वा निनीषेद् ब्रह्मणः पदम्॥

इत्यत्र नीधातोर्वशीकरणमर्थः। कामक्रोधौ वशे कृत्वा ब्रह्मणः पदं निनीषेत् = वशीकर्तुमिच्छेदित्याशयः। यद्यपि ब्रह्मणः पदं प्राप्तुमिच्छेदित्यनेनैव गतार्थता, तथापि ब्रह्मपदप्राप्तौ तात्पर्याभावात् कामक्रोधवत् तस्य वशीकारेऽभिप्रायः।

४३-११. कालस्य क्षेपणे यापने वा नीधातोः प्रयोगो भवति। 'कालं स निनाय मनोरथैः' इति (१, ३३) रघुवंशे 'कालं प्रापयामास' इत्यर्थेन न जायते संगति-रिति कालशब्ददर्शनेन 'यापयामास' इत्यर्थः। 'शशमात्रोऽनयद् दिवम्' इत्यत्र भट्टि-काव्येऽपि दिवपदसंनिधानेन यापनरूपोऽर्थः। 'दधौ पटीयान् समयं नयन्नयं दिनेश्वर-श्रीरुदयं दिने दिने' इति नैषधीये चरिते (१, १७) समयस्य नयनं नाम क्षेपणं यापनं वा। 'गमयन्' इति प्रकाशकारः।

४३-१२. आङ्पूर्वको नीधातुरानयनार्थकः। स विनोपसर्गेण नैष० (२, ४०) 'अतिथित्वमनायि सा दृशोः सदसत्संशयगोचरोदरी' इत्यत्र 'आनीता' इति प्रकाश-कारः। जीवातुटीकायां तु—'सा दमयन्ती दृशोरतिथित्वमनायि = नीता दृष्टेत्यर्थः' इति दर्शनरूपोऽर्थः, दृक्पदसमभिव्याहारात्।

एवं तावदिह संक्षेपतो द्वादशार्थाः परीक्षिता नीधातोः—१. प्रणयनम् (करण-मुत्पादनं वा), २. प्रवर्तनम् (प्रेरणम्), ३. प्रापणम्, ४. निर्वाहः, ५. अपनयनम् (अपहरणं परिहरणं वा), ६. गवेषणम्, ७. शिक्षा, ८. निश्चयः (निर्णयो ज्ञानं वा) ९. आविर्भावः, १०. वशीकरणम्, ११. क्षेपणम् (यापनम्), १२. आनयनम् (दर्शनं च) इति ।

४४ § √नुद् (णुद) ६/२ प्रेरणे (उ) । वोपदेवस्तु वधार्थकं नुड् इति धात्वन्तरं तुदादौ पपाठ । भारोपीयभाषायां मूलध्वनिस्तु √*नोइद् इति । लैटि० 'नूतो' इति प्रेरणायाम् ।

४४-१. 'नुदस्वादेवयुं जनम्' ऋ० (९, ६३, २४) अदेवयुम्=अदेवकामं जनं राक्षसवर्गं प्रेरयेति सायणः । नुद्धातोः प्रेरणार्थः सामान्यः । तस्य विशिष्टोऽर्थ-स्तादृशतादृशप्रसङ्गेन ज्ञायते । इह राक्षसवर्गस्य प्रेरणं नामापनोदनमपसारणं वा । 'जहि शत्रूँरप मृधो नुदस्व' इति (३,४७,२) ऋ० सोमं पिब ततो नः शत्रूञ्जहि । मृधः= हिंसकान् शत्रून् अपनुदस्वेत्यर्थः ।

४४-२. गृहादित्यादेः प्रेरणं नाम निर्गमनम् । 'ऋचा कपोतं नुदत प्रणोदम्' ऋ० (१०, १६५, ५) इत्यत्र यूयं प्रणोदम्=प्रकर्षेण नोदनीयं बहिष्कर्तव्यं कपोतं पक्षिणं नुदत=अस्माद् गृहात् प्रेरयत=निर्गमयतेत्यर्थः ।

४४-३. शत्रुसेनादीनां प्रसङ्गे नुद्धातोर्बाधारूपोऽर्थो भवति । 'नुदस्व याः परि स्पृधः' इति (९, ५३, १) ऋ० याः स्पृधः=स्पर्धमानाः शत्रुसेना अस्मान् प्रतिबाधन्ते तास्त्वं नुदस्व=प्रेरय बाधस्वेत्यर्थः ।

४४-४. कूपस्य प्रसङ्गे नुद्धातोरर्थ उत्खननमिति । ऋ० (१, ८५, १०) 'ऊर्ध्वं नुनुद्रेऽवतं त ओजसा' इत्यत्र 'अवतम्=कूपम् ऊर्ध्वमुपरि यथा भवति तथा, ओजसा= स्वकीयेन बलेन नुनुद्रे=प्रेरितवन्तः, उत्खातवन्त इत्यर्थः । एवमेव 'ब्रह्म कृण्वन्तो गोतमासो अर्कैरूर्ध्वं नुनुद्र उत्सधिं पिबध्यै' इति (१, ८८, ४) ऋग्वेदे ब्रह्म=हविर्लक्षण-मन्त्रम्, अर्कैः=मन्त्रसाध्यैः स्तोत्रैः सह कृण्वन्तः=मरुद्भ्यः कुर्वन्तः गोतमासः=गोतमा ऋषयः, उत्सधिम्=उत्सो जलप्रवाहोऽस्मिन् धीयते इत्युत्सधिः=कूपस्तं पिबध्यै स्वकीय-पानायोर्ध्वं नुनुद्रे=नुनुदिरे=देशान्तरे वर्तमानं कूपमुत्खातवन्त इत्याकूतम् ।

४४-५. पापकर्मकस्य तमःकर्मकस्य वा नुद्धातोरर्थो भवति विघातो नाशो वा । महाभारते (३, १८५, ३१)—

आदित्यो दिवि देवेषु तमो नुदति तेजसा ।
तथैव नृपतिर्भूमावधर्मान् नुदते भृशम् ॥

इत्यत्र, 'अस्मिन् विवाहे माम्लासीरहं पापं नुदामि ते' इत्यत्र महाभारते (१, ८१, ३३) च विघातरूपोऽर्थः । मनु० (१, ७७) 'विरोचिष्णु तमोनुदम्' इत्यत्र 'नाशनम्' इति कुल्लू० । एतादृशो विघातरूपोऽर्थ ऋ० (१०, ८४, २) द्रष्टव्यः ।

एवं तावदिह नुद्धातोः पञ्चार्थाः परीक्षिताः—१. अपनोदनम् (अपसारणम्), २. निर्गमनम्, ३. बाधा, ४. उत्खननम्, ५. नाशश्चेति ।

४५ § √पच् (डुपचष्) १/९८१ पाके (उ)। इह यद्यपि पाकेन न ज्ञायते विशिष्टोऽर्थः, तथापि महाभाष्यादौ सर्वत्र व्याकरणनिकाये च विक्लित्त्यनुकूलव्यापारस्यैव स्वीकारः[1] ।

४५–१. क्वथनभर्जनादयोऽनेके प्रकाराः पाकस्य । ऋग्वेदे (५, ३४, १) कपालपक्वस्य पुरोडाशस्य चर्चा विक्लित्त्यनुकूलव्यापारानुरूपा । भर्जनेन वस्तूनां विक्लित्तिर्न जायते । ऋ० (४, २४, ७) 'य इन्द्राय सुनवत् सोममद्य पचात्पक्तीरुत भृज्जाति' इत्यत्र पचनभर्जनयोर्भेदः सुतमां स्पष्टः । द्रष्ट० ऋ० (६,१७, ११) पशुपाकः, (१०, ८८, १०) ओषधि-(व्रीह्यादि)-पाकः ।

४५–२. लव्यपरिणतस्य व्रीह्यादेः सम्बन्धेऽपि √पच्धातोः प्रयोगो लभ्यत ऋ० (१०, १०१, ३) 'नेदीय इत्सृण्यः पक्वमेयात्' इत्यत्र सृण्यः=सृणिरङ्कुशः, अङ्कुशवद् वक्रो लवित्रः पक्वम्=स्तम्बम् एयात्=आभिमुख्येन गच्छतीति सायणः । 'सद्य एव सुकृतां हि पच्यते कल्पवृक्षफलधर्मि काङ्क्षितम्' (रघु० ११,५०) । एवमेव (१,६२, ९) 'आमासु चिद्दधिषे पक्वमन्तः पयः' इत्यत्र, (१०,१०६, ११) 'शो न पक्वं मधु गोष्वन्तरा भूतांशो अश्विनोः काममप्राः' इत्यत्र चर्ग्वेदे गोरूधस्यवस्थितस्य पक्वस्य पयसो निर्देशः । पक्वम्=परिणतमित्यर्थः । अन्त्य उदाहरणे तु पक्वस्य=परिणतस्यान्नस्य निर्देशः । परिपक्वतायां च भोगयोग्यता । एवमेव (१, ८, ८) 'पक्वा शाखा न दाशुषे' इत्यत्र बहुभिः पक्वैः फलैरुपेतायाः पनसवृक्षादिशाखायाः, (६, १७, ६) 'आमासु पक्वं शच्या नि दीधः' इत्यत्र च पक्वस्य=परिणतस्य पयस उल्लेखः । अयं परिणामः खलु निष्पत्तिरूपार्थस्यापरपर्यायः (द्रष्ट० ऋ० ६, ४४, २४) । बहुत्र तु पक्वशब्देन गोस्थितस्य निष्पन्नपयसोऽभिप्रायः (ऋ० ६, ७२, ४; ८, ३२, २५; ८, ८९, ७; ८, ७७, ६) । एवं खलु पक्वशब्दो दुग्धवाचकः ।

४५–३. गोदुग्धस्य पक्ववाच्यत्वात् क्वचिद् ऋग्वेदे वृष्ट्यभिमुखीकरणेऽर्थे पच्धातुर्लक्ष्यते–'स पक्षन्महिषं मृगं पित्रे मात्रे विभुक्रतुम्' (८, ६९, १५) इत्यत्र स इन्द्रो विभुक्रतुम्=बहुकर्माणं मेघं पक्षत्=पचति=वृष्टयभिमुखं करोतीत्यर्थं इति सायणः ।

४५–४. मेघसंबन्धाद् वज्रनिर्घोषेण ताडनेऽर्थेऽप्येष प्रयुज्यते—'भिनत्कनीन ओदनं पच्यमानं परो गिरा' (ऋ० ८, ६९, १४) इत्यत्र गिरा=माध्यमिकया वाचा स्तनितलक्षणया पच्यमानम्=वज्रनिर्घोषेण ताड्यमानम् ओदनम्=मेघम् इन्द्रो वृष्ट्यर्थं भिनत्=भिनत्ति' इत्यर्थः ।

४५–५. पक्वस्य परिणतस्य वा वस्तुनो लघीयस्त्वादेकत्र (८, ७५, ७) ऋग्वेदे 'सेनयाग्नेरपाकचक्षसः' इत्यत्राल्पार्थे √पच्धातुप्रयोगः सर्वथा नवीनो मननीयः—'अपाकचक्षसः=अनल्पचक्षसोऽग्नेः' इति सायणः ।

१. द्रष्ट० 'तद्धितान्ताः केचन शब्दाः' इति ग्रन्थस्य भूमिका ।

४५–६. √पच्धातोः परिणामादीनामर्थानामाधारेणान्यत्राप्यारोपः। तेन प्रज्ञा (ज्ञानम्), शुद्धिः, सत्यम् इत्यादयोऽर्था जायन्ते। क्वचिच्च पक्वशब्दो मनोविशेषणत्वेन प्रयुज्यते। 'पाकत्रा स्थन देवाः' (ऋ० ८, १८, १५) इत्यत्र 'पाकत्रा' इत्यनेन विपक्वप्रज्ञाः परिपक्वज्ञाना वा स्तोतारोऽभिप्रेताः। 'यो मा पाकेन मनसा' (ऋ० ७, १०४, ८) इत्यत्र पाकेन=शुद्धेनेति सायणः। 'ये पाकशंसं विहरन्त एवैः' (ऋ० ७, १०४, ९) इत्यत्र पाकशब्दः सत्यवाचकः, शंसपदस्य वचनार्थकस्य संनिधानात्। 'तद्भद्रं तव दंसना पाकाय चिच्छदयति' (ऋ० ३, ९, ७) इत्यत्र पाकः=अर्भकः, तद्वदज्ञमपि यजमानं छदयति=स्वफलप्रदानेन पूजयतीति सायणः। पाकशब्देन (ऋ० ४, ५, २) पाक्याशब्देन (१०, २५, ३) च परिपक्वप्रज्ञता सूचिता। क्वचित् तु पाक्याशब्देन 'अपरिपक्वप्रज्ञता' अपि दर्शिता (ऋ० २, २७, ११)। अस्यैवापरिपक्वज्ञानार्थस्य कारणेन पाकशब्दोऽर्भकार्थको जातः। उणादौ (५, ५३) 'अर्भकपृथुकपाका वयसि' इति सूत्रेण पाकशब्दो निपात्यते। भट्टोजिदीक्षितस्तत्र निपातनप्रकारं दर्शयन्नाह—'पिबतेः कन्' इति 'पच्यते परिणम्यतेऽनेन' इति मुकुटोक्तिं दृढं निराकरोति भानुजिदीक्षितः। इदं सर्वमर्थभेदाच्छब्दभेद[1] इति दृशा। धातूनां विपरीतार्था अनेकत्र लभ्यन्ते (द्रष्ट० √वृधधातुः)।

४५–७. ऋग्वेदे (६, १७, ११) 'पचच्छतं महिषाँ इन्द्र तुभ्यम्' इत्यादौ पशुपाकेन भर्जनादावपि √पच्धातोः प्रयोगप्रवृत्तिः। मनु० (३, ११८) 'अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्[2]' इत्यत्र भर्जनक्वथनादौ सामान्यतः पच्धातुप्रयोगः। मनु० (७, २०) 'शूले मत्स्यानिवापक्ष्यन्' इत्यत्र तु स्पष्टं भर्जने प्रयोगः पच्धातोः। पाणिनेः सूत्रम् इह तुलनीयम् 'शूलात् पाके' (५,४,६५) इति। 'श्रृतं पाके' (६,१,२७) इत्यत्र तु क्षीरहविषोः पाके पच्धातुप्रयोगः। 'भूतानि कालः पचतीति वार्ता' इत्यत्रापि महाभारते विक्लेदो नाभिप्रेयते पच्धातुना। 'अहो पापच्यमानानां निरये स्वैरमङ्गलैः। कालेन भूयसा' इति भाग० पु० (३, २४, २७) भर्जनरूपाऽर्थः। भारोपीयभाषासु पच्धातोर्भर्जनादिरूपः प्रयोगः (द्रष्ट० एलॉयस् वाल्दे, २ ख०, १६ पृ०)।

४५-८. अयं भर्जनरूपोऽर्थो दाहे समारोपितः—'पापच्यमानेन हृदाऽऽतुरेन्द्रियः' भाग० पु० (४, ३, २१)। 'धनोष्मणा पापच्यमानाः' इति मनु० (९, २३१) 'दह्यमानाः' इत्यर्थः। कुल्लूकभट्टेन तु 'विकारं भजन्तः' इत्यर्थो विहित इति विकारे समारोपः।

४५-९. धातूनां पच्यमानविशेषणाद् गलनमार्द्रीभावो वार्थो जायते पच्धातोः—

आलिम्पतीव विधिवत् समन्तादर्चिरुद्धतः।
धातुभिः पच्यमानैश्च ज्वलद्भिश्चैव पादपैः॥

---

१. तुल०—'शब्दाधिक्यादर्थाधिक्यम्' इति महाभाष्यम् (१, १, ४४; ६७)।
२. तुल०—'आत्मने पाचयेन्नान्नम्' महाभारते (३, २, ५८)।

इत्यत्र हरिवंशपुराणे (२, ४२, ५८) तथार्थः। वा० रा० (२, ७१, ३५) 'अशुभाशङ्कि हृदयं शीलं च पततीव मे' इत्यत्र गलनं भिन्नप्रकारकम्।

४५-१०. अन्नस्य जठरजीर्णताया अर्थे पच्धातुः प्रसिद्धः। सुश्रुतसंहितायाम् (१, ७८, ५) तादृशः प्रयोगो लभ्यते। चिकित्सायां नीरोगतायां वापि तत्र प्रयोगोऽनुसंधेयः (१, १५५, २०)।

एवं तावदिह दशस्वर्थेषु पच्धातुः परीक्षितः—१. विक्लित्तिः, २. परिणामः (निष्पत्तिः), ३. वृष्ट्यभिमुखीकरणम्, ४. ताडनम्[1], ५. अल्पता, ६. प्रज्ञा (शुद्धिः, सत्यम्, अर्भकः), ७. भर्जनम्, ८. दाहः, ९. गलनम्, १०. अन्नस्य जठरजीर्णता (नीरोगता) चेति।

४६. § √पत् (पत्लृ) १/८२९ गतौ (प)। सत्यामपि विशिष्टगत्यां सामान्यवचनम्। दिवादावैश्वर्यार्थकः पत्-धातुर्द्रविडानां क्षीरस्वामिना निर्दिष्ट आत्मनेपदी। ऐश्ये गत्यां चेति वोपदेवः। निघण्टौ (२, ११) तु स्पष्टम् ऐश्वर्यकर्मसु 'पत्यते' इति पठ्यते। गत्यर्थकाः √पथ् १, √पत् १०, √पद् ४, √पट् १ इति धातवोऽनेन सह कमपि सम्बन्धं सूचयन्ति। चौरादिकस्त्वाधृषीय इति नेतो भिन्नः। √पथ् धातुरपीतोऽभिन्नतां विकासं वा दर्शयति। उणादौ (४, १२) 'पतस्थ च' इति सूत्रेण पत्धातुतः 'पथिन्' इति शब्दः साध्यते। धातुरेष मुख्यतोऽधोगमनोपरिगमनार्थकः। इह गतौ पादविहरणरूपक्रमिकपादविन्यासादिनपेक्ष्यते।

४६-१. ऋ० (२, १६, ३) 'आशुभिः पतसि योजना पुरु' इत्यत्र पुरु=पुरूणि बहूनि, योजना = योजनानि, पतसि=गच्छसीत्यर्थः। दैवादिकोऽपि धातुर्गमनार्थको लभ्यत ऋग्वेदे (३, ५४, ८) 'एतद्ध्रुवं पत्यते विश्वमेकम्' इत्यत्र एतद् ध्रुवं विश्वम् एकं स्थानमेव पत्यते=अभिगच्छतीत्यर्थः। 'वृचीवन्तः शरवे पत्यमानाः' ऋ० (६,२७,६) इत्यत्र शरवे=हिंसायै त्वां हिंसितुमित्यर्थः। पत्यमानाः=अभिपतन्तोऽभिगच्छन्त इत्यर्थः। एवमेव 'त्वं हि क्षैतवद्यशोऽग्ने मित्रो न पत्यसे' ऋ० (६, २, १) इत्यत्र यद्यप्यग्निपदसंनिधानादैश्वर्यादौ धातोर्वृत्तिः शक्यते कल्पयितुम्, तथाप्यन्नार्थकस्य यशःपदस्य कर्मत्वेनाग्नेरन्नं प्रति गमनस्याभिगमनस्य वौचित्यम्।

४६-२. ऋग्वेदे (८, १०, ६) 'यदन्तरिक्षे पतथः पुरुभुजा' इत्यत्रान्तरिक्षगमनं नामोड्डयनम्। एवमेव 'अन्तरिक्षेण पतति' (१०, १३६,४) इत्यत्रावधेयम्। अवेस्तादिभाषास्वप्ययमुड्डयनार्थकः प्राथम्येन (ऍलायस् वाल्दे० २ ख०, १९ पृ०)। महाभारते (८, १९, १०) 'पततां वराः' इत्यत्र पतच्छब्दः पक्षिवाचकः। 'कथं त्वं पतिता काक सहास्माभिर्ब्रवीहि तत्' (८, ४१, २४) इत्यत्र महाभारते, 'तेषामन्यतमेनाहं पतिष्यामि विहायसम्' (८, ४१, ३०) इत्यत्र महाभारते च काकोक्तौ—

प्रदिशध्वं यथान्यायं केन हंसाः पताम्यहम्।
ते वै ध्रुवं विनिश्चित्य पतध्वं न मया सह॥

---

१. तुल०—पच वलेसे—धा० म० ७'१७ पचेति।

इत्यत्र च स्पष्टं पत्-धातोः प्रयोग उड्डयने विज्ञेयः। एषोऽर्थं उत्पूर्वकपत्-धातुना प्रसङ्गाद्यभावे साधीयोऽभिव्यज्यते। अवेस्ताभाषायाम् 'पतँइथ्या' (<सं० पतन्त्याः) इत्यस्यार्थं उत्पतन्त्या इति (यस्न० ९, १८)।

४६-३. खगादिकर्त्रभावे पतनरूपोऽर्थः—'वज्रस्य यत्पतने पादि शुष्णः' (ऋ० ६, २०, ५), 'तिग्मा यदन्तरशनिः पताति' (ऋ० ४, १६, १७) इत्यादावशनेः पातोऽभिप्रेतः। आख्यातचन्द्रिकायाम् (२, ३, १२१) अधोगतौ वृत्तिः। (संतापज्वरे) पतितया (नैष० ४, ४३) इत्यत्र निमज्जनमर्थः।

४६-४. अप्पदसमभिव्याहारेण तत्कर्तृकपतनं नाम वर्षणम्। 'पतन्ति मिहः स्तनयन्त्यभ्राः' (ऋ० १, ७९, २) इत्यत्र 'मिहः=आपः, पतन्ति=दिवः सकाशात् प्रवृष्टा भवन्ति' इति सायणः।

४६-५. आङुपसर्गपूर्वस्य पत्-धातोरर्थं आपतनम् आगमनमिति। हिन्दीभाषायां तु 'आ पड़ना' इति। ऋग्वेदे (३, ५६, ३) 'त्र्यनीकः पत्यते माहिनावान्त्सः' इत्यत्र तादृशोपसर्गाभावेऽप्यागमनमर्थः, महत्त्ववतः संवत्सराभिमानिनो देवस्याऽऽगमनं पुष्प-फलादिसंपत्तये भवति। विपरीतार्थस्य करणेन तु नायमभिप्रेतोऽर्थः सिध्येत्। (३, ५६, ५) इत्यत्र व्यवहितायामृचि त्वाङ्पूर्वकस्य प्रयोगः कृतः पत्-धातोरागमनेऽर्थे। एवमेव 'स हव्या मानुषाणामिला कृतानि पत्यते' इति (१, १२८, ७) ऋ० पत्यते= पतति=आगच्छतीत्यर्थः।

४६-६. शवः पत्यते धृष्ण्वोजः' इति (३, ३६, ४) ऋ० शवः=बलम्, धृष्णु= धर्षणशीलम् ओजः=पराक्रमलक्षणं तेजः पत्यते=सर्वत्र प्रसरतीत्यर्थः, तेजसस्तथात्वात्।

४६-७. 'श्येनो वसतिं पतामि' इत्यत्र (१, ३३, २) ऋग्वेदे वसतिम्=स्वकीय-नीडरूपां निवासभूमिम्, पतामि=प्राप्नोमीत्यर्थः, वसतिरूपकर्मणः सांनिध्येनोड्डयनार्था-नौचित्यम्। गच्छामीत्ययमर्थोऽपि न सामञ्जस्यमावहति, खगकर्तृकसामान्यपादसंचा-रादिरूपगमनस्येहानभिप्रेतत्वात्। 'त्रिकद्रुकेभिः पतति' इति (१०, १४, १६) ऋ० यमस्तान् प्राप्नोतीत्यर्थः। 'उग्रं तत्पत्यते शव इन्द्रो अङ्ग' इति (ऋ० १, ८४, ९) इहान्तर्भावितण्यर्थाद् व्यत्ययेन श्यन्। उग्रम्=उद्गूर्णम्, शवः=बलम्, इन्द्रः, अङ्ग= क्षिप्रम्, पत्यते=पातयति=प्रापयतीत्यर्थः।

४६-८. 'मह्नाविव्यक्पृथिवीं पत्यमानः पशुष्कविरशयच्चायमानः' इति (७, १८, ८) ऋ० पलायनरूपोऽर्थः पत्-धातोः, 'यागे संज्ञप्तपशुरिव' इति प्रसङ्गेन तत्र वृत्तित्वात्। रघु० (१५, ४८) 'दिशः पपात पत्त्रेण' इत्यत्र धावति स्मेति मल्लिनाथः, पत्त्रेण=विमानेन दिशः प्रति धावनरूपद्रुतगतेरौचित्यात्।

४६-९. 'इयमासुतिश्चारुर्मदाय पत्यते' इत्यत्र (८, १, २६) ऋग्वेदे पत्-धातुः सामर्थ्ये, मदाय=हर्षायेति चतुर्थीविधानसामर्थ्येन तस्य तादृशार्थात्।

४६-१०. पतदिति खगनाम। सूर्योऽप्यन्तरिक्षमार्गेण गच्छंस्तथाऽऽचरति। तत्र चैश्वर्यम्। √तप् > √पत् इति विपर्ययेण वाऽर्थविपर्ययः। संपादनादिद्वारैश्वर्यमिति

वा हेतुः स्यात् तदर्थनिर्णये । 'त्वं विश्वानि स्वनोक पत्यसे' (ऋ० २, १, ८) इतीश्वर-नामैतत्, 'इरज्यति पत्यते' निरु० (२, २१, २) इति तन्नामसु पाठात् । यद्वा पतिभाव-माचरसीत्यर्थः । एवमेव 'हव्यो ददिर्यो नाम पत्यते' (ऋ० २, ३७, ३) इत्यत्र, 'स पत्यत उभयोर्नृम्णमयोर्यदी' (ऋ० ६, २५, ६) इत्यत्र, 'द्युतद्यामा नियुतः पत्यमानः कविः' (ऋ० ६, ४९, ४) इत्यत्र च सामर्थ्यार्थको धातुर्दैवादिकः ।

४६-११. यष्ट्यादिसंबन्धे पत्-धातुः प्रक्षेपणार्थको भवति - 'शम्यापातास्त्रयोऽपि वा' इति (८, २३७) मनु० शम्या=यष्टिस्तस्याः पातः - प्रक्षेप इत्यर्थः ।

४६-१२. पत्-धातोरधोगत्यर्थो वृत्तहीनतायामारोपितो जातः । 'पतनम्' 'पतितः' इत्यादयः शब्दा अद्यापि लोके वृत्तहीनतायामेव गृह्यन्ते । मनु० (९, २००)—

पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत् ।
न तं भजेरन् दायादा भजमानाः पतन्ति ते ॥

इत्यत्र 'पतन्ति' इत्यस्यार्थः 'पापिनो भवन्ति' इति ।

४६-१३. 'वृत्ततस्तु हतो हतः' इति वृत्तहीनताया अनन्तरं समाप्तिः । लोकेऽपि श्रूयते—'अमुकशासनस्य पतनं जातम्' इह पतनं नाम समाप्तिः । रघु० (१२, ८२)—

इतराण्यपि रक्षांसि पेतुर्वानरकोटिषु ।
रजांसि समरोत्थानि तच्छोणितनदीष्विव ॥

इत्यत्र रक्षसां शोणितनदीषु रक्तप्रवाहेष्विव पेतुः=निपत्य मृतानीत्यर्थः ।

४६-१४. प्राकृतभाषायां √'पड' इति धातुरधोगतौ—पडइ (उव०; पि० २१८; २४४) । हिन्दीभाषायां √'पड़ना' इत्ययं जातस्ततो धातुः । अस्यानुकरणादयोऽर्था अपि विकसिताः । यथा 'यह अपने पिता को पड़ा है' इत्यत्र 'पड़ना' इति पितुरा-कृत्याद्यनुकरणार्थकः । एवमेवान्ये बहवोऽर्था विज्ञेयाः ।

भारोपीयभाषाया मूलध्वनिः - √*पैत्, (पैतॅ—: पॅ, प्तो—) इति बाहुल्येनो-त्पतनार्थकः ।

एवं तावच्चतुर्दशार्थाः परीक्षिताः √पत्-धातोः—१. गमनम्, २. उत्पतनम्, ३. पतनम्, ४. वर्षणम्, ५. आपतनम् (आगमनम्), ६. प्रसरणम्, ७. प्रापणम्, ८. पलायनम्, ९. सामर्थ्यम्, १०. ऐश्वर्यम्, ११. प्रक्षेपणम्, १२. पापाचरणम्, वृत्त-हीनता, १३. मरणम्, १४. अनुकरणम् (अनुहरणम्) चेति ।

४७. § √पा १/९०९ पाने (प) । इह √पा २/रक्षणे, √पी (पीङ्) ४/३३ पाने (आ), √पिन्व् (पिवि) १/५८३ सेचने (प), √प्याय् (ओप्यायी) वृद्धौ (आ) इत्यादयो धातवस्तदर्थाश्च तुलनीयाः । पानमोष्ठाभ्यां भवतीत्योष्ठ्यादिः पाधातुरनुकरणध्वनि-मूलकत्वं प्रकाशयति ।

४७–१. 'तेषां पाहि श्रुधी हवम्' (ऋ० १, २, १) तेषाम्=तान् सोमान्, अथवा स्वकीयं भागं पाहि=पिबेत्यर्थः। इह रक्षणार्थकपाधातोः संक्रान्तिः स्पष्टा। पाणिनीयेन नियमेन तु सार्वधातुकमात्रे पिबादेश इति शेषे पास्वरूपं दृश्यते। 'स एषु द्युम्नं पीपयत्सः'—(ऋ० १, ७७, ५) द्युम्नम्=सोमम्, पीपयत्=अपिबदितीह प्यायधातोः स्वरूपं दृश्यते। एवमेव 'ऋतस्य हि धेनवो वावशानाः स्मदूध्नीः पीपयन्त द्युभक्ताः'—(ऋ० १, ७३, ६) धेनवः=गावः, पीपयन्त=क्षीरादिलक्षणं गव्यमपाययन्निति सायणः। प्यायतेर्णिचि च्छान्दसः पीभावः। क्षीरादिपानेन वर्धनं देहरक्षणं च जायते। 'तां पीपयत पयसेव धेनुं कुविद्गिरो अधि रथे वहाथ'—(ऋ० १०, ६४, १२) तां धियं पीपयत=फलेनाप्ययत। तत्र दृष्टान्तः—पयसेव धेनुम्=नवसूतिकां गां क्षीरेण यथाऽऽप्याययन्ति तद्वत्। एवं तावत् पानेन पालनम्। ततश्च 'ब्रह्मप्रियं पीपयन्त्सस्मिन्नूधन्' इत्यत्र (१, १५२, ६) ऋग्वेदे सायणेन 'ऊधोगतेन क्षीरेण युवाभ्यां प्रदेयेन नोऽस्मान् रक्षन्तीत्यर्थः' इति व्याख्यातवता रक्षणं दर्शितम्।

√पिन्व्धातुरपि सेचने, दाने (ऋ० ६, ३९, ५), दोहने (ऋ० ९,७,३), पयसा पूरणे (ऋ० १, ११८, २), वर्धने (ऋ० १, १५१, ६), प्रीणने (ऋ० ३, ३३, १२), वर्षणे (ऋ० ७, ५७, १), पालने (ऋ० ७, ६, ८) च दृश्यते।

४७–२. ऋग्वेदे (१, १७९, ५) समारोपितोऽर्थो दृश्यते—'हृत्सु पीतमुप ब्रुवे' इति। अयं मन्त्रश्चन्द्रपरो व्याख्येयः, मनसोऽभिमानित्वाच्च तस्य पापस्यापि मनस्येव संभावितत्वात्। अस्मिन् पक्षे हृत्सु पीतम्=हृदयस्थितमित्यर्थं इति पानार्थस्याऽऽरोपः स्थितौ।

४७–३. 'तिष्ठन्नूर्ध्वं रजः पिबेत्' इति मनु० (११, ११०) आस्वादयेति मन्वर्थ०, रजसस्तरलत्वाभावेन पानासंभवात्।

४७–४. महाभारते (५, ३४, ४३)—

अकार्यकरणाद् भीतः कार्याणां च विवर्जनात्।
अकाले मन्त्रभेदाच्च येन माद्येन्न तत् पिबेत्॥

इत्यत्र धृतराष्ट्रं प्रति विदुरस्य नीतियुतं वचनम्। इह पानं नामाऽऽश्रयणम्, सर्वेषां मादकपदार्थानां भावानां च पानासंभवात्।

एवमेव तत्रैव (१२, २८०, २०)—

स वै सर्वेषु भूतेषु क्षरश्चाक्षर एव च।
एकादशविकारात्मा जगत् पिबति रश्मिभिः॥

इत्यत्र जगतः पानं कर्तुमशक्यत्वेन धात्वर्थस्य समारोपो ग्रहणे। नीलकण्ठोऽप्यत्रानुकूलः। जयमङ्गलोऽपि भट्टिकाव्यस्य (८, ४९) 'नेत्रैरिव पिबन्तीभिः' इत्यत्र व्याख्यायामाह—'गृह्णन्तीभिः' इति।

वस्तुतस्तु नेत्राभ्यां पानं नाम दर्शनम् (द्रष्ट० हरिवं० ३, ११४, १०; रघु० २, १९; नैष० १, ८५; ३, १०३)। एवमेव कर्णाभ्यां पानं नाम श्रवणम् (द्रष्ट० नैष० ३, ६२; ४, ११७)। इत्थमेव नासाद्युपपदसंनिधानेन गन्धोपादानाद्यर्था यथायथमूह्याः।

४७–५. 'रसातलजलं कृत्स्नं पिबते रसमुत्तमम्' इत्यत्र हरिवंशे (३, ९, ३) संशोषणमर्थः पाधातोर्नीलकण्ठेन व्याख्यातः। इह शोषणार्थकः √'पै' इति धातुस्तुलामर्हति।

४७–६. तत्रैव (१, ४०, १५)—

योऽन्तकाले जगत् पीत्वा कृत्वा तोयमयं विभुः।
लोकमेकार्णवं चक्रे दृश्यादृश्येन वर्त्मना॥

इत्यत्र 'जगत् = पञ्चभूतात्मकं सकारणं पीत्वा = संहृत्य। तोयमयं निर्विशेषं चिन्मात्ररूपं तत्रैव सलिल एको द्रष्टेति सलिलपदप्रयोगात् तादृशं कृत्वा' इति नीलकण्ठः। जगतः पानं नाम संहारः, अन्तकाले संसारस्य तथा प्रसिद्धत्वादिति पाधातोः पानार्थस्य संहाररूपेऽर्थं आरोपः।

४७–७. पालिभाषायां पास्वरूपमेव (धा० म० ५९२, सद्द० ५४१)। प्राकृतभाषायां तु '√पा √पिव √पिअ √पव √पिब √पी √पिज्ज' इति सप्त स्वरूपाणि तस्यैव धातोर्दृश्यन्ते। √पिज्ज इति स्वरूपं कर्मणि। किन्तु दैवादिकः √पिज्ज (<पीय्) इति धातुः कर्तर्यपि (हे० ४, १०, कुमा०) दृश्यते।

भारोपीयभाषाया मूलध्वनिः—√*'पो (इ) : पी' इति पानार्थकः। तत्र सर्वासु भाषासु क्वाप्यर्थविकासो न जातः (द्र० एलॉइस् वाल्दे०, २ ख०, ७१ पृ०)।

एवं खलु षट्स्वर्थेषु प्रयुज्यमानः परीक्षितः पाधातुः—१. पानम्, २. स्थितिः, ३. आस्वादः, ४. आश्रयः (ग्रहणम्, दर्शनम्, श्रवणमित्यादि), ५. शोषणम्, ६. संहारश्चेति।

४८. § √पू (पूञ्) ९/१० पवने (उ)। भ्वादौ[१] तु पूङ् (९५१) धातुरात्मनेपदी। क्षीरस्वामी क्र्यादौ दैवादिकस्यापि पूञ्धातोरुल्लेखं करोति। इह धातोः सामान्यार्थो दर्शितः। पवनस्य भवन्त्यनेके प्रकाराः स्नानम्, तितउना विशोधनं निर्गालनमित्यादयः।

४८–१. ऋग्वेदे (९, ६७, २७)—

पुनन्तु मां देवजनाः पुनन्तु वसवो धिया।
विश्वे देवाः पुनीत मा जातवेदः पुनीहि मा॥

इत्यत्र सामान्यतः पवनरूपोऽर्थः। वायुः सामान्यतः पुनाति लोकमिति स पवनः। तथा चाख्यातचन्द्रिकायाम् (२, ३, ११७) 'पवते वाति वातस्य' इति, 'पवते रक्षणादौ च सोमस्य मरुतो गतौ' इति च (आ० च० ३, ३, १०२)।

---

१. निघण्टौ (२, १४) गतिकर्मा।

४८–२. 'येभिर्नृम्णा च देव्या च पुनते' (ऋ० ९, ७०, ३) इत्यत्र प्रेरणरूपोऽर्थः पूञ्धातोः, अभिषवानन्तरम् (देव्या = देवार्हाणि नृम्णा = बलानि) देवार्हाणां बलानां प्रेरणे साधीयस्त्वात् ।

४८–३. इह कण्डिकायां शोधनरूपा अर्थाः परीक्ष्यन्ते पूञ्धातोः । 'क्रत्वा पुनती धीतिः' इत्यत्र (ऋ० ४, ५, ७) अस्मान् पुनती = शोधयित्री धीतिः = मतिरित्यर्थ इति मत्या शोधनम् । 'पवित्रवन्ता चरतः पुनन्ता' इति (१०, २७, १७) ऋ० ध्यानसाधन-प्रणवमन्त्रवन्तौ पुनन्ता=शुद्धौ प्रणवध्यानेनाऽऽत्मानं संस्कुर्वन्तावित्यर्थः । 'पुनन्ति धीरा अपसो मनीषा' इति (३, ८, ५) ऋ० मनीषा = बुद्ध्या तं यूपं पुनन्ति प्रक्षालना-दिभिः शोधयन्तीत्यर्थः । 'तं ते सोतारो रसं मदाय पुनन्ति सोमं महे द्युम्नाय' (ऋ० ९, १०९, ११) इति सोमशोधनं प्रतिपादितम् । तच्च पवित्रेण निर्गालनम् ।

४८–४. पवित्रेण निर्गालनेन क्षरणं भवति । 'अनु द्रप्सास इन्दव आपो न प्रवतासरन् । पुनाना इन्द्रमाशत' इत्यत्र (९, ६, ४) ऋग्वेदे द्रप्सासः = द्रुतगतयः, पुनानाः=क्षरन्तः, इन्दवः=सोमाः, प्रवता = प्रवणेन मार्गेण, आपः = आप इव इन्द्रम् अनु असरन्=अनुगच्छन्ति, आशत=व्याप्नुवन्ति चेत्यर्थः । 'पवन्ते वारे अव्यये' इत्यत्र (९, ६४, ५) ऋ० सोमा अव्यये = अविमये वारे=वाले पवित्रे पवन्ते = क्षरन्तीत्यर्थः । इह भौवादिको धातुः ।

४८–५. 'स वह्निः पुत्रः पित्रोः पवित्रवान् पुनाति धीरो भुवनानि मायया' इत्यत्र (१, १६०, ३) ऋग्वेदे पूञ्धातोः प्रकाशनमर्थः । वह्निकर्तृकं मायारूपप्रज्ञाकरणकं भुवनकर्मकं च पवनं नाम प्रकाशनम् ।

४८–६. 'घृतेन नो घृतप्वः पुनन्तु' इत्यत्र (ऋ०१०,१७,१०) घृतेन=प्रत्यक्षेणोद-केन नः अस्मान् पुनन्तु=स्नापयन्त्वित्यर्थः । तथा च भट्टि० (९, ३९) 'शीतैः पूत्वा पयोनिधौ' इत्यत्र कपिरपि पयोनिधौ पूत्वा=स्नात्वेति जयमङ्गलः, पयोनिध्यधिकरण-कस्य पवनस्य स्नानार्थकत्वात् ।

४८–७. 'क्रतुं पुनत आनुषक्' इति (ऋ० ८, ५३, ६) 'क्रतुम्=कर्मविशेषम्, पुनते=कुर्वते' इत्यर्थः, कर्मणोऽनुष्ठानौचित्यात् । एवमेव 'वर्णं पुनाना यशसं सुवीरम्' (ऋ० २, ३, ५) इत्यत्र पूञ्धातोः संपादनं करणं वाऽर्थः, वर्णस्य = वर्णनीयस्य रूप-विशेषस्य संपादनौचित्यात् ।

४८–८. वाक्पदसन्निधानेन पूञ्धातोः स्तुतिरूपोऽर्थः—'सहस्रधारे वितते पवित्रे आ वाचं पुनन्ति कवयो मनीषिणः' इति (९, ७३, ७) ऋ० माध्यमिकां वाचम् आ पुनन्ति=संस्कुर्वन्ति, स्तुवन्ति । य उक्तगुणा मरुतां मातरं माध्यमिकां वाचं स्तुवन्ति, तेषां रुद्रासः=रुद्रपुत्रा मरुतः स्पशः=मध्यमया वाचा वशिनो भवन्तीत्यर्थः । यद्यपी-हाऽऽङ्पूर्वको दर्शितो धातुस्तथाप्युपसर्गस्य कमप्यर्थमनवलोक्यैव समुदाहृतम् ।

४८–९. पापादिविगमेऽपि पूञ्धातुः प्रयुक्तः । पापविगमो नाम पापविनाशः । 'पवमानः सो अद्य नः पवित्रेण विचर्षणिः । यः पोता स पुनातु नः' इत्यत्र (९, ६७,

२२) ऋग्वेदे विचर्षणिः=सर्वस्य द्रष्टा पवमानः, अद्य=इदानीमेव पवित्रेण=पापशोधकेन तेजसा नः=अस्मान् पुनातु=पापरहितान् करोत्वित्यर्थः। मनु० (८, २५७) 'यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः' इत्यत्र पूयन्ते=निष्पापा भवन्तीत्यर्थः, 'विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतं दमम्' इत्युत्तरार्धेनातथ्यनिर्णये दण्डभाक्त्वेन सत्यप्राधान्येन निष्पापत्वात्[1]। ऋ० (६, ६६, ४) 'सन्तोऽवद्यानि पुनानाः' इत्यत्र 'अवद्यानि=पापानि, पुनानाः=शोधयन्तः' इत्यर्थेन पापविनाश उक्तः। एवमेव 'उभे पुनामि रोदसी' (ऋ० १, १३३, १) इत्यत्र हिंसकानामयष्टॄणां वापगमनेन लोकद्वयस्य पवनमुदीरितम्। शोधनेन पापादिविनाशरूपः सोऽर्थः क्रमशो विनाशे रूढो जातः। महाभारते (१४, ७१, १६) इत्यत्र 'पावनः' इत्यस्य 'नाशकः' इत्यर्थमाह नीलकण्ठः। 'ल्वादिभ्यः' (८, २, ४४) इति पाणिनीये सूत्रे वार्त्तिकम्—'पूञो विनाशे' इति। एवं खलु पूञ्धातुः कालान्तरे विनाशे रूढो जातः[2]। परवर्तिभिर्वैयाकरणैस्तस्य कारणमजानानैरुक्तम्—'अनेकार्थत्वाद् धातूनां पूञ् विनाशार्थः' इति (कैयटः)।

४८-१०. भट्टिकाव्ये (९, ५३) उत्क्षेपणमर्थः पूञ्धातोः। 'जगत् पिपविषुर्वायुः कल्पान्त इव दुर्धरः' इत्यत्र कल्पान्ते=युगान्ते वायुरिव दुर्द्धरो जगत् पिपविषुः=पवितुमुत्क्षेप्तुमिच्छुरिति जयमङ्गलः, कल्पान्तीयदुर्द्धरस्य वायोरुत्क्षेप्तृत्वात्।

भारोपीयभाषाया मूलध्वनिः √*'पोइ' इति पवनार्थकः। तत्र सर्वासु भाषासु तादृश एवार्थः (द्र० एलॉइस् वाल्दे०, २ ख०, १३ पृ०)।

एवं तावत् पूञ्धातोर्दशार्था इह परीक्षिताः—१. पवनम्, २. प्रेरणम्, ३. प्रक्षालनम् (वस्त्रेण निर्गालनम्), ४. क्षरणम्, ५. प्रकाशनम्, ६. स्नानम्, ७. करणम् (संपादनम्), ८. स्तुतिः, ९. विनाशः, १०. उत्क्षेपणं चेति।

४९. § √प्लु (प्लुङ्) १/९४३ गतौ (आ)। तुल० √प्रु (प्रुङ्) १/९४२ गतौ (आ)। निघण्टौ (२/१४) प्लवते गतिकर्माऽस्ति पठितः। गतिरियं सामान्या। भारोपीयभाषाया मूलध्वनिरस्ति √*'प्लेइ' इति धावन-प्रवाह-गलन-तरणोत्प्लवन-(उड्डयन)-वर्षण-सेचन-पातन-तरङ्गेषु प्रयुज्यमानः (द्रष्ट० एलॉयस् वाल्दे : फेर्ग्लाइशेन्देस् वर्तरबूख् देर् इन्दोगर्मनिशेन् स्प्राखेन्, २ ख०, ९४ पृ०)।

४९-१. ऋग्वेदे (१०, १५५, ३) 'अदो यद्दारु प्लवते सिन्धोः पारे अपूरुषम्' इत्यत्र सिन्धोः पारे=समुद्रतीरे प्लवते=जलस्योपरि वर्तत इत्यर्थः। ऋ० (१,१८३,५)

---

१. धान्यानां निष्पुलाकीकरणे द्र० मनु० (८, ३३१); पुणंति—णाया० ७, १।

२. तुल० वज्रवाचकः पविशब्दः। पुनाति=विनाशयति—पविः। एवमेव (वा० रा० २, ३०, ३४) इत्यत्र पविः=महाभयरूपः संसारः, 'पविर्वज्रं महाभयम्' इत्यभिधानात्, तस्मात् त्रायते (ति०)।

'युवमेतं चक्रथुः सिन्धुषु प्लवम्' इत्यत्र प्लवो नाम प्लुतिसाधनभूता नौः[1], 'सिन्धुषु' इति दर्शनात्। महाभारते (३, १८७, ३७)—

बीजान्यादाय सर्वाणि सागरं पुप्लुवे तदा।
नौकया शुभया वीर महोर्मिणमरिन्दम॥

इत्यत्र नौकया सागरतरणमभिहितम्। वा० रा० (२, ६९, ९) गोमये ह्रदे नावं विना तरणम्। रघु० (१६, ६०) बाहुभिस्तरणं प्रतिपादितम्। वा० रा० (२, ९५, १०) 'पोप्लूयमानानपरान् पश्य त्वं तनुमध्यमे' इत्यत्रापि पुनः पुनस्तरणम्।

४९–२. उत्पूर्वको धातुरुत्प्लवार्थे। वा० रा० (१, १, ७२)—'शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम्' इत्यत्रोत्प्लवोऽभिप्रेतः। शतयोजनविस्तीर्णस्य समुद्रस्य हनूमत्कर्तृकमुल्लङ्घनं प्रसिद्धम्। तरङ्गैः प्रतिहन्यमानाया नौकाया उत्प्लुत्योत्प्लुत्य गच्छन्त्या अनुकरणेनायमर्थो विकसितः।

४९–३. वायुप्रवाहरूपो धातोरर्थो महाभारते (३, १४६, २)—

ततः पूर्वोत्तरे वायुः प्लवमानो यदृच्छया।
सहस्रपत्रमर्काभं दिव्यं पद्ममुपाहरत्॥ इति।

आङ्गलभाषायां √'ब्लो' इति धातुस्तुलनीयः। मध्यमोच्चजर्मनभाषायाश्च √'ब्लोयेन्' इति धातुरपि वायुप्रवाहार्थकः (द्रष्ट० एलॉयस् वाल्दे०, २ ख०, ९४ पृ०)।

४९–४. महाभारते (३, १६१, २९)—

सायुधा बद्धनिस्त्रिंशा यक्षा दशशतावराः।
ते जवेन महावेगाः प्लवमाना विहायसा॥

इत्यत्रोड्डयनं धातोरर्थः, विहायसेति पदसंनिधानेन तथा प्रतीतेः।

४९–५. वा० रा० (१, ४४, १४)—

प्लावयामास त्वमात्मानं नरोत्तम सदोचिते।
सलिले पुरुषश्रेष्ठ शुचिः पुण्यफलो भव॥

इत्यत्र णिजन्तो धातुः स्नानार्थकः, सलिलाधिकरणकस्य प्लावनस्य तथार्थात्। अयं मज्जनरूपोऽर्थं आङ्पूर्वकेण धातुना स्पष्टं व्यज्यते (मनु० ५, ७७)।

४९–६. वा० रा० (१, ३६, ३)—

त्रीन् पथो हेतुना केन प्लावयेल्लोकपावनी।
कथं गङ्गा त्रिपथगा विश्रुता सरिदुत्तमा॥

---

१. अस्यैव गत्यादिकमनुकुर्वाणस्य बकविशेषस्य 'प्लवः' इति संज्ञा (वा० रा० २, १०३, ४३)। यानभेदस्य शिविकादिरूपस्यापि नामधेयं 'पारिप्लवः' (वा० रा० १, ४३, १९) इति तुलनीयम्।

इत्यत्र धातोर्व्यापनमर्थः, त्रीन् पथो व्याप्नुयादिति दर्शनात्। तिलकोऽपीहानुकूलः।

४९-७. महाभारते (७, ९५, १८)—

शरधाराश्मवर्षाणि व्यसृजत् सर्वतोदिशम्।
निघ्नन् रथवराश्वौघान् प्लावयामास वाहिनीम्॥

इत्यत्र रथवराश्वौघनिहननपूर्वकं वाहिन्याः प्लावनं नाम विद्रावणमिति प्लावयामास=विद्रावितवानिति नीलकण्ठः।

४९-८. नैषध० (२२, २६) 'पोप्लूयते वासरसेतुनाशादुच्छृङ्खलः पूर इवान्धकारः' इत्यत्र प्लुधातोः प्रसरणरूपोऽर्थोऽन्यत्र सुदुर्लभः, वासरसेतुनाशादुच्छृङ्खलस्य पूरस्य प्रसरणौचित्यात्। जलपूरो बन्धापगमादप्रतिहतप्रसरः सन्नतितरां प्रसरतीत्यर्थः। प्रकाशटीकाकारेण त्वस्यार्थस्य सङ्गतिं चेष्टमानेन 'प्लुङ् सर्पणे' इत्यर्थको धातुर्दर्शितः क्वापि धातुपाठे नोपलब्धः।

४९-९. भट्टि० (५, ४८) 'यथामुखीनः सीतायाः पुप्लुवे बहु लोभयन्' इत्यत्र हेमरत्नमयमृगस्य भ्रमणमभिप्रेतं जयमङ्गलेन। एवमेव 'अमन्थीच्च परानीकमप्लोष्ट च निरङ्कुशः' इत्यत्रापि (१५, ४६) 'भ्रान्तवान्' इत्याह सः। उभयत्रैव मृगकर्तृके कपिकर्तृके च प्लवनेऽनवस्थानमुत्प्लवनं स्पृशत्येव।

वस्तुतस्तु धातोरस्यार्थे मूलतश्चाञ्चल्यमिति तादृशजातीयका अर्थाः सर्वत्र समुन्नेयाः प्रसङ्गतः [द्रष्ट० पारिप्लवाः (रघु० १६, ६१)=चञ्चलाः (सं०)]। प्राकृतधातुप्रकृतयः √पव √पुव √पुव्व इति च स्फुरणोत्प्लवनतरणार्थिकाः (सूअ० १, १, २, ८; पि० ४७३; भग० १५-पत्र० ६७०)। हिन्दीभाषायां जलाशयस्य तलस्पर्शनाद्यर्थे √'पँवरना' (<प्लवनम्) इति धातुः सुतरां नवीनं विकासं सूचयति, अवगाहनादिसम्बन्धात्—'पँवरहिं जानहिं नाहिं' इति कबीरः।

एवं तावदिह संक्षेपेण नवार्थाः परीक्षिताः √प्लुधातोः—१. जलस्योपरि वर्तनम्, २. उल्लङ्घनम् (उत्प्लवनम्), ३. वायुप्रवाहः, ४. उड्डयनम्, ५. स्नानम्, ६. व्यापनम्, ७. विद्रावणम्, ८. प्रसरणम्, ९. भ्रमणं चेति।

५०. § √बन्ध् (बन्ध) ९/३७ बन्धने (प)। स्थैर्यार्थकः √बद् (< √बन्द्) धातुः, विलोडनार्थकश्च बाध्-धातुस्तुलनीयावाकृतितोऽर्थतश्च। भ्वादौ पठितो बन्धनार्थको बध्-धातुः (९५८) नितरां तुलामर्हति। तस्य 'बधेत्' (शब्रा० ५, ३, ५, २८) इत्यादीनि रूपाण्यपि लभ्यन्ते। वोपदेवस्तु तस्य 'बधे निन्दे च' इति निन्दार्थमतिरिक्तमाह। जैनेन्द्रस्त्विह 'बाध् बन्धे' इति पपाठ। भारोपीयो मूलध्वनिस्तु √*भेन्ध् इति बन्धनार्थक एव (एलॉयस् वाल्दे०, २ ख०, १५२ पृ०)। सामान्यो बन्धनार्थः।

५०-१. 'एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु बध्यते' इति (१०, ८५, १५) ऋ०। 'शुनं वरत्रा बध्यन्ताम्' (ऋ० ४, ५७, ४)। 'परिष्ठिता अतृणद् बद्बधानाः सीराः'

(४, १९, ८) ऋ० नदीनां[1] बन्धनमुक्तम् । 'द्रुपदेषु बद्धः' इति (१, १४, १३) ऋग्वेदे द्रोः=काष्ठस्य यूपस्य पदेषु=प्रदेशविशेषेषु बद्धः शुनःशेप इति काष्ठमयं बन्धनमाख्यातम् । 'बबन्ध चैव मे मूर्ध्नि किरीटमिदमुत्तमम्' इति महाभारते (३, १६८, ७५) स्पष्टं बन्धनस्वरूपम् ।

५०–२. बन्धनादस्ति प्रतिबन्धे भेदः । बन्धनस्याशक्यत्वे प्रतिबन्धस्वरूपो विघ्न उपस्थापयितुं शक्यते । 'त्वमुत्साँ ऋतुभिर्बद्बधानाँ अरंहः' इति (५, ३२, २) ऋ० मेघानां प्रतिबन्ध उक्तः, तेषां बन्धनस्य कर्तुमशक्यत्वात् । 'ऋतस्य श्लोको बधिरा ततर्द कर्णा' इति (४, २३, ८) ऋ० कर्णयोः प्रतिबद्धता प्रत्यपादि, तयोः सूक्ष्मयोरिन्द्रिययोर्बन्द्धुमशक्यत्वात् । एवमर्थः सर्वत्र प्रसङ्गतो विज्ञेयः । 'धृतिं बध्नाति यत्र च' इति मनु० (५, ४७) धृतेः प्रतिबन्धे तात्पर्यं नास्तीति तत्र प्रवृत्त्यादिरूपेण स्थिरीकरणमवधेयम् । प्रत्युपसर्गमन्तराऽयमर्थः ।

५०–३. 'त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तः समुद्रे' इति (१, १६३, ४) ऋ० बन्धनशब्दः कारणपरः । मेघो विद्युत् स्तनितम् इत्यन्तरिक्षे त्रीणि वृष्ट्युत्पत्तिनिमित्तानि । अन्नं स्थानं बीजमिति त्रीणि कारणानि ।

५०–४. 'अहमिन्द्र जिघांसतो दिवे ते बद्बधे' इति (१, ८०, १३) ऋ० ते=तव शवः=बलम्, दिवि बद्बधे=बद्धम् अनुस्यूतं व्याप्तमासीदिति व्याप्त्यर्थो बन्ध्धातुः । बलस्य बन्धनाशक्यत्वेन सामर्थ्याद् व्यापनम् । ग्रासमानमतेन (द्र० वर्तरबूख् त्सुम् ऋग्वेद) √बाध् (बाधने) इत्यस्य वृत्तमित्यर्थः ।

५०–५. बद्बधे रोचना दिवि' इति (१, १८, ५) ऋ० दिवि=द्युलोके, रोचना= रोचमानानि दीप्तानि नक्षत्राणि बद्बधे=बबन्ध=स्थापितवान् इत्यर्थः । इह स्थापनमवलम्बनं वार्थः सामर्थ्यात् । (७, ६१, ४) 'रोदसी बद्बधे महित्वा' इत्यत्र तु पृथक्करणपूर्वकं स्थापनमभिप्रेतम्—इयं पृथिवीयं द्यौरिति ।

५०–६. 'आ वां रथो रोदसी बद्बधानः' इति (७, ६९, १), 'वृत्रस्य यद् बद्बधानस्य रोदसी' इति (१, ५२, १०) चर्ग्वेदे बाधनरूपोऽर्थः । तत्र बाध्धातोः पीडनम् (ऋ० ५, २९, ६), निराकरणम् (ऋ० १, ३५, ९), विनाशनम् (ऋ० ६, ५, ६), हिंसनम् (१, ५६, ४) चेत्यादयो विकसिता अर्था द्रष्टव्याः ।

५०–७. संपूर्वकस्य धातोः संबन्धरूपोऽर्थः प्रसिद्धः । स विनोपसर्गेण 'बन्धुः' (ऋ० १, १५४, ५) इत्यादिषु शब्देषु दृश्यते । मनु० (५, ७४) विधिः संबन्धिबान्धवैः' इत्यत्र बान्धवशब्देन च सपिण्डताऽभिहिता । वस्तुतस्तु संबन्धो नाम संपर्कः संगतिर्वा । बँगलाभाषायां सा बन्धुशब्देनेदानीमपि व्यज्यते । महाभारते (५, १४१, १७)—

वधाद् बन्धाद् भयाद् वापि लोभाद् वापि जनार्दन ।
अनृतं नोत्सहे कर्तुं धार्तराष्ट्रस्य धीमतः ॥

---

१. तुल० महाभारते (३, १३५, ३६) 'बन्धिष्ये सेतुना गङ्गां सुखः पन्था भविष्यति' इति ।

इत्यत्र 'वधात्' इत्यनेन बन्धनाद्युक्तमिति 'बन्धाद्' इत्यस्य निर्बन्धात् संबन्धाद् वार्थः समीचीनः।

५०–८. वा० रा० (२, ३७, १२) 'कथं नु चीरं बध्नन्ति मुनयो वनवासिनः' इत्यत्र बन्ध्धातुना परिधानार्थं उक्तः, चीराणां शरीरे बन्धनेन तथार्थात्। तेषां शाखादिष्ववलम्बनरूपप्रसङ्गेन तु नायमर्थो भवेत्।

५०–९. महाभारते (१२, ३२०, १७)—

नेत्राभ्यां नेत्रयोरस्य रश्मीन् संयम्य रश्मिभिः।
सा स्म तं चोदयिष्यन्तो योगबन्धैर्बबन्ध ह॥

इत्यत्र बन्ध्धातोर्वशीकारे वृत्तिः। योगज्ञा सुलभा नाम भिक्षुकी जनकस्य धर्मेषु प्रवेशं लभमाना योगबन्धैस्त्राटकादिभिस्तं वशीचकारेति प्रासङ्गिकोऽर्थः।

५०–१०. 'कामं खलु समारब्धाः फलं बध्नन्ति नीतयः' इति रघु० (१२, ६९) बन्ध्धातोर्जननमर्थः, फलस्येहोत्पादनार्थकत्वात्। भट्टि० (१३, २) 'बद्धो वासरसङ्गे… सहसा संरम्भरसः' इत्यत्र प्रभातकाले रामेण समुद्रविषये संरम्भरसः क्रोधरसो वीराख्यो बद्धः=प्रकटितो जनित इत्यर्थः, क्रोधस्य बन्द्धुमशक्यत्वेन मुख्यार्थस्य तत्राऽऽरोपः प्रकटने।

५०–११. रघु० (१३, ४७) शृङ्गाग्रलग्नाम्बुदवप्रपङ्कोऽसौ चित्रकूटो मे चक्षुर्बध्नातीत्यत्र बन्ध्धातुरासक्त्यर्थकः, चक्षुषो बन्धनाशक्यत्वेन तत्र दर्शनाऽऽसक्तिरभिप्रेयते। मल्लिनाथोऽप्याह—'बध्नाति=अनन्याऽऽसक्तं करोति' इति।

५०–१२. 'तं रागबन्धिष्ववितृप्तमेव' इति रघु० (१८, १९) रागं बध्नन्तीति रागबन्धिनः। इह बन्ध्धातुः प्रवर्तनार्थकः, रागपदसमभिव्याहारेण तादृशार्थात्।

५०–१३. भट्टि० (२, ९) 'क्रमं बबन्ध क्रमितुं सकोपः प्रतर्कयन्नन्यमृगेन्द्रनादान्' हरिः=सिंहो गर्जन्=शब्दं कुर्वन्, ततश्च प्रतिशब्दान् आत्मकृतान् निशम्य, अन्यमृगेन्द्रनादान् प्रतर्कयन् क्रमितुम्=उत्पतितुम्, क्रमम्=यत् सामर्थ्यं तत्, बबन्ध=चकारेत्यर्थ इति बन्ध्धातुरत्र करणे वर्तते, सामर्थ्यस्य बन्धनाशक्यत्वेन बन्ध्धातोः क्रियासामान्यवाचकेन कृधातुना विवरणं कर्तुं साम्प्रतम् इतोहैव ग्रन्थे मया पूर्वं प्रपञ्चितम्। जयमङ्गलस्तु भेदमिममजानान आह—'अनेकार्थत्वाद् धातूनां बन्धिरत्र करणे वर्तते' इति। नैष० (१२, १०४) 'सा यन्नास्य कथापथेऽपि मलिनच्छाया बबन्ध स्थितिम्' इत्यत्र बन्ध्धातोः कृधातुना विवरणम्, स्थितेः=आश्रयस्य बन्धनाशक्यत्वेन तथार्थात्। अयमर्थः प्रकाशकारानुरोधेन। जीवातुटीकाकारस्तु स्थितिम्=अवस्थितिम्, न बबन्ध=न प्रापेति व्याख्यत्। वस्तुतस्तु क्रियासामान्यवाचकेन विवरणाद् यथा स्यात् तथेति सामर्थ्यादेरपि प्रकटनस्यावसरः, अन्येन धातुना विवरणान्न तथा व्यापकतेति भावः।

५०–१४. भट्टि० (७, ७७) 'इत्युक्त्वा सर्व एवास्थुर्बद्ध्वा योगासनानि ते' इत्यत्र योगासनानां बन्धनं नाम विरचनम्। इह यद्यपि कृधातुनापि विवरणं शक्यते

कर्त्तुम्, तथापि योगासनानां विरचनमात्रेण गतार्थता। एवमेव 'बद्ध-विहङ्गममालम्' (भट्टि० १३, २३) इत्यत्र मालानां बन्धनं नाम विरचनम्। बद्धा=विरचिता विहङ्गानां माला पङ्क्तिर्यत्रेतीह गुम्फने तात्पर्यं नास्ति।

५०–१५. भट्टि० (१३, ६) 'बहुकुसुमाऽऽबन्ध-बद्धरामाऽऽवासम्' इत्यत्र बहु-कुसुमानां वृक्षाणामाबन्धनेन परस्परसंश्लेषणेन बद्धो रामावासो यत्रेति विग्रहः। इह बन्ध्धातोः करणरचनघटनेत्यादयोऽर्थाः शक्यन्ते विवरीतुम्। कतम इह युक्ततमः स्यात्? क्रियासामान्यवाचकस्य कृधातोः पुनर्विशिष्टोऽर्थो विचार्यत एव। रचनमपि नेह समर्थम्, वृक्षाणां परस्परं संश्लेषणेन ग्रथनस्येव प्रतीतेरिति घटनेन विवरणं युक्तम्। √घट्धातुर्ग्रन्थ्धातुना कमपि संबन्धं सूचयति (द्रष्ट० कर्मठशब्दः 'तद्धितान्ताः केचन शब्दाः' इति पुस्तके)।

५०–१६. भट्टि० (३, ५) 'ध्वजान् बबन्धुः' इत्यत्र बबन्धुः=उच्छ्रायितवन्त इति जयमङ्गलः, ध्वजपदसमभिव्याहारेण बन्धनस्योत्तोलने सामर्थ्यम्।

५०–१७. नैष० (१५, २१) 'द्वयस्य वर्षाशरदां सदातनीं सनाभितां साधु बबन्ध सन्धया' इत्यत्र बन्ध्-धातुर्धारणार्थकः, दमयन्तीकर्तृकस्य सनाभिता-(तुल्यता)-कर्म-कस्य बन्धनस्याशक्यत्वेन तथार्थात्। इह जीवातुप्रकाशकारावनुकूलौ।

५०–१८. नैष० (२१, २) 'तस्य चीनसिचयैरपि बद्धा पद्धतिः पदयुगात् कठि-नेति' चीनसिचयैः=चीनदेशीयपट्टवस्त्रैः, बद्धाऽपि पद्धतिः=मार्गस्तस्य नलस्य पद-युगात् कठिना कठोरेति हेतोरिति प्रसङ्गः। इह बन्ध्धातुराच्छादनार्थकः, मार्गस्य वस्त्रैराच्छादने सामर्थ्यात्।

एवं तावदिह बन्ध्धातोरष्टादशार्थाः परीक्षिताः—१. बन्धनम्, २. प्रतिबन्धः, ३. कारणम्, ४. व्याप्तिः, ५. स्थापनम्, ६. बाधनम्, ७. संबन्धः, ८. परिधानम्, ९. वशीकरणम्, १०. जननम्, ११. आसक्तिः, १२. प्रवर्तनम्, १३. करणम्, १४. रचना, १५. घटनम् (ग्रथनम्), १६. उत्तोलनम्, १७. धारणम्, १८. आच्छा-दनं चेति।

५१. § √ब्रू (ब्रूञ्) २/३३ व्यक्तायां वाचि (उ)। इहाऽऽर्धधातुके वच् इति प्रकृत्यन्तरम्। 'ब्रुवः पञ्चानामादित आहो ब्रुवः' (३, ४, ८४) इत्याह्-प्रकृत्यन्तरमपि। भारोपीयभाषाया मूलध्वनिस्तु √*'म्रोइ' इति भाषणार्थकः (द्रष्ट० एलॉयस् वाल्दे०, २ ख०, ३१३ पृ०)।

५१–१. अयं धातुर्व्यक्तायां वाचि प्रसिद्धः। (द्रष्ट० ऋ० १, ३५, ६; १०, ६१, १२; १, १३७, ७)।

५१–२. महाभारते (४, ७०, २०)—

एनमष्टशताः सूताः सुमृष्टमणिकुण्डलाः।
अब्रुवन् मागधैः सार्धं पुरा शक्रमिवर्षयः॥

इत्यत्र √ब्रूधातुः स्तुतिवचनः, तादृशप्रसङ्गात्।

५१-३. वा० रा० (१, ६७, १३)—

महर्षेर्वचनाद् रामो यत्र तिष्ठति तद् धनुः ।
मञ्जूषां तामपावृत्य दृष्ट्वा धनुरथाब्रवीत् ॥

इत्यत्र ब्रूधातुर्ज्ञीप्सायाम् इति 'अब्रवीत्=अपृच्छत्' इति तिलकटीका । महाभारते चतुर्षु स्थलेषु ब्रूधातुर्ज्ञीप्सायां नीलकण्ठमतेन । 'उवाच भीमं तरसाभ्युपेत्य राज्ञः प्रवृत्तिं त्विह कुत्र राजा' (८, ६५, ३) इत्यत्र तरसाऽभ्युपेत्यार्जुनमपृच्छदित्यर्थः । 'स एवमुक्तस्तु मुनिर्नारदो वदतां वरः । कथयामास तत् सर्वम्' इत्यत्र (१२, २, १) 'कथयामास' इत्युत्तरेण 'उक्तः' इत्यस्य 'पृष्टः' इत्यर्थः । (१३, ६८, १४)—

गच्छ विप्र त्वमद्यैव आलयं स्वं महाद्युते ।
ब्रूहि सर्वं यथास्वैरं करवाणि किमच्युत ॥

'अच्युत ! किं करवाणि (इति) यथास्वैरं ब्रूहि' इत्यत्र 'किं करवाणि' इति प्रसङ्गेन ब्रूधातोर्ज्ञीप्सार्थः सुव्यक्तः । एवमेव (१४, ३५, ४)—

भगवन्तं प्रपन्नोऽहं निःश्रेयसपरायणः ।
याचे त्वां शिरसा विप्र यद् ब्रूयां ब्रूहि तन्मम ॥

इत्यत्रापि ब्रूहीति दर्शनाद् 'ब्रूयाम्' इति ज्ञीप्सायाम् 'पृच्छामि' इत्यर्थकः । एवं खलु 'दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्' इत्यत्र प्रच्छिनं ग्राह्य इति चेन्न, ब्रूधातोर्ज्ञीप्सार्थस्याप्रसिद्धत्वात् ।

अवेस्ताभाषायां तु 'म्रुये' (=ब्रुवे)—यस्न ९, १७ इत्यत्र 'याचे' इत्यर्थः । भारोपीयभाषाया मूलध्वनेः √*'यँक्' इत्यस्य भाषणमर्थः । गॉथिक्भाषायां 'ब्रूथ्स्' इत्यस्यार्थोऽस्ति—'स्नुषा' इति । पु० च० स्ला०—ब्रूथ्, एँग्लो-सै०—ब्रूड्, पु० उ० ज०-'ब्रूत्' इत्येतेषां त्रयाणां युवतिरित्यर्थः । न० उ० ज०—ब्राउत् (Brout)= वधूः । (द्रष्ट० एलॉयस् वाल्दे०, २ ख०, ३१३ पृ०) । एवं तावत् तत्र महिलावाचकाः शब्दाः पृच्छार्थका ज्ञायन्ते । तदर्थं गवेषणीया तदीया संस्कृतिः । गीतायां दशमेऽध्याये तु 'कीर्तिः श्रीर्वाक् च नारीणाम्' इत्यत्र नारीणां वाग् दर्शिता । यूरोपदेशे महिलानां सा प्रमुखा भवितुमर्हति । विवाहविच्छेदे स्यात् कारणं वाक् पृच्छा चेति द्वयम् ।

५१-४. नैष० (२०, ४८)—

अध्यासिते वयस्याया भवता महता हृदि ।
स्तनावन्तरसम्मान्तौ निष्क्रान्तौ ब्रूमहे बहिः ॥

इत्यत्र बहिर्निष्क्रमणे संभावना क्रियते, न तु तथ्यमुच्यत इति ब्रूधातुः संभावनार्थकः । ब्रूमहे=संभावयाम इति ।

एवं तावद् ब्रूधातोश्चत्वारोऽर्थाः परीक्षिता इह—१. वचनम्, २. स्तुतिः, ३. ज्ञीप्सा, ४. संभावना चेति ।

५२. § √भज् (भज) १/९८२ सेवायाम् (उ)। चुरादौ पृथक्कर्मणि भाज-धातुर्वर्तते। तत्रैव विश्राणने भज् इत्यपि धातुः। 'विश्राणे = विवेचने इत्यन्ये'—क्षी०। स्वामिमतेन तु विश्राणनम् = दानम् इति। भक्षणार्थो भक्ष्-धातुः (तु० ऋ० ८, ९९, ३), याच्ञालाभालाभार्थको भिक्ष्धातुश्च तुलनीयौ। भारोपीयो मूलध्वनिस्तु वर्तते—√*भग् इति दानार्थको विभागार्थको वा (द्र० एलॉयस् वाल्दे०, २ ख०, १२७ पृ०)।

५२–१. 'सिषासन्ती द्योतना शश्वदागादग्रमग्रमिद्भजते वसूनाम्' इति (१, १२३, ४) ऋ० वसूनाम् = धनानां हविर्लक्षणानाम् अग्रमग्रमित्=तत्तच्छ्रेष्ठभागं भजते=सेवते स्वीकरोतीत्यर्थः[1]। 'महस्ते विष्णो सुमतिं भजामहे' इति (१, १५६, ३) ऋ० हे विष्णो! तव सुमतिम्=सुष्टुतिं शोभात्मिकां बुद्धिं वा भजामहे=सेवामहे वयं यजमाना इत्यर्थः। वस्तुतस्तु सेवयाऽऽश्रयो गृह्यते। मनु० (१०, ५९) 'पित्र्यं वा भजते शीलम्' इत्यस्य श्लोकस्यानन्तरम् 'संश्रयत्येव तच्छीलम्' (१०,६०) इति श्लोके 'भजते' इत्यस्य विवरणं स्वयं ग्रन्थकृता 'संश्रयति' इत्यनेन कृतवता भज्-धातोः संश्रयरूपोऽर्थः प्रतिष्ठापितः[2]। ऋग्वेदे (१०, १०६, ९) 'नो भजतं चित्रमप्नः' इत्यत्र चित्रम्=चायनीयम् अप्नः=कर्म, भजतम्=आश्रयतम् इति सायणः। द्रष्ट० महाभार० (३, २७७, ३)। प्रसङ्ग-भेदेन प्राप्तिर्लाभो वार्थो भवति (द्र० ऋ० ३, ३० ७; १, १२५, ६; १, ६८, २; ८, ४, २१; १, १५७, २; ८, ९९, ३; ८ ,२७, ११; ७, १८, १६)। एवमेव महाभारते (१४, ३९, १३), रघु० (८, ४३), नैष० (३, १७; २१, १९) प्राप्तिरूपोऽर्थः। एवं खलु भज्-धातोर्मूलतः सेवा = आश्रयो नाम प्राप्तिरूपोऽर्थः। सेवनेनोपयोगस्तु गृह्यत एव (ऋ० १०, १५, ३; हरिवं० २, ६०, ४३)।

५२–२. ऋ० (५, ७९, ७) 'ये नो राधांस्यश्व्या गव्या भजन्त सूरयः' इत्यत्र नः = अस्मभ्यम्, राधांसि=धनानि, अश्व्या = अश्वैर्युक्तानि, गव्या=गोभिर्युक्तानि गो-समूहानश्वसमूहांश्च भजन्त = भजेरन्=ददुः, सूरयः=दातार इत्यर्थः। इह 'नः' इति पदम्, दातृवाचकम् 'सूरयः' इति पदं च भज्धातोर्दानार्थे सहायके।

५२–३. ऋ० (१०, १०८, ९) 'स्वसारं त्वा कृणवै पुनर्गा अप ते गवां सुभगे भजाम' इत्यत्र हे सुभगे = सरमे, ते = त्वदीयानां गवां समूहं पर्वतादपगमय्य भजाम= त्वं च वयं च विभजाम=विभागं करवामेत्यर्थः। इह प्रसङ्गाद् गोसमूहस्य भजनं नाम विभागोऽभिप्रेतः (द्र० १०, १०९, ७)। विपूर्वकस्य भज्-धातोर्विभागरूपोऽर्थः सुप्रथितः। किन्त्विह तमन्तरैव सोऽर्थो विव्रियते। हरिवं० (१, ८, २) 'अहोरात्रं भजेत् सूर्यः' इत्यत्र देवादीनामहोरात्राणि भजेत् = पृथक् कुर्यादित्यर्थः। मनु० (८, २०८) 'भजेरन् सर्व एव वा' इत्यत्र भजेरन्=विभज्य गृह्णीरन्नित्यर्थः। (९, ११९) 'अजाविकं सैकशफं न जातु विषमं भजेत्' इत्यत्र विभजेदित्यर्थो ग्रन्थकारेण स्वयमेवाग्रे स्फुटीकृतः—'समस्तत्र विभागः स्यात्' (९, १२०) इत्यत्र। एवमेव 'तस्माद् धर्मेण तं भजेत्' (९, १२१), 'ततः स्वमातृतः शेषा भजेरन्निति धारणा' (९, १२४) इत्यादौ

---

१. नैष० ४, ५४। २. श्रिञ् सेवायाम्।

भज्-धातोर्विभागरूपोऽर्थो निर्धारणीयः[1]। पालिभाषाया धा० म० (५२३) भज सेवा (पुत्थकारे) इति। तत्र 'पुत्थकारे' इत्यस्य स्थाने 'पुथक्कारे' इति शुद्धो भाति पाठः।

५२-४. महाभारते (८, ३३, ६२)—

नमोऽस्तु ते ससैन्याय त्र्यम्बकायामितौजसे।
मनोवाक्कर्मभिर्देव त्वां प्रपन्नान् भजस्व नः॥

इत्यत्र 'नः=अस्मान्, भजस्व=सेवस्व' इत्यर्थो नास्ति, प्रसङ्गविरोधात्, 'त्वां प्रपन्नान्' इति विरोधाच्चेत्यतः—त्वां प्रपन्नान् नः=अस्मान्, भजस्व=कामैः पूरयस्वेत्यर्थो युक्तियुक्तो नीलकण्ठोक्तः।

५२-५. भज्धातोर्भक्ष्धातुर्निष्पन्न इति भाषातत्त्वविदः। ऋग्वेदे (७, ८१, २) 'सं भक्तेन गमेमहि' इत्यत्र भक्तपदमन्नवाचकम्। लौकिके संस्कृते भक्तपदमोदनवाचकम्। ओदनं चान्नपर्यायवाचकमेव (द्रष्ट० अ० को० २, ९, ४८)। 'विश्वेदिन्द्रस्य भक्षत' इति (८, ९९, ३) ऋ० भक्षतेति√ भज्धातो रूपम्।

५२-६. महाभारते (७, २०२, ३)—

तिस्रो देवीर्यदा चैव भजते भुवनेश्वरः।
द्यामपः पृथिवीं चैव त्र्यम्बकश्च ततः स्मृतः॥

इत्यत्र भुवनेश्वरकर्तृकं देवीकर्मकं भजनं नाम पालनमभिप्रेतम्।

५२-७. महाभारते (४, ८, ७)—

ततो विराटं समुपेत्य पाण्डवस्त्वदीनरूपं वचनं महामनाः।
उवाच सूदोऽस्मि नरेन्द्र बल्लवो भजस्व मां व्यञ्जनकारमुत्तमम्॥

इत्यत्र भज्धातोर्ग्रहणमर्थः, प्रसङ्गेन तादृशार्थस्यैव सामर्थ्यात्। प्राकृतभाषायां भज्जधातोरयमर्थो दृश्यते।

५२-८. भज्-धातोराचरणमनुष्ठानं वेत्यर्थो मनु० (१, २८) 'स तदेव स्वयं भेजे सृज्यमानः पुनः पुनः' इत्यत्र कर्मण आचरणम्। 'यमान् सेवेत सततं····नियमान् केवलान् भजन्' इति मनु० (४, २०४) भज्-धातुरनुष्ठानार्थकः, 'वेदमेवाभ्यसेन्नित्यम्' (मनु० ४, १४७) इत्यादीनामनुष्ठेयरूपाणां नियमानां व्याख्यानात्।

५२-९. हरिवं० (३, १११, २२) 'आसनानि यथायोगं भेजिरे किल निर्वृताः' इत्यत्र भज्धातोरुपवेशने तात्पर्यम्, आसनपदसंनिधानात्।

५२-१०. रघु० (१,२१) 'जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः' इत्यत्र भज्-धातुरर्जनार्थकः, सुकृतस्य तत्र सामर्थ्यात्।

---

१. ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम्।
भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोः॥ (मनु० ९, १०४)

एवं तावदिह भज्-धातोर्दशार्थाः परीक्षिताः—१. सेवनम् (स्वीकारः आश्रयः, लाभः, उपयोगः), २. दानम्, ३. विभागः, ४. पूरणम्, ५. भक्षणम्, ६. पालनम्. ७. ग्रहणम्, ८. आचरणम् (अनुष्ठानम्), ९. उपवेशनम्, १०. अर्जनं चेति ।

५३. § √भू १/१ सत्तायाम् (प) । चुरादौ २०७ अवकल्कने, २९० प्राप्तौ च धातुद्वयम् । अवकल्कनस्य भिन्ना भिन्ना अर्थाः कृता वैयाकरणैः । अवकल्कनम्=मिश्रीकरणम् इति क्षी०, पीडनम्—मै० (१९९), अवकल्कनम्=चिन्तनम्—सा० (१०,२१२) इति । काशकृत्स्नशाकटायनाभ्यां तु—'अवकल्पने' इत्यपाठि । 'भावकरणे' इति जैनेन्द्रे । 'शुद्धिचिन्तयोर्मिश्रणे' इति वोपदेवोऽपठत् । प्रयोगैः सर्वेषां परीक्षणं कर्तुमुचितम् । प्राप्त्यर्थको भूधातुस्तु चुरादावाधृषीय इति विभाषितणिच्त्वाद् 'भवते' इत्यपि प्रयोगः । वस्तुतस्त्वर्थभेदार्थमेव प्रकृतिभेद आस्थितोऽवगन्तव्यः । भारोपीयभाषाया मूलध्वनिरस्ति √*'भोइ' इति प्रामुख्यतो सत्तायां वृद्धौ निवासे च (एलॉयस् वाल्दे०, २ ख०, १४० पृ०) ।

५३–१. सत्ता नामाऽऽत्मधारणानुकूलव्यापारः । 'यत्र ग्रावा पृथुबुध्न ऊर्ध्वो भवति सोतवे' इति (१, २८, १) ऋ० आत्मधारणानुकूलव्यापारो नाम । बहून्युदाहरणानि तत्र लभ्यन्ते । एतादृशव्यापारकारणात् सत्त्वेऽर्थे बहूनां पदार्थानां संज्ञा जाता—भूतानि (मनु० ८,३०६)=सर्वाणि स्थावरजङ्गमादीनि, भावेषु (रघु० ३,४१)=वस्तुष्वित्यादिः । तथा च भावशब्दः १. सत्ता, २. स्वभावः, ३. अभिप्रायः, ४. चेष्टा, ५. आत्मा, ६. जन्म, ७. क्रिया, ८. लीला, ९. पदार्थः, १०. विभूतिः, ११. बुधः, १२. जन्तुरिति द्वादशार्थेषु मेदिनीकोशे (वे २०) दृश्यते । 'भोति' इति पालिप्राकृतभाषयोः, 'होइ, होअइ' इति प्राकृत० (कप्प, उव्व, महा), √होना इति हिन्द्यां च सा परम्पराऽद्यापि लभ्यते । भकारस्य हकारत्वेन विकासः प्राकृतहिन्दीभाषयोरेव न लभ्यते, अपि तु संस्कृतभाषायामपि स जायते—'गृभ्णाति > गृह्णाति' इति वैदिकसंस्कृताल्लौकिकसंस्कृते । 'शाकद्वीपेश्वरं चापि भव्यं चक्रे प्रियव्रतः' (विष्णु० २,१४) इत्यत्र शाकद्वीपेश्वरस्य भव्यस्य नामधेयम् । तदेव नामधेयं नैषधीये चरिते (११, ३७) —'नन्वत्र हव्य इति शाकद्वीपप्रशासिनि' इत्यत्र 'हव्यः' इति लभ्यते । अवेस्ताभाषायां तु भूधातोरेतादृशो विकासो न जातः । तत्र खलु भकारो बकारत्वेन परिणतः—अबवत् (< अभवत्)–यस्न ९, १५ इति । आङ्गलभाषायाम् √'बी' इति । ग्रीकलैटिनादिभाषासु भकारस्य फकारो लक्ष्यते—ग्री० फुओमै (< भवामि), लै०—फूत (< भूत–) इति (एलॉयस् वाल्दे०, २ ख०, १४० पृ०) । इह सर्वत्राऽऽत्मधारणानुकूलव्यापार एव । (तुल० 'द्रव्यं च भव्ये' पा० अ० ५, ३, १०४) भव्यः=आत्मवानिति काशिका । काशकृत्स्नधातुव्याख्यानस्य कन्नडटीकायां भूधातोरिमे दशार्था निर्दिष्टाः—

सत्तायां मङ्गले वृद्धौ निवासे व्याप्तिसम्पदोः ।
अभिप्राये च शक्तौ च प्रादुर्भावे गतौ च भूः ॥ इति ।

सत्ताया उदाहरणं च तत्र 'विरला भवन्ति सन्तः, सन्तीत्यर्थः' इति ।

५३–२. संपूर्वकस्योत्पूर्वकस्य प्रपूर्वकस्य च भूधातोरुत्पत्तिरूपोऽर्थः। 'आविः' 'प्रादुः' इत्येतयोः पूर्वप्रयोगेऽपि सोऽर्थः। 'यं मातापितरौ क्लेशं सहेते संभवे नृणाम्' इति मनु० (२, २२७), 'भूतभावोद्भवकरः' इति गीता० (८, ३)। एतैरुपसर्गैविनापि विशुद्धस्य भूधातोरुत्पत्तिरूपोऽर्थो लभ्यते। 'युवं राधोभिरकवेभिरिन्द्राग्ने अस्मे भवत-मुत्तमेभिः' इति (६, ६०, ३) ऋ० इन्द्रम् अग्निं च प्रति प्रार्थना यद् युवां धनैः सहाऽ-स्मासु भवतम्=आविर्भवतम् इत्यर्थः। महाभारते (१२, २९५, ३४) 'ततः फलार्थं सर्वस्य भवन्ति ज्यायसे गुणाः' इत्यत्र भवन्ति=उत्पद्यन्त इति नीलकण्ठः, फलप्राप्त्यर्थं गुणानां प्रादुर्भावस्यौचित्यात्। हरिवं० (१, ४१, ३९)—

वाराह एष कथितो नारसिंहमतः शृणु।
यत्र भूत्वा मृगेन्द्रेण हिरण्यकशिपुर्हतः॥

यत्र भूत्वा=प्रादुर्भूय मृगेन्द्रेण हिरण्यकशिपुर्हत इति भूधातुः स्पष्टमाविर्भावार्थकः। एवमेव तत्रैव 'एषोऽनन्तः पुरा भूत्वा पद्मनाभ इति स्मृतः' (१, ४८, १८) इत्यत्र, 'भवकाले भवत्येष लोकानां लोकभावनः' (१, ५०, २२) इत्यत्र चाविर्भावरूपोऽर्थः। (द्र० हरिवंश० ३, ७, १० भूतभव्यशब्दौ)। 'भवाप्ययौ हि भूतानाम्' गीता० (११, २) इत्यत्रोत्पत्तिः सृष्टिर्वार्थः। 'शृङ्गारचेष्टा विविधा बभूवुः' इत्यत्र रघु० (६, १२) विविधाः शृङ्गारचेष्टा उत्पन्ना इत्यर्थः। एवमेव 'पितुर्वधभवेन मन्युना' इत्यत्र रघु० (११, ६७) उद्भवरूपोऽर्थो विज्ञातव्यः। 'भवे भवे तेन ममैवमेवम्' इति (४, २६) नागा० भवे भवे=जन्मनि जन्मनीत्यर्थः।

५३–३. 'देवा भवथ' इति (३, ५४, १७) ऋ० देवत्वं प्राप्नुथेत्यर्थः। वा० रा० (१, २७, २७) 'मानसा मे भविष्यध्वमिति तानभ्यचोदयत्' इति विश्वामित्रप्रदत्तान्य-स्त्राणि प्रति रामोक्तिः। 'भविष्यध्वम्' इत्यत्राऽऽत्मनेपदम् इति चौरादिकस्य भूप्राप्ता-वित्यस्य रूपं संभाव्यते। किन्तु नेहार्थसांगत्यम्। एवमेव महाभारते (१२, ३०७, ३१) 'गच्छाम्यबुद्धभावत्वादेषेदानीं स्थिरो भवे' इत्यत्राप्यात्मनेपदम्। 'प्राप्नुयाम्, आत्मानं जानीयाम्' इति नीलकण्ठः। अन्यत्र महाभारते सर्वत्र प्राप्त्यर्थकस्य भूधातोः सन्नन्तः प्रयोगः—'न तिष्ठति स्म सन्मार्गे न च धर्मं बुभूषति' (४, २१, ३७)=प्राप्तुमिच्छति। 'धर्मार्थयुक्तं तु महीपतित्वं ग्रामेऽपि कस्मिंश्चिदयं बुभूषेत्' (५, १, १५) इत्यत्रेदंकर्तृका महीपतित्वकर्मिका प्राप्तीच्छेत्यर्थः। 'तङभाव आर्षः' इति व्याख्यातवता नीलकण्ठेन 'णिचसंनियोगेनैवाऽऽत्मनेपदमित्येके' इति मतान्तरं न पर्यालोचि। 'देशाचारान् सम-याञ्जातिधर्मान् बुभूषते यः स परावरज्ञः' (५, ३३, ११४) इत्यत्रैश्वर्यं प्राप्तुमिच्छतीत्यर्थः। 'प्रशाम्य राज्यं हि सुदुर्लभं त्वया बुभूषितः स्वर्ग इवातपस्विना' (५, १६०, १२५) इत्यत्र त्वयाऽतपस्विना स्वर्ग इव बुभूषितः=प्राप्तुमिष्ट इत्यर्थः। 'भूमिर्भवति भूतानां सम्यगच्छिद्रदर्शना' (६, ९, ७६) इत्यत्रैव महाभारते परस्मैपदं शुद्धं भूधातो रूपमुपलभ्यते प्राप्त्यर्थकस्य। भवति=तत् तत् प्रापयतीति नीलकण्ठः।

५३–४. 'दिवस्पुत्रा अङ्गिरसा भवेम' (ऋ० ४, २, १५) इत्यत्र दिवः=द्योत-मानस्यादित्यस्य पुत्रा वयम् अङ्गिरसो भवेम=भूतिमन्तः स्यामेत्यर्थः, भूतिमत्त्वाद् दीप्यमानैस्तैरद्रिरूपमेवस्य भेदनं कर्तुं शक्यत्वात्। वा० रा० (२, ६७, ३२)—

ये हि संभिन्नमर्यादा नास्तिकाश्छिन्नसंशयाः ।
तेऽपि भावाय कल्पन्ते राजदण्डनिपीडिताः ॥

इत्यत्र राजदण्डनिपीडितास्तेऽपि भावाय=प्रभुत्वाय कल्पन्त इत्यर्थः, इतः पूर्वं 'मत्स्या इव जना नित्यं भक्षयन्ति परस्परम्' इत्यस्य दर्शनात् । एवं खलु भूधातुः संपदर्थकः प्रभुत्वार्थको वा दृश्यते । विपूर्वको भूधातुस्तत्र प्रसिद्ध एव । महाभारते (१२, ११८, ८)—

अलुब्धं लुब्धसंतुष्टं स्वामिमित्रबुभूषकम् ।
सचिवं देशकालज्ञं सत्त्वसंग्रहणे रतम् ॥

इत्यत्र '-बुभूषक-' इति पदमैश्वर्यवर्धनेच्छासूचकमस्ति, प्राप्त्यर्थाभ्युपगमे नेहार्थसंगतेः । नीलकण्ठस्तूभयथाह—'बुभूषकम्=ऐश्वर्यलिप्सुम्' इति । एतादृशेऽर्थे स्वामिमित्रयोरैश्वर्यं प्रति लिप्सुरिति विपरीतोऽर्थो जायते ।

५३-५. ऋ० (१०, १८, ५) 'यथाहान्यनुपूर्वं भवन्ति' इत्यत्र यथा=येन प्रकारेण, अहानि=अहोरात्रात्मकानि दिनानि, अनुपूर्वम्=पूर्वं पूर्वमनुक्रमेण भवन्ति= परिवर्तन्त इत्यर्थः, दिनानां तथात्वात् । हरिवंशपुराणे (१, ८, ४०)—

ते संगताः शुद्धसङ्गाः शश्वद् धर्मविसर्गतः ।
न भवन्ति पुनस्तात युगे भरतसत्तम ॥

इत्यत्र देहादिष्वात्मबुद्धिस्तस्या विसर्गतः=त्यागात् ते पुनर्न भवन्ति=नाऽऽवर्तन्त इति भूधातोरावर्तनमर्थः, मोक्षे तथौचित्यात् ।

५३-६. महाभारते (५, १२८, ४३)—

पराभविष्यन्त्यसुरा दैतेया दानवैः सह ।
आदित्या वसवो रुद्रा भविष्यन्ति दिवौकसः ॥

इत्यत्र भूधातोरर्थं उत्कर्षो जयो वा । भविष्यन्ति=जेष्यन्तीति नीलकण्ठः, 'दानवैः सह दैतेया असुराः पराभविष्यन्ति' इति वाक्यविमर्शेन दानवप्रतिद्वन्द्विनां देवानामुत्कर्षस्य स्वत एवाऽऽपद्यमानत्वात् । प्रपूर्वकस्य भूधातोः प्रकर्षरूपोऽर्थः ।

५३-७. महाभारते (१२, २८, १०)—

ये च विंशतिवर्षा वा त्रिंशद्वर्षाश्च मानवाः ।
परेण ते वर्षशतान्न भविष्यन्ति पार्थिव ॥

इत्यत्र भूधातुः प्राणधारणार्थक इति भविष्यन्ति=जीविष्यन्तीत्यर्थः, 'वर्षशतात् परेण' इति परामर्शात् । हरिवंश० (२, ११३, २४)—

निष्क्रम्य तमसस्तस्मादाकाशे दर्शिते तदा ।
भविष्यामीति संज्ञा मे भयं च विगतं मम ॥

इत्यत्र भविष्यामि=जीविष्यामीति संज्ञा=ज्ञानमभूत्। ततः प्राङ् मृतोऽह-मित्येव बुद्धिरासीदिति भावः।

५३-८. महाभारते (१२, १३९, ९७)—

यत्र नास्ति बलात्कारः स राजा तीव्रशासनः।
भीरेव नास्ति संबन्धो दरिद्रं यो बुभूषते॥

इत्यत्र बुभूषते=पालयितुमिच्छतीत्यर्थः। प्रजानां तीव्रेण शासनेन भयदान-मात्रं संबन्धो नास्ति तस्य राज्ञो यो दरिद्रान् पालयितुमिच्छति। दरिद्रपालनमपि संबन्ध इत्याकूतम्। एवमेव हरिवंश० (१, ५३, १३) 'भावयन्तो भुवं देवीं लब्ध्वा त्रिभुवनश्रियम्' इत्यत्र भुवं देवीं पालयन्त इत्यर्थ इति भूधातुर्णिच्यणिचि चेत्युभयत्र पालनार्थको दृष्टः।

५३-९. महाभारते (५, १४५, १०)—

कर्णार्जुनौ वै भवेतां यथा रामजनार्दनौ।
असाध्यं किं नु लोके स्याद् युवयोः संहितात्मनोः॥

इत्यत्र कुन्त्याः कर्णं प्रति व्याहारो यत् त्वं मे पुत्रोऽसीत्यर्जुनेन सह तथा वर्धिष्यसे यथा रामः कृष्णेन। यद्यपीह शोभनरूपोऽर्थोऽपि भवितुमर्हति, तथापि 'असाध्यं किं नु लोके स्यात्' इत्यस्य परामर्शेन बलवृद्धिरेव युक्तियुक्ता भाति। तत्रैव (५, ४४, १४)—

आचार्येणात्मकृतं विजानन् ज्ञात्वा चार्थं भावितोऽस्मीत्यनेन।
यन्मन्यते तं प्रति हृष्टबुद्धिः स वै तृतीयो ब्रह्मचर्यस्य पादः॥

इत्यत्र 'अर्थं ज्ञात्वाऽनेन भावितः=वर्धितोऽस्मीति यन्मन्यते' इति भूधातो-र्वर्धनरूपोऽर्थः, गुरोः सकाशादध्ययनेनोत्तरोत्तरं ज्ञानवृद्धित्वात्। एवमेव (१२, ९७, ७)—

एवं शस्त्राणि मुञ्चन्तो घ्नन्ति वध्याननेकधा।
तस्यैषां निष्कृतिः कृत्स्ना भूतानां भावनं पुनः॥

इत्यत्र भूतानां भावनं नाम वर्धनम्। तच्च कीदृशम् इति जिज्ञासायामग्रिमे श्लोके 'यो भूतानि धनाक्रान्त्या वधात् क्लेशाच्च रक्षति' इति दर्शितम्। यद्यप्य-नुग्रहादिरूपा अर्था भवितुमर्हन्ति, तथापि चतुर्थे श्लोके 'वर्धयन्ति पुनः प्रजाः' इत्यनेन तथार्थस्यावसरात्। हरिवंश० (१, ५४, ५५)—

छित्त्वा वनं तत् सौमित्रिर्निवेशं सोऽभ्यरोचयत्।
भवाय तस्य देशस्य पुर्याः परमधर्मवित्॥

इत्यत्र 'भवाय' इत्यस्य वर्धनरूपोऽर्थोऽत्यन्तं स्पष्टः। एवमेव (१, १७, ४०)—

सर्वत्र वर्तमानांस्तान् पितरः सपितामहान् ।
भावयिष्यन्ति सततं श्राद्धदानेन तर्पिताः[१] ॥

इत्यत्रापि श्राद्धदानेन तर्पिताः पितरः भावयिष्यन्ति=वर्धयिष्यन्तीत्यर्थः । मनु० (४, १३५) 'नावमन्येत वै भूष्णुः' इत्यत्र 'वृद्ध्यर्थो भूधातुः । भूष्णुः=वर्धिष्णुः, धनगवादिना वर्द्धनशीलः' इति कुल्लूकभट्टः । अमरकोशे (३, १, २९) 'भूष्णुर्भविष्णुर्भविता' इत्यत्र भूधातोरर्थो वृद्धिरिति नोरीक्रियते ग्रन्थकारेण टीकाकारेण वा भानुजिदीक्षितेन क्षीरस्वामिना वा । रघु० (१, १८) 'प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत्' इत्यत्र भूत्यर्थम्=वृद्ध्यर्थम् इत्यर्थः । वृद्धिश्चेह प्रसङ्गात् सामर्थ्याच्च समृद्धिः । व्युपसर्गपूर्वकस्य धातोरयमर्थः (तुल० मनु० ५, ३९) । भारोपीयभाषायामयमर्थो लभ्यते (द्र० एलॉयस् वाल्दे०, २ ख०, १४० पृ०) ।

५३-१०. गीता० (३, ११) 'देवान् भावयतानेन' इत्यत्र तर्पयतेति नीलकण्ठः । एवमेव हरिवंश० (१, १८, ५७)—

सुकाला नाम पितरो वसिष्ठस्य प्रजापतेः ॥
निरता दिवि लोकेषु ज्योतिर्भासिषु भासुराः ।
सर्वकामसमृद्धेषु द्विजास्तान् भावयन्त्युत ॥

इत्यत्र सुकालपितॄन् भावयन्ति=तर्पयन्तीत्यर्थः । हरिवंश० (२, ९८, २३)—

महानदी द्वारवती पञ्चाशद्भिर्महामुखैः ।
प्रविष्टा पुण्यसलिला भावयन्ती समन्ततः ॥

भावयन्ती=हर्षयन्ती । जनानिति शेषः । इह वर्धनार्थो नानुकूलः ।

५३-११. चुरादौ भूधातुरवकल्कनेऽर्थे पठितः । तस्य चार्थश्चिन्तनं केषाञ्चन मतेन । वस्तुतस्तु भावः=अन्तःकरणम् (वा० रा० २, ९, २१; २, ८८, १०) । तत्र च चिन्तनसंभवः । वा० रा० (२, ६७, २३)—

नाराजके जनपदे चरत्येकचरो वशी ।
भावयन्नात्मनाऽऽत्मानं यत्र सायंगृहो मुनिः ॥

इत्यत्र 'आत्मनाऽऽत्मानम्' इत्यात्मकरणकमात्मकर्मकं भावनं नाम चिन्तनम् । महाभारते (१२, २७३, २०) 'शब्दे स्पर्शे तथा रूपे न च भावयते मनः' इत्यत्र भावयते=चिन्तावशं करोतीत्यर्थः, मनःपदसमभिव्याहारात् । एवमेव तत्रैव (१२, ३५१, १९) 'यद् वै लोके वैदिकं कर्म साधु आशीर्युक्तं तद्धि तस्यैव भाव्यम्' इत्यत्र भाव्यम्=चिन्तनीयम् इति नीलकण्ठः, 'एकात्मानं तथात्मानमपरे ज्ञानचिन्तकाः' इति चतुर्दशश्लोकतश्चिन्तनप्रसङ्गात्[२] । 'संख्यां तच्चेतसा भाविनि भावय त्वम्' इति नैष०

---

१. 'देवान् भावयतानेन ते देवा भावयन्तु वः' इति गीता० (३, ११) भावयतेति पदं तर्पणपरम्, ततश्च तृप्तास्ते देवा वो भावयन्तु=वर्धयन्त्वित्यर्थः ।

२. तज्जपस्तदर्थभावनम् (यो०सू० १,२८) भावनम्=पुनः पुनश्चेतसि निवेशनम् इति भोजवृत्तिः ।

(६, ८३), तत्क्षणावहितभावभावित०' (१८, ११०) इत्यत्र च 'चेतसा' इति 'अवहित-भाव०' इति चोभयत्र संनिधानाद् 'भावय' = विचारय,-भावित०=ध्यात० इत्यर्थः।

वस्तुतस्तु नामधातुरयम् (द्र० प्रातिपदिकाद् धात्वर्थे बहुलमिष्ठवच्चेत्यादयो नियमाः)। मूलत आत्मधारणानुकूलव्यापारस्य भूधातोर्व्युत्पन्नो भावशब्द आत्म-वाचकः। आत्मशब्दश्च बहुत्र चित्तवाचकः (द्र० भावितात्मनः—वा० रा० १, ४, ४= शुद्धचित्तस्य—ति०) लभ्यते। भावशब्दोऽप्यन्तःकरणवाचकः (वा० रा० २, ८८, १०) चित्तवाचकश्च (रघु० ६, ३६) दृश्यते। अन्तःकरणे चित्तेन चिन्तनस्य प्रवर्त्यमानत्वाद् भावशब्दो नामधातुत्वं गच्छंश्चिन्तनार्थपर उपलभ्यते। प्रदर्शयिष्यमाणेष्वर्थेषु भव-भावशब्दयोरर्थप्रवृत्तिर्दृश्यते साक्षादसाक्षाद् वा।

अनयैव दृशा (क) शुद्धिरूपोऽर्थः (भावितात्मनः—वा० रा० १, ४, ४=शुद्ध-चित्तस्य-ति०; भावितैः—महाभारते १२, ३२६, २६=शोधितैः–नी०; या भावयति भूतानि—हरि० १, १८, ६९=पुनाति; भावितात्मा—रघु० १, ७४=शुद्धान्तःकरणः—सं०; भावितात्मा—बु० च० १, ११)।

(ख) कल्याणरूपोऽर्थः (बु० च० १, ८३—'परमभवाय'; 'भव इव'—१, ८८=शिवः)।

(ग) हृदयचित्तान्तःकरणादिरूपः (रथाङ्गनाम्नोरिव भावबन्धनम्—रघु० ३, २४=हृदय०-सं०; प्रजाभाव०–वा० रा० २, ९, २१—भावे=अन्तःकरणे—ति०)।

(घ) आत्मत्वेन कल्पनरूपः (महाभूतादिभावनः—हरिवं० ३,११,१०)।

(ङ) अभिप्रायरूपः (भावः—वा० रा० २, ३५, २०; दुष्टभावताम् १, ३, १२; भावमन्तर्गतं नृणाम्—मनु० ८, २५)।

(च) आदररूपः पूज्यतारूपो वा ('कामात्मनो दौर्हृदैर्भावितस्य'—महाभारते ५, २६, १४=पूजितस्य -नी०; भावतः—हरि० २, ४१, ३३=आदरेण—नी०; भावत्वम्—हरि० ३, १७, ६=पूज्यतमत्वम्—नी०)।

(छ) संस्काररूपः (मनो यद् भावितं यथा—महाभारते १२, २१६, ९=संस्कृ-तम्—नी०; भावाभावौ च केवलौ—१२, २७५, ९ भावः=पूर्वसंस्कारः—नी०)।

(ज) इष्टसाधनत्वरूपः (भावनः—वा० रा० १, ६२, ५=सर्वेष्टसाधनः—ति०)।

(झ) अनुभवसुखादिरूपः (ब्रह्मविहारान् भावयित्वा—मखादेवजात०=अनुभूय, भावलाभलघुताम्—नैष० १८, ११०, भावभजने—१८, १११; ११२, ११३—भावः= सुखम्) इत्यादयोऽर्था विभाव्यन्तां बुधवरैः।

५३–१२. कृञ्चानुप्रयुज्यते लिटि (पा० अ० ३, १, ४०) इतीह कृभ्वस्तयोऽनु-प्रयुज्यन्ते। 'आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य (१, ३६१) इति सूत्रे कृञ्ग्रहणसामर्थ्यादनु-प्रयोगोऽन्यस्यापीति ज्ञायते। तेन 'कृभ्वस्तियोगे' (५, ४, ५०) इत्यतः 'कृञो द्वितीय—' (५, ४, ५८) इति ञकारेण प्रत्याहाराश्रयणात् **कृभ्वस्तिलाभः। तेषां क्रियासामान्य-**

वाचित्वात् तत्तदर्थयोरभेदान्वयः । सामान्यविशेषयोरभेदान्वयो लोकप्रसिद्धः । एवं च 'एधाञ्चक्रे' 'एधांबभूवे' इत्यादावेककर्तृकभूतानद्यतनपरोक्षा वृद्ध्यभिन्ना क्रियेति तुल्यो बोधः । ननु करोतिः सकर्मकः, भवतिस्त्वकर्मक इति कथमिह तुल्यतेति चेदत्राहुः— यदा हि करोतिरुत्पादनार्थकः स्वातन्त्र्येण प्रयुज्यते 'घटं चक्रे' 'राज्यं चकार' इति, तदा यत्समानाधिकरणः करोतिस्तस्य सकर्मकत्वाकर्मकत्वाभ्यां स्वयमपि तथाभावं भजते । एवं भ्वस्त्योरप्याम्प्रकृतिसामानाधिकरण्येन क्वचित् सकर्मकत्वं बोध्यम् । अत एवानुप्रयुज्यमानाद् भवतेः सकर्मकत्वात् कर्मणि लिट् । एवं चाम्प्रकृत्यर्थगतिकारक-संख्यादिविशेषाभिव्यक्तिरनुप्रयोगस्य फलम् ।

(क) एवं तावद् भूधातोः क्रियासामान्यवाचित्वात् तादृशतादृशोपपदसांनिध्येन कृधातुवदनन्ता अर्था भवन्ति । वा० रा० (१, ४, ३६) 'स चापि रामः परिषद्गतः शनैर्बुभूषयासक्तमना बभूव' इत्यत्र 'बुभूषया=चिरकालं स्थितीच्छया' इति तिल० । 'ततस्तु तौ रामवचःप्रचोदितावगायतां मार्गविधानसम्पदा' इति पूर्वार्द्धस्य परामर्शेन 'बुभूषया=श्रोतुमिच्छया' इत्यस्यार्थस्य सांगत्यं भाति । सा च क्रियासामान्यवचनता भूधातोः । तिलकटीकाकारेणाकर्मकभूधातोरवस्थानरूपमर्थं कुर्वता संगतये चेष्टितम् । 'स्वयमपि क्षणदग्धनिजेन्धनः क्व भवितासि ? हताश ! हुताशवत्' इति नैष० (४, ७५) भवितासि=स्थास्यसि, निवत्स्यसीति वाऽर्थः । काशकृत्स्नधातुव्याख्याने निवासार्थस्यो-दाहरणम्—'भवनम्' इत्येव दर्शितम्, न तु तिङन्तादिरूपम् ।

(ख) 'ज्ञाने तपसि सत्ये च भव तात युधिष्ठिर' इति महाभारते (५, ८, ३४) व्याप्रियस्वेत्यर्थः, ज्ञानतपःसत्याधिकरणकस्य भवनस्य तथैव सामर्थ्यात् ।

(ग) (रघु० ४, १०) 'पूर्वं एवाभवत् पक्षस्तस्मिन्नाभवदुत्तरः' इत्यत्र भूधातोः संक्रमणरूपोऽर्थः । सद्धर्मयुद्धादिकरूपः पूर्वपक्ष एव तस्मिन् रघौ संक्रान्त इत्याकूतम् ।

(घ) पञ्चतन्त्रे (३, ६२)—

स्त्रीणां शत्रोः कुमित्रस्य पण्यस्त्रीणां विशेषतः ।
यो भवेदेकभावेन न स जीवति मानवः ॥

इत्यत्र भूधातोर्व्यवहारार्थः, सामर्थ्यात् ।

(ङ) हितो० (१, ५) 'स च वृद्धपतिस्तस्याः संतोषाय नाभवत्' इत्यत्र संतोषाय न पर्याप्नोदित्यर्थः ।

(च) नैष० (२, ३२) 'स तदुच्चकुचौ भवन्'=कलसस्तत्कुचात्मना परिणतः सन्निति संगतेर्भूधातोः परिणामोऽर्थः । प्रकाशकारस्तु 'भवन्=प्रपद्यमानः' इत्याह ।

(छ) क्रियासामान्यवाचको भूधातुर्णिचि करणार्थकः (नैष० १७, ७८) 'भविनां भावयन् दुःखं स्वकर्मजमपीश्वरः' इति ।

(ज) 'यथा विस्पन्दमानं मे क्षीरं सर्वत्र भावयेत्' इति हरिवं० (१, ६, १०) क्षीरकर्मकं भावनं नाम क्षरणम् ।

(झ) भावयति (यशस्ति० ३ आश्वा०, २९५ श्लो०)=कथयतीत्यर्थः। एवमेवान्येऽप्यर्थाः समुन्नेयाः।

एवं तावदिह भूधातोरेतेऽर्था निरूपिताः—१. सत्ता (आत्मधारणानुकूलव्यापारः), २. उत्पत्तिः, ३. प्राप्तिः (गतिः), ४. संपत्तिः (प्रभुत्वम्), ५. परिवर्तनम् (आवर्तनम्), ६. जयः (उत्कर्षः), ७. प्राणधारणम्, ८. पालनम्, ९. वर्धनम्, १०. तर्पणम्, ११. चिन्तनम् (विचारः), (क) शोधनम्, (ख) कल्याणम्, (ग) हृदयचित्तान्तःकरणादि, (घ) आत्मत्वेन कल्पनम्, (ङ) अभिप्रायः, (प्रकाशनम्); (च) आदरः, (छ) संस्कारः; (ज) इष्टसाधनता, (झ) अनुभवः, सुखम्; १२. (क) स्थितिः, निवासः; (ख) व्याप्रिया, (ग) संक्रमः, (घ) व्यवहारः, (ङ) पर्याप्तिः, (च) परिणामः, (छ) करणम्, (ज) क्षरणम्, (झ) कथनं चेति।

५४. § √मन् (मन) ४/६३ ज्ञाने (आ)। अवबोधनार्थकस्तानादिकः √मन् धातुः, स्तम्भार्थकः (गर्वार्थकः) चौरादिकः √मन्धातुश्च तुलनीयौ प्रकृत्यभेदतया। भारोपीयभाषाया मूलध्वनिरस्ति √*मेन् इति मननार्थको ज्ञानार्थकश्च (एलॉयस् वाल्दे०, २ ख०, २६४ पृ०)। निघण्टौ तु कान्तिकर्मा (२, ६), मनामहे, मन्महे—याच्ञाकर्मा (३, १९), अर्चतिकर्मा च (३, १४) इति।

५४–१. ऋ० (८, ४, १२) 'स्वयं चित् स मन्यते' इत्यत्र सर्वं जानातीत्यर्थः[१]। 'मन्यते तमसावृता' इत्यत्र जानातीति शाङ्करभाष्यम्। 'स दृष्टः सन्ततं मतः' इति (१, ४९, २६) हरिवं० 'ज्ञातः' इति नील०।

५४–२. 'अस्य हि स्वयशस्तर आसा विधर्मन्मन्यसे' इति (५, १७, २) ऋ०—आसा=आस्येन वाचा मन्यसे=स्तौषीति स्तुतिरूपोऽर्थो मन्धातोः, वाक्पदसमभिव्याहारेण तादृशार्थात्। ऋ० (५, ९, १)—

त्वामग्ने हविष्मन्तो देवं मर्तास ईळते।
मन्ये त्वा जातवेदसं स हव्या वक्ष्यानुषक्॥

इत्यत्र 'ईळते' इत्यस्य साहचर्याद् मन्धातुरपि स्तुत्यर्थकोऽर्चनार्थे पठ्यमानः। सायणस्तु भेदमिममदर्शयन्नाह—'**मनिरत्र स्तुत्यर्थे वर्तते, धातूनामनेकार्थत्वात्**'। वस्तुतस्त्वर्चनाप्रकाशसाधनं **स्तुतिः, पूजाया आधुनिकप्रकारस्य तदानीमभावात्** (द्र० **भारत में आर्य और अनार्य**)। १. अमन्महि (ऋ० १, ३०, २१) इत्यत्र बोद्धुं समर्थ इति सायणः, स्कन्दस्तु याच्ञायां वृत्तिमाह। अत एव 'विप्रा यज्ञेषु मानुषेषु कारू मन्ये वां जातवेदसा यजध्यै' इति (७, २, ७) ऋग्वेदे 'यजध्यै=यष्टुम्, मन्ये=स्तौमि' इति यजनार्थं स्तवः, यजनप्रसङ्गेन च √मन्धातोः स्तुतिरूपोऽर्थः। 'अग्निं तं मन्ये' इत्यत्र (५, ६, १) ऋ० अग्निकर्मकं मननं नाम स्तुतिः।

---

१. अमन्महि (ऋ० १, ३०, २१) इत्यत्र बोद्धुं समर्थ इति सायणः। स्कन्दस्तु याच्ञायां वृत्तिमाह।

५४–३. 'उत मन्ये पितुरद्रुहो मनो मातुर्महि' इति (१, १५९, २) ऋ० मनः-कर्मकत्वात् √मन्धातुः प्रसादनार्थकः। चित्तं प्रसादयामीत्यर्थः।

५४–४. 'मन्युर्महि कर्मा करिष्यतः' ऋ० (२, २४, १४) इति सायणेनार्थद्वयं कृतम्—मननसाधनो मन्त्रः क्रोधी वा। किन्तु 'समन्यवः' इत्यत्र (४, १, १) ऋ० 'मन्युः=स्पर्धा' इत्यर्थः सुप्रतिष्ठ इति स्तम्भार्थकस्य √मन्धातोरर्थविकासस्य सूत्रमिह लक्ष्यते।

५४–५. चिन्तनपूर्वकं ज्ञानम्। 'न योत्स्य इति मन्यसे' इति (१८, ५९) गीतायां ज्ञानाभावेऽर्जुनश्चिन्तयत्यध्यवस्यति वा। 'जनमाभाष्यमिमं न मन्यसे' (रघु० ८, ४८) इत्यजविलापे 'मन्यसे=चिन्तयसि' इत्यर्थः। स्मृत्यर्थकेन √चिन्त्(चिति)धातुना विवरणम्।

५४–६. 'न देवा योद्धुमिच्छन्ति मन्यन्तो मधुसूदनम्' इति (१, ७३, ४०) हरिवंशे मधुसूदनं मन्यन्तो=मानयन्तो देवा योद्धुं नेच्छन्तीति मन्धातुः पूजार्थक आदरार्थको वा। ज्ञानेन (प्रसिद्धिपूर्वकेण) समादरः। 'स लब्धमानैर्विनयान्वितैर्नृपैः' इति वा० रा० (२, १, ५१) मानो नाम सत्कारः (३, ३, १८)। [मत्समः कोऽपि नास्तीति मनने तु गर्वबोधको मानशब्दः (अ० को० १, ७, २२)। मानशब्दस्यैव नाम-धातुः पूजार्थको मान् धातुश्चुरादौ (२८९)]। 'स वै स्पर्शगुणो मतः' इत्यत्र मनु० (१, ७६) सम्मत इत्यर्थः। वस्तुतस्तु सम्पूर्वकस्य मन्धातोरभिमतपूजनाद्यर्थाः (आ० च० २, २, ५५)। स च पूजादरादिरूपोऽर्थ उपसर्गादृतेऽपि धातोर्दृश्यते। ऋग्वेदेऽर्थस्यास्य मूलं स्तुतिरूपेण दृश्यते। निघण्टौ तु 'अर्चतिकर्मा मन्यते' (३, १४) इति पठ्यते। लौकिके संस्कृते वैदिकस्यार्चनस्तुत्यादिरूपस्यार्थस्य स्वरूपं न दृश्यते। किन्त्वादराद्यर्थस्तत्र गृह्यते। हरिवंशे (२, ४७, ३१)—

स राज्ञः पक्षपातेन मेने पतगसत्तमम्।
ददर्श गरुडं प्राप्तं दिव्यस्रगनुलेपनम्॥

स तान् राज्ञो मनसा पूजितवानित्यर्थः। [प्राकृतभाषायामयमर्थो दृश्यते। तत्र √'मण, √मण्ण, √मन्न' इति प्रकृतित्रयम्] 'मन्यन्ते मामबुद्धयः' इति गीता० (७, २४) अतीवाद्रियन्त इति श्री० व्या०, प्रत्यभिजानत इति (अ० व्या०)। 'रावणं मंस्यते को वा ?' इति भट्टि० (१६, ३) पूजयिष्यतीति जयमङ्गलः।

५४–७. 'न शूद्राय मतिं दद्यात्' इति मनु० (४, ८) इत्यत्र मतिम्=दृष्टार्थो-पदेशम् इति कुल्लूकभट्टः। एवं मतिशब्द उपदेशपरः।

५४–८. महाभारते (१७, १, ३)—

कालः पचति भूतानि सर्वाण्येव महामते।
कालपाशमहं मन्ये त्वमपि द्रष्टुमर्हसि॥

इत्यत्र मन्धातुः स्वीकारार्थकः । अङ्गीकरोमीति नील० । लोकेऽपि √'मानना'-धातुः स्वीकारार्थकः । नन्विह महाभारतीये श्लोके मन्धातोरङ्गीकारार्थे किं गमकम् ? तत्र जानामीत्यर्थेनापि बोधसंभव इति चेन्न, महाप्रास्थानिकपर्वणि निबद्धोऽयं श्लोकः; तत्र युधिष्ठिरो वृष्णीनां महत् कदनमाकर्ण्य प्रस्थाने च मतिमाधाय पूर्वोक्तश्लोकभाव-मर्जुनमभिदधौ—इदं सर्वं दृष्ट्वाऽहं कालपाशमङ्गीकरोमि, किमिहावस्थानेनेति भावात् ।

५४-९. मन्धातुरिच्छार्थकोऽपि । हरिवं० २, ५६, ३०—

केशवेन मतिस्तत्र पुर्यर्थे विनिवेशिता ।
निवेशं तत्र सैन्यानां रोचयन्ति स्म यादवाः ॥

इत्यत्र कृष्णेन पुरीनिर्माणाय स्पृहा कृतेति प्रासङ्गिकोऽर्थः । अस्य मूलं 'मन्यते कान्तिकर्मा' इति निघण्टौ (२, ६) लभ्यते ।

५४-१०. 'निबन्धायासुरी मता' इत्यत्र गीता० (१६, ५) अभिप्रायरूपोऽर्थो मन्धातोः—अभिप्रेतेति शाङ्करभाष्यम् ।

५४-११. 'तृणाय मत्वा ताः सर्वाः' इत्यत्र भट्टि० (८, ९९) संगणनारूपोऽर्थः । तृणमिव संगणय्येति जयमङ्गलः । इह तृणपदसंनिधानेन संभूयानादरार्थो गम्यते ।

५४-१२. भट्टि० (११, ३)—

क्व ते कटाक्षाः क्व विलासवन्ति प्रोक्तानि वा तानि ममेति मत्वा ।
लङ्काङ्गनानामवबोधकाले तुलामनारुह्य गतोऽस्तमिन्दुः ॥

इत्यत्र मन्धातोर्निरूपणरूपोऽर्थः । मत्वा = निरूप्येति जयमङ्गलः ।

५४-१३. उत्प्रेक्षायां मन्धातुस्तर्कणार्थः शङ्कार्थो वा दृश्यते । 'अमन्यतासौ कुसुमेषुगर्भजं परागमन्धङ्करणं वियोगिनाम्' इति नैष० (१, ८७) श्लोकस्योत्तरार्द्धे 'तदङ्ग भस्मेव' इत्यस्येवशब्दस्य साह्येनेह तर्कणा-(<हि०√ताड़ना)-रूपोऽर्थः । 'मन्ये' इति पदेन त्विवादिशब्दसाहाय्यमन्तरैवोत्प्रेक्षारूपोऽर्थो ज्ञायते (नैष० ७, १६) । नैष० (१, ११३) 'नलेन मेने सलिले निलीनयोस्त्विषं विमुञ्चन् विधुकालकूटयोः' इत्यत्रेवपदाभावे टीकाकारेण 'विमुञ्चन् = विसृजन्निव' इति व्याख्यायार्थः कृतः । प्रकाशटीकाकारेण 'मेने = शङ्कितः' इति व्याख्यायि ।

एवं तावदिह त्रयोदशार्था दर्शिता मन्धातोः—१. ज्ञानम्, २. स्तुतिः, ३. प्रसादनम्, ४. क्रोधः स्पर्धा वा, ५. चिन्तनम्, ६. सत्कारः (आदरः, पूजा), ७. उपदेशः, ८. अङ्गीकारः, ९. स्पृहा, १०. अभिप्रायः, ११. गणना, १२. निरूपणम्, १३. तर्कणा, शङ्का (उत्प्रेक्षा) चेति ।

५५. §√वह् (वह्) १/९८८ प्रापणे (उ) । √उह् (उहिर्) १/ अर्दने, √बध् १/ बन्धने (आ), √वध् १/ हतौ (प) इति धातवस्तुलनीयाः । अन्तिमो धातुर्वोप-

देवमतेन। पाणिनीये संप्रदाये तु स न पठ्यते। भारोपीयभाषाया मूलध्वनिरस्ति— √*वॅघ् इति प्रेरणार्थकः, प्रापणार्थकश्च (एलॉयस् वाल्दे०, १ ख०, २४९ पृ०)।

५५–१. ऋ० (१, ३९, ६) 'प्रष्टिर्वहति रोहितः' इत्यत्र प्रष्टिः=युगविशेषः, रोहितः=मृगावान्तरजातिर्लोहितवर्णः, रथं वहति=नयतीति √वह् धातुः प्रापणार्थकः। 'यदनेन रथेनैव त्वां वहेयं पुरीं पुनः' इति वा० रा० रथकरणकं युष्मत्कर्मकं वहनं नाम प्रापणमेव। 'वहत्ययोध्यामनु राजधानीम्' इति रघु० (१३, ६१) प्रापयतीत्यर्थः। प्रायो द्विकर्मकः।

५५–२. 'वह शुष्णाय वधं कुत्सं वातस्याश्वैः' इति (१, १७५, ४) ऋ० 'वधम्=वज्रम्, वह=अवहः, शुष्णं हन्तुं वज्रमधारयः' इति वह्धातुर्धारणार्थकः। 'स्तभूयमानं वहतो वहन्ति' इति (३, ७, ४) ऋ० स्तभूयमानम्=लोकानां स्तम्भनं धारणमिच्छन्तमग्निं वहन्ति=धारयन्ति' इति धारणार्थको वह्धातुः। 'अवहद् बाण-पुरीपरार्द्ध्यताम्' इति नैष० (२, ८७) श्रेष्ठताया धारणमभिहितम्। एकस्मिन्नेव स्थाने नीवह्योः प्रयोगो दर्शनीयः (ऋ० ७, ७७, ३)।

५५–३. 'वह कुत्समिन्द्र ...... ऋज्रा वातस्याश्वा' इति (१, १७४, ५) ऋ० ऋज्रा=ऋजुगामिनौ, वातस्य वायोः समानवेगावश्वौ वह=प्रस्थापय' इति वह्धातुः प्रस्थापनार्थकः। महाभारते (१२, १८७, १९) 'न पञ्चसाधारणमत्र किञ्चिच्छरीरमेको वहतेऽन्तरात्मा' इत्यत्र वह् धातुश्चालनार्थकः। अन्तरात्मकर्तृकं शरीरकर्मकं वहनं नाम चालनं प्रस्थापनं वा।

५५–४. निरुपसर्गपूर्वकस्य वह्धातोर्निर्वाहरूपोऽर्थः। स चोपसर्गं विनैव दृश्यते। ऋ० (१, १६४, १४) 'उत्तानायां दश युक्ता वहन्ति' इत्यत्र 'उत्तानायाम्= ऊर्ध्ववर्तिन्याम् ईषायाम् उपरिविस्तृतभूम्यां वा दश=इन्द्रादयः पञ्च लोकपालाः, निषादपञ्चमाश्चत्वारो ब्राह्मणादयो वर्णा मिलित्वा दशसंख्याका युक्ताः स्वस्वव्यापार-युक्ता वहन्ति=निर्वहन्ति' इत्यर्थः। एवमेव 'युक्ता रजसो वहन्ति' इति (१, १६४, १९) रजसः=रञ्जनात्मकस्य लोकस्य, (कर्मणि षष्ठी) लोकं वहन्ति=निर्वहन्ति (तुल० ऋ० १, १६४, ३)।

५५–५. ऋ० (८, २६, २३) 'वहस्व महः पृथुपक्षसा रथे' इत्यत्र महः=महाँस्त्वं पृथुपक्षसा=पृथुपार्श्वद्वययुक्तावश्वौ रथे वहस्व=शत्रुहननार्थं संयोजय' इत्यर्थः, रथा-धिकरणकेनाश्वकर्मकेण वह्धातुना सामर्थ्यात् तादृशार्थप्रतीतेः।

५५–६. ऋ० (१, ११३ २०) 'यच्चित्रमप्न उषसो वहन्ति' इत्यत्रोषःकर्तृकं धनकर्मकं वहनं नामाऽऽनयनम्, चित्रम्=चायनीयम् अप्नः=आप्तव्यम्, यद् धनम् उषसो वहन्ति=आनयन्तीत्यक्षरार्थसंगतेः। भट्टि० (१९, १०) 'उह्येरन् यज्ञपात्राणि' इत्यत्र यज्ञपात्राणां स्रुगादीनां वहनं नामाऽऽनयनमभिप्रेतम्।

५५–७. ऋ० (५५८, १) 'य आश्वश्वा अमवद्वहन्ते' इत्यत्र वह्धातुर्गमनार्थकः, आश्वश्वाः=शीघ्रगाम्यश्वोपेताः, अमवत्=बलवन्तो यथा भवन्ति तथा गच्छन्तीति

प्रासङ्गिकादर्थात् । महाभारते (३, ७१, १५) 'कथमल्पबलप्राणा वक्ष्यन्तीमे हया मम' इत्यत्र गमिष्यन्तीत्यर्थः। रघु० (१६, १२) 'स वाह्यते राजपथः शिवाभिः' इत्यत्र 'वाह्यते=गम्यते' इति विवृण्वन्नाह मल्लिनाथः—'वहेरन्यो वहिधातुरस्तीत्युपदेशः' इति । इह स धातूनामनेकार्थत्वाद् वह् धातुर्गमनार्थक इति न प्रत्यपादयत् । वस्तुतस्तु राजपथस्य कर्मकत्वात् तत्र वह् धातुर्गमनार्थको विज्ञेयः । अर्थभेदाच्छब्दभेदस्य न्यायो नाभ्युपगन्तव्यः, अव्यवस्था स्याद् गौरवं चापि। वायुर्वहतीत्यत्र गमनम् (ऋ० (१, १६४, २) 'अश्वो वहति सप्तनामा' इति । एवमेव 'नदी वहति' इत्यादौ स्यन्दन-रूपा गतिरवधारणीया । 'छन्देन चोदकं तस्य वहत्यावर्जितं द्रुतम्' इति महाभारते (३, ७५, १५) । इत्थं प्रवाहरूपोऽर्थ इह प्रोपसर्गं विना विव्रियते ।

५५–८. ऋ० (३, ५३, ९) 'विश्वामित्रो यदवहत् सुदासमप्रियायत कुशिकेभि-रिन्द्रः' इत्यत्र वह् धातुर्याजनार्थकः । विश्वामित्रकर्तृकेण सुदासकर्मकेण वह् धातुना तथैवार्थाभ्युपगतिः, तदानीम्=याजनोत्तरम् इन्द्रः कुशिकेभिः=कुशिकगोत्रोत्पन्नैर्ऋषिभिः सह, अप्रियायत=प्रिय इवाचरद् इतीन्द्रकर्तृकप्रीतेर्याजनेन संभवात् ।

५५–९. मनु० (८, २०४)—

अन्यां चेद् दर्शयित्वाऽन्या वोढुः कन्या प्रदीयते ।
उभे त एकशुल्केन वहेदित्यब्रवीन्मनुः ॥

इत्यत्र वह् धातुरुद्वाहार्थकः, कन्ययोर्वरकर्तृकं वहनं नामेह परिणयः, विवाह-प्रसङ्गात् । महाभारते (१, ८१, १९)—

संसृष्टं ब्रह्मणा क्षत्रं क्षत्रेण ब्रह्मसंहितम् ।
ऋषिश्चाप्यृषिपुत्रश्च नाहुषाङ्ग वहस्व माम् ॥

इति देवयान्युक्तिर्ययातिं प्रति । इहोद्वाहार्थः स्पष्टो धातोः । अग्रे च 'अतोऽदत्तां च पित्रा त्वां भद्रे न विवहाम्यहम्' (१, ८१, २६) इत्यत्र सुस्पष्टता कृता स्वयं ग्रन्थकारेण ।

उदुपसर्गपूर्वकस्य विपूर्वकस्य च वह् धातोः परिणयरूपोऽर्थः प्रसिद्धः । स इहोपसर्गेण विनैव दर्शितः । हिन्दीभाषायां√'बाहना' इति धातुर्गोमहिष्यादीनामुपसर्या-त्वस्य करणे वर्तते ।

५५–१०. वा० रा० (२, १२, ८)—

किं कृतं तव रामेण पापे पापं मयापि वा ।
सदा ते जननीतुल्यां वृत्तिं वहति राघवः ॥

इत्यत्र दशरथोक्तिः कैकेयीं प्रति । वृत्ति-(व्यवहार)-कर्मकं वहनं नामाऽऽचरणं संपादनं करणं वा । करोतीति तिलक० । 'मा गाः शुचं वीर भरं वहामुम्' इति भरतं प्रति रामस्योक्तिः । इह वह् धातुः संपादनार्थः, भरस्य=पितुर्नियोगस्य संपाद्यमानत्वाद-नुष्ठेयत्वाद् वा । तदाह जयमङ्गलः—'वह=संपादय' इति ।

५५–११. भट्टि० (२, ३९)—

बलिर्बबन्धे जलधिर्ममन्थे जह्रेऽमृतं दैत्यकुलं विजिग्ये।
कल्पान्तदुःस्था वसुधा तथोहे येनैष भारोऽतिगुरुर्न तस्य॥

इत्यत्र वह्धातुरुद्धारार्थकः, कल्पान्ते = प्रलये दुःस्थितायाः पृथिव्या वहने = उद्धरणे प्रसिद्धेः सामर्थ्यात्।

५५–१२. नैष० (११, १२०) 'एकं जनाय सतताभयदानमन्यद् धन्ये! वहत्यमृतसत्रमवारितार्थि' इत्यत्र काश्याम् अमृतसत्रकर्तृकं वहनं नाम वर्तनं प्रवर्तनं वेति वह्धातुर्वर्तनार्थकः। प्रकाशकारः 'वर्तते' इति, मल्लिनाथश्च 'प्रवर्तते' इत्यर्थमाहतुः।

५५–१३. मनु० (४, ८६)—

दश सूनासहस्राणि यो वाहयति सौनिकः।
तेन तुल्यः स्मृतो राजा घोरस्तस्य प्रतिग्रहः॥

इत्यत्र वह्धातोः प्राणवियोगानुकूलव्यापारो वर्तते। तथा च कुल्लूकभट्टः— 'एवं संकलनया यत्सौनिको दशसहस्राणि स्वार्थे व्यापादयति' इति विवृण्वन्नस्यार्थस्य संबन्धे किमपि नाख्यातवान्। वस्तुतस्त्विह प्राकृतभाषायाः प्रभावः संस्कृतभाषायाम्। प्राकृतभाषायां धकारस्य हकारत्वेन परिवर्तितत्वाद् वध्धातुर्वह् इति भवति मारणार्थे— वहेइ, वहंति (उत्त १८, ३; ५; स ७२८; संबो० ४१)। स च तादृशार्थो वह्धातुरिह मनुस्मृतौ प्रयुक्तः। अन्येऽपि तत्र प्राकृतभाषायाः शब्दाः प्रयुक्ता दृश्यन्ते—दाढिका (८, २८३)। (तुल० देशी० २, १०१—'दाढी' इति)। संस्कृतभाषायां 'दंष्ट्रिका' इत्युचितम्। 'होढेन' (९, २७०), छुच्छुन्दरिः (१२, ६५) इति तुल० देशीशब्दः 'छच्छुंदर' इति।

एवं तावदिह वह्धातोस्त्रयोदशार्थाः परीक्षिताः—१. प्रापणम्, २. धारणम्, ३. प्रस्थापनम्, ४. निर्वाहः, ५. संयोजनम्, ६. आनयनम्, ७. गमनम्, ८. याजनम्, ९. विवाहः, १०. संपादनम् (करणम्), ११. उद्धरणम्, १२. वर्तनम् (प्रवर्तनम्), १३. प्राणवियोगानुकूलव्यापारश्चेति।

५६. § √वृत् (वृतु) १/७५० वर्तने (आ)। वर्तनम् = स्थितिरिति क्षीरस्वामी। √वृत् (वृतु) ४/४९ वरणे (आ); वोपदेवमतेन संभक्तौ वरणे, √वृत् (वृतु) १०/२५२ भासार्थः (प), √वृध् (वृधु) १ वृद्धौ, वर्ध १०/११४ छेदनपूरणयोः (प) इति धातवस्तुलनीयाः। भारोपीयभाषाया मूलध्वनिरस्ति—√*'वर्त्' इति परिवर्तन-वेष्टन-परिभ्रमणातिक्रमणाद्यर्थः (एलॉयस् वाल्दे०, १ ख०, २७४ पृ०)। पाणिनीये धातुपाठे सामान्यतोऽर्थनिर्देशः।

५६–१. ऋग्वेदे (१, १८३, २) मूलतोऽयं गमने वर्तते। गमनं चाकर्मकं तत्र। उपसर्गयोगे च सकर्मकम्—'सुवृद्रथो वर्तते यन्नभि क्षाम्' इत्यत्राभ्युपसर्गः प्रतीत्युप-

सर्गार्थकः—क्षाम् अभिवर्तते=देवयजनभूमिं प्रति गच्छतीत्यर्थात् । तत्रैव (१०, १०७, ११) 'भोजमश्वाः सुष्ठुवाहो वहन्ति सुवृद्रथो वर्तते दक्षिणायाः' इत्यत्र वृत्-धातुर्गमनार्थः, रथकर्तृकस्य तस्य तथात्वात् । दक्षिणाया दातुर्यजमानस्य सुवृत्=सुष्ठु चक्रादि वर्तनं यस्य सोऽश्वादिसहितो रथो वर्तते=गच्छतीत्याशयः । निघण्टौ (२, १२) वर्तति-र्गतिकर्मा पठ्यते । 'वर्वर्ति चक्रं परि द्यामृतस्य' इति (१, १६४, ११) ऋ० संचरणरूपं गमनम् । ऋतस्य=आदित्यस्य चक्रम्=पुनः पुनः क्रमणशीलं मण्डलाख्यं रथचक्रं वा वर्वर्ति=पुनः पुनर्वर्तते=संचरतीत्यक्षरार्थः । णिजन्ते तु तस्य तादृशोऽर्थः स्वाभाविक एव (द्र० ऋ० २, ११, २० इत्यादि) ।

५६–२. ऋ० (१०, ९३, १३) 'वावर्त येषां राया युक्तैषां हिरण्ययी' इत्यत्र येषां देवानां स्वभूतेन राया=अस्मभ्यं दातव्येन धनेन युक्ता स्तुतिः वावर्त=आववर्त, तेषाम् एषाम् अर्थाय हिरण्ययी=हिरण्मयी हिरण्यालङ्कारवत् प्रीतिकरास्मन्मुखात् पुनः पुनरावर्तत इत्यर्थः । आवर्तनं नामाऽऽगमनमुद्भव इत्यादयोऽर्थाः ।

हरिवं० (३, २८, ४०)—

येन वृत्तेन जीवेयुः सर्वभूतानि भारत ।
इह लोके मनुष्येन्द्र देवलोके च भारत ॥

येन=मन्त्रेण, वृत्तेन=सृष्टेन, आवृत्तेन, आवर्तितेनेति नीलकण्ठ इतीहोद्भवरूपमावर्तनं वृत्-धातोरर्थः । रघु० (७, २४) 'मेरोरुपान्तेष्विव वर्तमानमन्योन्यसंसक्तमहस्त्रियामम्' इत्यत्र वृत्-धातोरावर्तनरूपोऽर्थः, अजेन्दुमतीरूपमिथुनस्याग्नेः प्रदक्षिणप्रक्रमणप्रसङ्गेनाहस्त्रियामस्य च मेरोरुपान्तेषु तथात्वात् । आवर्तनेन परिभ्रमणेन वर्तुलतार्थो वृत्-धातोः 'स्तनौ व्यञ्जितकैशोरौ समवृत्तौ निरन्तरौ' इत्यत्र वृत्तशब्दो वर्तुलार्थकः । णिजन्तेषु रूपेषु प्रेरणोत्पादननिर्गमनभ्रामणादयोऽर्थाः[1] ।

५६–३. प्रपूर्वकस्य वृत्-धातोः प्रवर्तनरूपोऽर्थो भवति । प्रवर्तनं नाम चेष्टा (आ० च० २, १, ६) । 'प्रावेपा इरिणे वर्वृतानाः' इति (१०, ३४, १) ऋ० इरिणे=आस्फारे वर्तमानाः=प्रवर्तमाना[2] इत्यर्थः । मनु० (९, ३१९) 'एवं यद्यप्यनिष्टेषु वर्तन्ते सर्वकर्मसु' इत्यत्र सर्वकर्माधिकरणकं वर्तनं नाम प्रवर्तनम् ।

५६–४. गतिनिवृत्तिर्नाम स्थितिः । निपूर्वको धातुर्निवर्तनार्थकः । 'नीचा वर्तन्त उपरि स्फुरन्ति' इति (१०, ३४, ९) ऋ० अपि चैतेऽक्षाः, नीचाः=नीचीनस्थले वर्तन्ते, तथाप्युपरि पराजयाद् भीतानां द्यूतकराणां कितवानां हृदयस्योपरि स्फुरन्तीति √वृत्धातोरिह वर्तनमवस्थानं सत्तारूपमर्थः, स्फुरतीत्यतो वैपरीत्यस्य तथात्वात् । वा० रा० (२, ६७, १०) 'नाराजके पितुः पुत्रो भार्या वा वर्तते वशे' इत्यत्र वर्तते=

---

१. प्रेरणे (ऋ० १, ३९, ३; १, ८५, ९; ७, १०४, ५; १०, १४४, ४) । उत्पादने—(ऋ० ७, १०४, ४) । निर्गमने (ऋ० १०, १५६, ३) । भ्रामणे (ऋ० २, ११, २०) ।

२. ऋ० (१०, ५, ४) 'ऋतस्य हि वर्तनयः' वर्तनयः=प्रवर्तकाः (सा०) ।

भवति तिष्ठति वा, वशाधिकरणकस्य वर्तनस्य स्थितिमात्रात् सत्तामात्राद् वा। महाभारते (३ २९६, २) 'यद् वाक्यं नारदेनोक्तं वर्तते हृदि नित्यशः' इत्यत्राप्यधिकरणकं वर्तनम्। हरिवं० (३, २७, ३२) 'ब्रह्मणो ब्रह्मचरणाद् वेदा वर्तन्ति शाश्वताः' इत्यत्र नीलकण्ठेन 'वर्तन्ति=निवर्तन्ते, गच्छन्ति, बाध्यन्ते' इति मिथो विरुद्धार्थाः प्रतिपादिताः। इहापि स्थितिरर्थो बोध्यः। 'निकुञ्जे तस्य वर्तित्वा' भट्टि० (७, १०३) = स्थित्वा (जय०)।

५६–५. कर्मसु वर्तनाद् (मनु० २, ५) व्यवहारार्थः प्रतिष्ठितः। वा० रा० (२, ४१, ४)—

कौसल्यायां महातेजा यथा मातरि वर्तते।
तथा यो वर्ततेऽस्मासु महात्मा क्व नु गच्छति॥

इत्यत्र मात्रधिकरणकेन वर्तनेन व्यवहारो ज्ञायते। रामस्य वनगमनेनान्तःपुरस्त्रीणां विलापोक्तिरियम्। मातरि कौसल्यायां यथा व्यवहरति रामचन्द्रस्तथैवास्मास्विति। वस्तुतस्त्विहापि स्थितिविशेष एव धात्वर्थः। मातृविषये यथा स्थितिविशेषो[1] नाम व्यवहारस्तादृशोऽस्मास्वपि स्थितिविशेष इत्याशयः। एवमेव[2] 'अमाययैव वर्तेत' मनु० (७, १०४) = व्यवहरेत् (कु०)। अयमेव व्यवहार आचाराभिन्नः। 'सत्यधर्मार्यवृत्तेषु' मनु० (४, १७५)=सत्यधर्मसदाचारशौचेषु (कु०); 'अनेन नारीवृत्तेन' मनु० (५, १६६)=आचारेण (कु०); 'एवं वृत्तां सवर्णां स्त्रीम्' मनु० (५, १६७) = आचारयुक्ताम् (कु०)। आचारोऽन्तरङ्गो जीवने, व्यवहारस्तु बहिरङ्ग इतीयान् भेदस्तयोः। वृत्तम्=चरित्रं व्यवहारादाचरणात्।

५६–६. मनु० (३, ७७)—

यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः।
तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमाः॥

यथा प्राणाख्यवाय्वाश्रयेण सर्वप्राणिनो वर्तन्ते = जीवन्ति, तथा गृहस्थाश्रमेण सर्वाश्रमिणो निर्वहन्तीति √वृत्-धातोरिह निर्वाहरूपोऽर्थः। वायुमाश्रित्य जीवनम्, गृहस्थमाश्रित्य तु निस्तार इति तत्र जीवनार्थाभावः। वस्तुतस्त्विह सूक्ष्मभेदात् तथा भिन्नोऽर्थः। निर्वाहादिरूपेण वृत्-धातुर्जीवनार्थो जायते। हरिवं० (१, ६, २०) 'तेनान्नेन प्रजास्तात वर्तन्तेऽद्यापि नित्यशः' इत्यत्र 'अन्नं वै प्राणाः' इति दृशा वृत्-धातुर्जीवनार्थः। इत एव वृत्तिशब्दः सामान्यतो जीवनवाचको जीविकावाचकश्च जातः। 'वृत्त्युपायान् यथाविधि' मनु० (१०, २)=जीवनोपायम् (कु०)। 'वार्ता कर्मैव वैश्यस्य' मनु० (१०, ८०)=वाणिज्यम्, पाशुपाल्यम् (कु०)।

---

१. 'गुरुवर्तकम्'—वा० रा० (२, ९८, १) इत्यत्र वृत्-धातुः शुश्रूषार्थकः, गुरौ तथैव व्यवहारात्। वा० रा० (२, १२, १८) इत्यत्र वृत्तिशब्देन मातुः शुश्रूषा।

२. 'स्वराष्ट्रे न्यायवृत्तः स्यात्'—मनु० (७, ३२)=व्यवहारी (कु०)।

इतः परं जीवनार्थे बाहुल्येन णिजन्ताः प्रयोगा दृश्यन्ते—वर्तयिष्यति (वा० रा० १, ५९, २२; २, १२, ९७; २, २४, ११; २, ५१, १२; २, ७४, २८)=जीविष्यति (ति०); 'फलमूलैश्च वर्तयन्' वा० रा० (२, २०, ३१)=जीवयन् (ति०); वर्तयन् (महाभारते १२, १०४, २६; १२, २७८, १६)=जीवन्, जीविकां कुर्वन् (नी०) इत्यादयः। इह सर्वत्र प्राय आहारमूलकं जीवनम् इत्याहारार्थोऽपि लभ्यते—मनु० (११, १२३)—

तेभ्यो लब्धेन भैक्षेण वर्तयन्नेककालिकम्।
उपस्पृशंस्त्रिषवणं त्वब्देन स विशुध्यति॥

तेभ्यः सप्तगृहेभ्यो लब्धेन भैक्षेणैककालमाहारं कुर्वन्नित्यर्थः कुल्लूकभट्टेन दर्शितः। स एव 'भैक्षेण वर्तयेन्नित्यं नैकान्नादो भवेद् व्रती' (मनु० २, १८८) इत्यत्र भैक्षपदसमभिव्याहारेऽपि वर्तयेत्=जीवेदित्यर्थमाह। पूर्वस्मिन्नुदाहरणे 'एककालिकम्' इति समभिव्याहारादाहारार्थः, 'एककालं जीवन्' इत्यर्थस्यासंगतेः। वा० रा० (२, ६१, १४) तु 'ब्राह्मणेष्वपि वृत्तेषु भुक्तशेषं द्विजोत्तमाः' इत्यत्र√वृत्-धातुर्भोजनार्थकः, वृत्तेषु=भुक्तेष्विति (ति०); भुक्तशेषपदेन तथावगमात्।

५६–७. वा० रा० (२, ५१, २०) 'सिद्धार्थाः पितरं वृत्तं तस्मिन् काले ह्युपस्थिते' इत्यत्र वृत्-धातुर्मरणार्थकः। 'त्रयोदशोऽयं दिवसः पितुर्वृत्तस्य ते विभो' इति वा० रा० (२, ७७, २२)=कृतदाहस्य (ति०)। एवमेव मनु० (९, १९५) 'पत्यौ जीवति वृत्तायाः प्रजायास्तद् धनं भवेत्' इत्यत्र वृत्ताया मृताया इति कुल्लू०। 'मातर्यपि च वृत्तायाम्' इति मनु० (९, २१७) मृतायामिति कुल्लू०। प्राणधारणानुकूलव्यापारस्य वृत्-धातोः कथं विपरीतार्थो मरणमिति शङ्कोदयः स्वाभाविकः। सत्तार्थकस्य वृत्-धातोर्निष्ठायां 'वृत्त' इत्यस्य 'भूत' 'अतीत' इति वार्थः ( वृत्तः—वा० रा० २, ७३, ६=अतीतः[1] (ति०); वृत्तम्—२, ७३, १=अत्ययम् (ति०)। अतीतो नाम गतः। मृत इत्यस्य निष्ठान्तस्यैव प्रयोगस्य वेदितव्यस्तादृशोऽर्थः प्रसङ्गानुसारेण न तु सर्वत्र।

५६–८. सगोत्रीये कर्मणि कृधातुना विवरणं पूर्वमनेकत्र दर्शितमिह ग्रन्थे मया। वा० रा० (२, ४४, ५) 'वर्तते चोत्तमां वृत्तिं लक्ष्मणोऽस्मिन् सदानघः' इत्यत्र वृत्तिशब्देन वृत्-धातोरुक्तत्वात् तस्य करणरूपोऽर्थः। एवमेव वा० रा० (२, १०४, २१) 'यथा रामे तथा तस्मिन् सर्वा ववृतिरे स्त्रियः' इत्यत्रापि वृत्तिम्=व्यवहारम्, ववृतिरे=कृतवत्य इत्यर्थः। 'कस्त्वं किं वर्तसे ब्रह्मञ्ज्ञातुमिच्छामहे वयम्' इत्यत्र वा० रा० (१, १०, १२) वाराङ्गनानाम् ऋष्यश्रृङ्गं प्रति प्रश्नः। इह वृत्-धातुः करणार्थकः, 'किं कर्मासि' इत्यर्थस्यौचित्यात्। स्वतन्त्रस्य वृत्तशब्दस्य कृत्यमित्यर्थः—वा० रा० (२, ६७, २९) 'स नः समीक्ष्य द्विजवर्यं वृत्तम्'[2] इति।

---

१. ऋतुपर्यायशिथिलैर्वृत्तनृत्तसमुज्झितैः'—हरिवं० २, १६, २५ वृत्तम्=समाप्तम् (ति०)।
२. वृत्तमित्यवदत् स्वकान्'—भट्टि० (६, ४)=अनुष्ठितम् (जय०)।

५६–९. अनूपसर्गपूर्वकस्य वृत्-धातोरनुसरणमर्थः। उपसर्गं विनापि महाभारते (१३, ६२, २४)—

तपो यज्ञः श्रुतं शीलमलोभः सत्यसन्धता।
गुरुदैवतपूजा च एता वर्तन्ति भूमिदम्॥

इत्यत्र तादृशोऽर्थो लभ्यते।

इतः परं चौरादिकानां स्वार्थणिजन्तानां रूपाणाम् अर्थाः परीक्षिष्यन्ते केचन–

५६–१०. ऋ० (१०, ९५, १२) 'चक्रन्नाश्रु वर्तयद्विजानन्' इत्यत्र, 'प्रति ब्रवाणि वर्तयते अश्रु' इत्यत्र च (१०, ९५, १३) ऋग्वेदे वृत्-धातुः पातनार्थकोऽश्रुकर्मकत्वात्। 'रामोऽप्यश्रूण्यवर्तयत्' इति वा० रा० (२, ९९, ४०) अपातयदिति तिलकटीकाकारः। एवमेव वा० रा० (२, ५७, २४) 'अश्रूणि वर्तयन्' इत्यत्राभ्युपेयम्।

५६–११. ऋ० (५, ३०, ७) 'अत्रा दासस्य नमुचेः शिरो यदवर्तयो मनवे गातुमिच्छन्' इत्यत्र नमुचेः=असुरस्य शिरः=शीर्षम्, यत्=यदा, अवर्तयः=अचूर्णय इत्यर्थः, नमुचिशिरःकर्मकत्वात्।

५६–१२. ऋ० (६, १७, १०) 'अध त्वष्टा ते मह उग्र वज्रं सहस्रभृष्टिं ववृतच्छताश्रिम्' इत्यत्र वृत्-धातुर्निर्माणार्थः, देवशिल्पिकर्तृकस्य वज्रकर्मकस्य वर्तनस्य तथौचित्यात्।

५६–१३. वा० रा० (१, ५, ४)—

तदिदं वर्तयिष्यावः सर्वं निखिलमादितः।
धर्मार्थकामसहितं श्रोतव्यमनसूयया॥

इत्यत्र वृत्-धातुर्गानपरः, श्रोतव्यमिति पदपरामर्शात्, इतः पूर्वं च 'अगायतां मार्गविधानसम्पदा' (१, ४, ३६) इति प्रसङ्गाच्च।

५६–१४. महाभारते (७, १४७, ३९)—

हन्त ते वर्तयिष्यामि यथा वृत्तं महारणे।
शुश्रूषस्व स्थिरो भूत्वा दुराचरितमात्मनः॥

इत्यत्र वृत्-धातुः कथनपरः, 'शुश्रूषस्व' इति परामर्शात्। एवमेव तत्रैव (१३, १२२, ३)—

दिष्ट्या नाभिभवन्ति त्वां दैवस्तेऽयमनुग्रहः।
यत् ते भृशतरं दानाद् वर्तयिष्यामि तच्छृणु॥

इत्यत्रापि कथनपरो धातुः, दानाद् भृशतरं यत् ते वर्तते तद् वर्तयिष्यामि=कथयिष्यामि, 'शृणु' इति पदपरामर्शात्[१]।

---

१. वा० रा० (१, ७७, १५) 'शुश्रूषमाणाः पितरं वर्तयन्ति नरर्षभाः'—वर्तयन्ति=पित्रुक्तं कुर्वन्ति (ति०)।

५६–१५. महाभारते (१२, १८५, ६)—

धातुष्वग्निस्तु विततः समानेन समीरितः ।
रसान् धातूंश्च दोषांश्च वर्तयन्नवतिष्ठते ॥

इत्यत्र समानेन समीरितोऽग्निर्धातुषु विततः । एवं स रसान्, धातून् दोषांश्च वर्तयन्=परिणमयन्नवतिष्ठते, रसादिष्वग्नेः सत्त्वेन परिणामस्य स्वाभाव्यात् ।

५६–१६. एवं बहवोऽर्थाः सन्ति । केचनेह संभूय निदर्श्यन्ते—वा० रा० (२, ५३, ४) 'रात्रिं वर्तयामहे'=व्यत्यापयामः । वा० रा० (२, ६७, ३५) 'विशिष्यन्ते नरेन्द्रेण वृत्तेन महता ततः'=युक्तेन (ति०) । वा० रा० (२, ६३, ३२) 'मयि पञ्चत्वमापन्ने कां वृत्तिं वर्तयिष्यति'=अङ्गीकरिष्यति । हरिवंश० (२, १२१, १२७) 'संवर्तो वर्तनश्चैव प्रलयो निलयो महान्' वर्तनः=आविष्कुर्वाणः (ति०) । 'वृत्तशस्त्रान् महारम्भान्' भट्टि० (९, १९)=अधीत-(जय०) । 'हस्तवर्तमवीवृतत्'—भट्टि० (१५,३७)= हस्ताभ्यां वर्तितवान्=पिष्टवान्[1] (जय०) । 'उग्रं वर्तिष्यते यमः'—भट्टि० (१६, ७)= चरिष्यते (जय०) ।

एवं तावदिह प्रायो द्वाविंशतिरर्थाः परीक्षिताः—१. गमनम्, २. आवर्तनम् (आगमनम्, उद्भवः), ३. प्रवर्तनम्, ४. सत्ता (स्थितिः), ५. व्यवहारः (आचारः), ६. जीवनम् (आहारः, भक्षणम्), ७. मरणम्, ८. करणम्, ९. अनुसरणम्, १०. पातनम्, ११. चूर्णनम्, १२. निर्माणम्, १३. गानम्, १४. कथनम्, १५. परिणामः, १६. यापनम्, योजनम्, अङ्गीकारः, आविष्करणम्, अध्ययनम्, पेषणम्, चरणं चेति ।

५७. § √वृध् (वृधु) १/७५१ वृद्धौ (आ) । इहेमे तुलनीया धातवः—√ऋध् (ऋधु) ४/१३२ वृद्धौ (प), स्वादावपि;√वृह् (वृहू) ६/उद्यमने (प),√वर्ध् (वर्ध) १०/ छेदनपूरणयोः (प), वडु १/१६१ खनने (प)—काक्र० । व्+√ऋध्; खिसा० ११, ७ इत्यत्र वृद्धिम् इत्यस्य स्थाने 'ऋद्धिम्' इति पाठभेदः । एवमेव शौसं० (७, ८५, ४) इत्यत्र 'वर्धयन्ति' इत्यस्य स्थाने 'अर्धयन्ति' इति पाठभेदः । भारोपीयो मूलध्वनिरस्ति—√*वेरेध्=वृद्धौ, विस्तारे, आरोहे (एलॉयस् वाल्दे०, १ ख०, २८९ पृ०) ।

५७–१. ऋ० (९, ४७, ३) 'इन्द्रं वर्धयन्ति कर्मभिः' इत्यत्र कर्मभिर्यागैरिन्द्रस्य वर्धनं नाम प्रीणनम् । 'स त्वं नो वर्ध प्रयसा शचीवसो जिन्वा धियो वसुविदः' इत्यत्र (८, ६०, १२) ऋ० सः प्रसिद्धस्त्वमस्मान् प्रीणयेत्यर्थः । एवं प्रीणनार्थको वृध्धातुः ।

५७–२. 'अग्निं वर्धन्तु नो गिरः'—ऋ० (३, १०, ६) स्तुतिरूपवाक्कर्तृकस्याऽग्निकर्मकस्य वर्धनं नाम पूजनम्, स्तुतिरूपवाचाऽग्नेर्देहोत्कर्षासंभवात् । एवमेव 'गिरो

१. प्राकृतभाषायां तु वट्ट (<√वर्त्) धातोः पिण्डीकरणे, परिवेषणे, आच्छादने च वृत्तिः (पिंड २३९) ।

वर्धन्तु या मम' इत्यत्र (८, ३, ३) ऋ० दृश्यतेऽर्थः। 'इन्द्रं वर्धन्तु नो गिरः' इत्यत्रापि पूजनमर्थः। वा० रा० (२, ३४, ५) 'तं वर्धयित्वा राजानं पूर्वं पूतो जयाशिषा' इत्यत्र 'संपूज्य' इति तिलकटीकाकारः।

५७-३. वर्धनेन शरीरादेः पोषणं ज्ञायते। 'तमिद्वर्धन्तु नो गिरो वत्सं सं शिश्वरीरिव' इत्यत्र (ऋ० ९, ६१, १४) शिश्वर्यः=बद्धपयस्का मातरो वत्सं यथा वर्धयन्ति तद्वत्। 'पिबा वर्धस्व तव घा सुतासः' इत्यत्र (ऋ० ३, ३६, ३) सोमपानेन शरीरपुष्टिरभिप्रेता[1] (द्रष्ट० ऋ० १, १२५, १)।

५७-४. ऋ० (५, ४१, १४) 'वर्तन्ता द्यावो गिरश्चन्द्राग्रा उदा वर्धन्तामभिषाता अर्णाः' इत्यत्र 'अर्णाः=नद्यश्च अभिषाता मरुद्भिः संभक्ता उदा=उदकेन वर्द्धन्ताम्=समृद्धा भवन्त्विति सायणः। एवमेव 'वीतं हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिळया मदन्ता' इति (३, ५३, १) ऋ० इळया=अस्माभिर्दत्तेन हविषा, मदन्ता=हृष्यन्तौ युवां गीर्भिः=स्तुतिलक्षणाभिः अस्मदीयाभिर्वाग्भिर्वर्धेथाम्=समृद्धौ भवतम् इति समृद्ध्यर्थको वृध् धातुः। 'वर्धत क्षाः शचीभिर्वेद्यानाम्' इति (१०, २२, १४) ऋ० शचीरूपकार्यकरणकस्य वर्धनस्य धनधान्यादिभिः समृद्धिर्बोध्या।

५७-५. 'वर्धा समुद्रमुक्थ्यम्' इति (९, २९, ३) ऋ० समुद्रसदृशद्रोणकलशकर्मकेण वर्धनेन नाम रसद्वारकं पूरणमभिप्रेतम्।

५७-६. हरिवंश० (१, ८६, ६१)—

न ते वर्णयितुं शक्या गुणा वर्षशतैरपि।
गुणा ये तत्र वर्द्धन्ते स्वर्गाद् बहुगुणोत्तराः॥

इतीह √वृध्धातोः प्रसरणरूपोऽर्थः, गुणानां वर्धनेन तत्रैव तात्पर्यात्।

५७-७. चौरादिकस्य च्छेदनार्थस्य √वर्ध् धातोः प्रयोग ऋग्वेदे नोपलभ्यते। प्रथमं तैसं० (५, २, १) 'वर्धस्व' इति च्छेदने (द्रष्ट० वै० प० को०) वृत्तिः। एवं खलु च्छेदनार्थको भौवादिको वृध् धातुः सिध्यति, न तु चौरादिको वर्ध् धातुः। इहान्यान्यपि बहूनि सन्ति प्रमाणानि। यथा महाभारते (१२, १२०, ४२) 'बलं बुद्ध्या पाल्यते वर्द्धमानम्'=क्षीयमाणम् (ति०)। सुदृढं प्रमाणं चास्ति महाभारते—'विवृद्धाः' (१४, ३६, २७)=हिंसिताः (नी०)। अनेनोदाहरणेन नूनं सिध्यति यद् भौवादिकस्यैव वृध्धातोरिमे सर्वेऽर्थाः सन्ति क्रमेण विकसिताः।

अतिवृद्धौ सत्यां क्षयो जायते ततश्च नाशः। 'जन्मादयो विकाराः षड् भावभेदस्य योनयः' इति (वा० प० १, ३) श्लोकः। चतुर्थो विकारो वर्द्धते, पञ्चमः क्षीयते, षष्ठश्च नश्यतीति। प्रावृषि नद्यां जाते जलापूरे क्रमशः क्षीयते स नश्यति च। नावो

१. वा० रा० (२, ३४, ५) 'वर्धमानगृहैश्चापि रत्नजालपरिष्कृतैः' इत्यत्र वर्धमानगृहैः=क्रीडागृहैः (ति०)।

जलवृद्धया, गृहस्य च धनवृद्धया नाशः। कस्यचित् कार्यस्य पूरणे तस्य नाशः स्वयमेव। यथा परीक्षापूर्तौ (साफल्ये) तत्परीक्षाप्रवेशक्षयः। एतेनामङ्गलापाकरणाय वर्ध् धातु-प्रयोग इत्यपास्तम्।

मया पर्यालोडिते संस्कृतवाङ्मये छेदनादय इमे प्राप्ता अर्थाः—

तत्र तक्षणे छेदने वा वर्द्धकिशब्दः सुप्रसिद्धः – वा० रा० (१, १३, ७)=त्वष्टा (ति०)। मनु० (२, २९) च 'प्राङ् नाभिवर्धनात् पुंसो जातकर्म विधीयते' इति।

१. क्षीणतायाम्–महाभारते (१२, १२०, ४२) 'वर्धमानम्'=क्षीयमाणम् (नी०)।

२. छेदने—महाभारते (८, ४४, ८) 'गोवर्धनः'=गवां छेदनस्थानम् (नी०)।

,, ,, —महाभारते (१२, २८९, ३) 'वर्धयामास'=चिच्छेद (नी०)।

,, ,, —महाभारते (७, १५३, ४४) 'भूरिवर्द्धनः'=बहुच्छेदनः (नी०)।

,, ,, —हरिवंशपुराणे (२, २८, २५) 'वर्धयति'=छिनत्ति, दहति (नी०)।

३. मर्दने—महाभारते (१२, ३२८, ४३) '०वर्धनः'=०मर्दनः (नी०)।

४. हिंसायाम् – महाभारते (१४, ३६, २७) 'विवृद्धाः' = हिंसिताः (नी०)।

नेपालीभाषायां कृपाणस्य धारा 'बाड़' इति कथ्यते। पालिभाषायां 'चीवर-वड्ढक' इति शब्देन सौचिकस्य ग्रहणं भवति यः खलु वस्त्राणि छिनत्ति सीव्यति च। पालिभाषायां 'वड्ढकि' इति शब्दः स्थापत्यकलाविदोऽर्थे प्रयुज्यते, प्राकृतभाषायामपि तथा। वड्ढइअ=चर्मकारः। लहँदाभाषायां कूपस्य शुष्कतायां 'वड्ढण्' इति शब्दः प्रयुज्यते। पंजाबीभाषायां 'वध्णा' इति शब्दोऽन्नस्य पूर्तेः समाप्तौ प्रयुज्यते, प्रेरणे 'वधाउणा' इति तु दीपनिर्वाणे प्रयुज्यते (तुल० हिन्दी-दुकान बढ़ाना, बत्ती बढ़ाना)।

पालिभाषायां 'वड्ढापेति' इति श्मश्रुकल्पने प्रयोगः। लौड़ोवनी—'सोर-बेर्डेक्'= बालकस्याऽऽद्यकेशच्छेदप्रथा। बँगला—बाढ़ा=कर्तने, सामग्रीवितरणे च (तुल० बुन्दे० बड़ार=वारयात्रिकाणाम् अन्तिमं भोजनम्, √बड़ावौ=समाप्तिश्च)। महाराष्ट्रियभाषायां तु भोजनादिपरिवेषणे (तैलेन दीपपूरणे च) √'वाढणे' इति क्रियाप्रयोगः (द्रष्ट० ए कम्परेटिव् डिक्शनरी ऑव् दि इण्डो-आर्यन् लैंग्वेजेस्)।

एतासां सर्वासां भाषाणां पर्यालोचनेन ज्ञायते यदयं √वृध्-धातोश्छेदनार्थः खलु कमपि संस्कारमभिसंबध्नाति चूडाकरणमुपनयनम् (नालच्छेदम्) वा, ततश्च क्षुरस्य धाराम्।

५७-८. इह खलु ग्रन्थवर्द्धने (=समाप्तौ) मङ्गलार्थं वृध्-धातोर्वर्धनरूपोऽर्थो विव्रियते। ऋ० (४, ५०, ११) 'बृहस्पत इन्द्र वर्धतं नः' इत्यत्र बृहस्पतिमिन्द्रं च प्रति प्रार्थना क्रियते—नः=अस्मान् वर्धतम्=वर्धयतम्, प्रवृद्धान् कुरुतम् इति। प्राकृत-भाषायां √'वद्धाव' इति धातुर्वर्द्धापने वर्तते √'वड्ढाव' इति च। ऋग्वेदे तस्य मूलम् उपलभ्यते। 'ब्रह्मा चकार वर्द्धनम्' (१, ८०,१) इत्यत्र वर्धनम्=वृद्धिकरं स्तोत्रम् इति।

एवं तावदिह √वृध्-धातोरष्टावर्थाः परीक्षिताः—१. प्रीणनम्; २. पूजनम्; ३. शरीरादेः पोषणम्; ४. समृद्धिः; ५. पूरणम्; ६. प्रसरणम्; ७. छेदनम्, क्षीणता, मर्दनम्, हिंसा; ८ वर्धनम्, वर्द्धापनं चेति ।

अधमर्णीकृता येन वयं सर्वे मनीषिणः ।
नमस्तस्मै नमस्तस्मै नमः पाणिनये पुनः ॥ १ ।

धातुसूत्रगणत्रय्या त्रिवेण्या पावितं जगत् ।
वाङ्मयेभ्यश्च लोकाच्च त्रिधारा सा प्रवाहिता ॥ २ ।

उभयं तन्मयाऽऽस्थाय धातुधारा प्रपोषिता ।
प्रत्यूहितेति मध्येऽसावनेकार्था हि धातवः ॥ ३ ।

भागीरथप्रसादेन वागीशेत्युपनामतः ।
धात्वर्थानां विभिन्नानां विचारोऽयं प्रवर्तितः ॥ ४ ।

ऋतुपक्षखपक्षेऽब्दे वैक्रमे शनिवासरे ।
कोजागर्यामिदं पूर्णं गौरीनाथप्रसादतः ॥ ५ ।

**इति धात्वर्थविज्ञानं संपूर्णम् ।**

# भूयो भूयः प्रयुज्यमानानामप्यपरिवर्तितार्थानां धातूनां सूची

सुविशालं संपूर्णं संस्कृतवाङ्मयमपर्यालोच्य धातूनामर्थपरिवर्तनापरिवर्तनविषये कोऽपि निर्णयो न सहसा शक्यते समास्थातुम् । ईषद्धसनार्थकस्य √स्मि (ष्मिङ्)-धातोरर्थपरिवर्तनं नास्माभिर्ज्ञायते सरलतयेति तमपरिवर्तितार्थं वक्तुमर्हामः । किन्तु समाजदृशा स्मयनं हर्षो वा (मभार० ५, ४३, २८=दृप्यति – नील०) क्वचिद् गर्वाय जायते—'तमहं स्मयन्निव रणे प्रत्यभाषं व्यवस्थितम्' (मभार० ५, १७९, १)—स्मयन्=दृप्यन् (नी०) । एवमेव हरिवंश० (१, १७, १०)—

**स मामुवाच धर्मात्मा स्मयमान इवानघ ।**
**न ते तपः सुचरितं येन मां नावबुध्यसे ।।**

इत्यत्र स्मयमानः = गर्वित इति नीलकण्ठः । धात्वर्थानां सूक्ष्मसूक्ष्माण्यप्यर्थपरिवर्तनानि[1] जायन्ते । अनेकत्र त्वौपचारिकाणि तानि । **यथा भक्षणार्थकस्य** कस्यापि धातोर्विलोपनाशादयोऽर्थाः (द्रष्ट० पा० अ० १, ४, ७) । एवं सत्यपि मया केषाञ्चन ग्रन्थानां पारायणपूर्वकमपरिवर्तितार्था धातवो गवेषितास्तेषां सूचीह प्रस्तूयते । इयमितोऽपि लघ्वी बृहती वा भवितुमर्हति—

१. अट् (अट) १/२९२ गतौ (प) ।
२. अद् (अद) २/१ भक्षणे (प) ।
३. अर्ज् (अर्ज) १/२१९ अर्जने (प) ।
४. अर्थ (अर्थ) १०/३४९ उपयाच्ञायाम् (आ) ।
५. अश् (अश) ९/१५ भोजने (प) ।
६. ईह् (ईह) १/६२५ चेष्टायाम् (आ) ।
७. ऊह् (ऊह) १/६४० तर्के (आ) ।
८. कम् (कमु) १/४३६ कान्तौ (आ) ।
९. कम्प् (कपि) १/३७२ चलने (आ) ।
१०. कास् (कासृ) १/६१६ शब्दकुत्सायाम् (आ) ।
११. कुप् (कुप) ४/१२० क्रोधे (प) ।
१२. क्रन्द् (क्रदि) १/६८ आह्वाने रोदने च (प) ।
१३. क्रुध् (क्रुध) ४/७६ कोपे (प) ।
१४. क्लिद् (क्लिदू) ४/१२९ आर्द्रभावे (प) ।
१५. क्लिश् ४/५० उपतापे (आ) ।
क्लिश् ९/५० विबाधने (प) ।
१६. क्षुध् (क्षुध) ४/७७ बुभुक्षायाम् (प) ।
१७. क्षुभ् (क्षुभ) १/७४२ संचलने (आ) ।
१८. खन् (खनु) १/८६३ अवदारणे (उ) ।
१९. खाद् (खादृ) १/४७ भक्षणे (प) ।
२०. गद् (गद) १/५० व्यक्तायां वाचि (प) ।
२१. गर्ज् (गर्ज) १/२२१ शब्दे (प) ।
२२. गुञ्ज् (गुजि) १/२०० अव्यक्ते शब्दे (प) ।
२३. घूर्ण् (घूर्ण) १/४३१ भ्रमणे (आ) ।
२४. घ्रा १/९१० गन्धोपादाने (प) ।
२५. चुर् (चुर) १०/१ स्तेये (प) ।
२६. चूष् (चूष) १/६६६ पाने (प) ।

---

१. 'नित्यं स्मयतेः' (पा० अ० ६, १, ५७) स्मिङ् ईषद्धसने इत्यस्य धातोर्हेतुभयेऽर्थे णौ परतो नित्यमाकारादेशो भवति । मुण्डो विस्मापयते, जटिलो विस्मापयते ।

२७. जल्प् (जल्प) १/३९५ व्यक्तायां वाचि (प)।
२८. तुष् (तुष) ४/७१ प्रीतौ (प)।
२९. त्रप् (त्रपूष्) १/३७१ लज्जायाम् (आ)।
३०. त्रस् (त्रसी) ४/९ उद्वेगे (प)।
३१. त्रै (त्रैङ्) १/९५० पालने (आ)।
३२. दण्ड (दण्ड) १०/३७१ दण्डनिपातने (प)।
३३. दू (दूङ्) ४/२५ परितापे (आ)।
३४. द्रुह् (द्रुह) ४/८४ जिघांसायाम् (प)।
३५. द्विष् (द्विष) २/३ अप्रीतौ (उ)।
३६. नद् (णद) १/५२ अव्यक्ते शब्दे (प)।
३७. नन्द् (टुनदि) १/६४ समृद्धौ (प)।
३८. निन्द् (णिदि) १/६३ कुत्सायाम् (प)।
३९. पुष्प् (पुष्प) ४/१४ विकासे (प)।
४०. फुल्ल् (फुल्ल) १/५३२ विकसने (प)।
४१. भण् (भण) १/४५२ शब्दार्थः (प)।
४२. भर्ज् (भृजी) १/१७५ भर्जने (आ)।
४३. भी (ञिभी) ३/२ भये (प)।
४४. भ्रस्ज् (भ्रस्ज) ६/४ पाके (प)।
४५. मण्ड् (मडि) १०/५१ भूषायाम् (प)।
४६. मुद् (मुद) १/१६ हर्षे (आ)।
४७. मूत्र् (मूत्र) १०/३५३ प्रस्रवणे (प)।
४८. मृ (मृङ्) ६/१२२ प्राणत्यागे (आ)।
४९. याच् (टुयाचृ) १/८४८ याच्ञायाम् (उ)।
५०. युध् (युध) ४/६१ प्रहरणे (आ)।
५१. रभ् (रभ) १/९५९ राभस्ये (आ)।
५२. लस्ज् (ओलस्जी) ६/११ व्रीडे (आ)।
५३ लुञ्च् (लुन्च) १/१८४ अपनयने (प)।
५४. लुभ् (लुभ) ४/१२५ गार्ध्ये (प)।
५५. वम् (टुवम) १/८३३ उद्गिरणे (प)।
५६. वाञ्छ् (वाछि) १/२०५ इच्छायाम् (प)।
५७. वेप् (टुवेपृ) १/३६३ कम्पने (आ)।
५८. शप् (शप) १/९८४ आक्रोशे (उ)।
५९. शुष् (शुष) ४/७० शोषणे (प)।
६०. सू (षूङ्) २/२० प्राणिगर्भविमोचने (आ)।
६१. स्तु (ष्टुञ्) २/३२ स्तुतौ (उ)।
६२. स्थग् (ष्ठगे) १/७८३ संवरणे (प)।
६३. स्ना (ष्णा) २/४१ शौचे (प)।
६४. स्पृह (स्पृह) १०/३१८ ईप्सायाम् (प)।
६५. हद् (हद) १/९६२ पुरीषोत्सर्गे (प)।
६६. हृष् (हृषु) १/७०२ अलीके (प)।
६७. ह्री ३/३ लज्जायाम् (प)।
६८. ह्वे (ह्वेञ्) १/९९२ स्पर्धायां शब्दे च (उ)।

# प्रयुक्तधातुसूची

# उद्धृतपाणिनीयसूत्रसूची

# उद्धृतोणादिसूत्र-वार्त्तिक-महाभाष्य-काशिकादि-सूची

## उद्धृतनिघण्टुनिरुक्तसूची



---

## ग्रन्थान्तरवचनानि

# उद्धृतभाषाशब्दसूची

# विशिष्टशब्दसूची

# उल्लिखितधात्वर्थसूची

( यत्र संख्यया सह पृ. इति निर्देशो वर्तते, तत्र पृष्ठसंख्या वेदितव्या )

आ

ख



ग

घ

# धात्वर्थबोधकप्रयोगोदाहरणसूची

## (धातुरूपाणि स्थूलाक्षरैर्निर्दिष्टानि सन्ति)

### √कृ (डुकृञ्) ८/९ करणे (उ०)



### √कृप् (कृपू) १/७५४ सामर्थ्ये (आ)

√कृष् (कृष) १/९७५ विलेखने (प)

ताः क्षिपेरन् प्रजाः सर्वाः (महाभार०) ४३
**क्षेपणै**र्मुष्टिभिश्चैव (हरि०) ४२ टि०
गौरो न **क्षेप्नो**रविजे ज्यायाः (ऋ०) ४२
मा स्य त्वचं **चिक्षिपो** मा शरीरम् (ऋ०) ४३
**चिक्षेप** परमक्रुद्धः (वा० रा०) ४२
**चिक्षेप** च स तं धीमान् (महाभार०) ४३; ४४
**चिक्षेप** च बली किल (हरि०) ४५

**√ख्या २/४९ प्रथने (प)**

अन्तर्ह्यख्यदुभे अस्य धेने (ऋ०) ४६
**अख्यद्** देवो रोचमाना महोभिः (ऋ०) ४६
विभीषणेन सोऽ**ख्यायि** (भट्टि०) ४६
मा नो अति **ख्य** आ गहि (ऋ०) ४६
**ख्यातं** दशरथं भुवि (भट्टि०) ४६
**ख्याति**मिच्छति पुष्कलाम् (मनु०) ४७
**ख्यातो** लोकप्रवादोऽयम् (वा० रा०) ४६
सा जानती **ख्यापय** नः सुकेशि (महाभार०) ३७
स्वकर्म **ख्यापयन्** ब्रूयात् (मनु०) ४६
**ख्यापयामास** राजेन्द्र (महाभार०) ४६
क्रियते **ख्यायते** च यत् (हरि०) ४७
आश्रमः **ख्यायते** पुण्यः (महाभार०) ४६
अन्तर्हि **ख्यो** जनानाम् (ऋ०) ४६

**√गम् (गम्लृ) १/९६७ गतौ (प)**

कीचकं मनसा**गच्छत्** (महाभार०) ५१
ज्ञात्वा तत्त्वमथा**गमत्** (महाभार०) ४८
नावेदविद्वाना**गच्छेत्** (हरि०) ४९
तमेव शरणं **गच्छ** (श्रीमद्भगवद्गी०) ५१
स इद्देवेषु **गच्छति** (ऋ०) ४७
शूद्रत्वं च स **गच्छति** (मनु०) ४८
कालो **गच्छति** धीमताम् ४९
पशून् **गच्छन्** शतं दाप्यः (मनु०) ४८
कुलसंख्यां च **गच्छन्ति** (मनु०) ५२
ततो **गच्छसि** सिद्धार्थः (महाभार०) ४८
न च त्यागेन **गच्छेत** (हरि०) ४९
**गच्छेतां** वैश्यपार्थिवौ (मनु०) ४८
**गच्छेत्** सर्वेण चेतसा (महाभार०) ५०
**गत** एव नराधमः (महाभार०) ४९
ऊर्ध्वं **गतं** यस्य न चानुबन्धि (रघु०) ५२
**गतं** विज्ञानयातयोः (मेदिनी०) ४९
क्व ऋतं पूर्व्यं **गतम्** (ऋ०) ४८
युवं भुज्युं भुरमाणं विभि**र्गतम्** (ऋ०) ४८
संसिद्धिं परमां **गताः** (गीतायाम्) ४८
**गताः** संवत्सरा दश (वा० रा०) ४९
यस्मिन् **गता** न निवर्तन्ति भूयः (श्रीमद्भग०) ५०
त्वं **गतिं** प्राप्स्यसे वीर (वा० रा०) ५१
**गतिः** स्त्री मार्गदशयोः (मेदिनी०) ४९
स **गतिः** स परायणम् (वा० रा०) ५१
यः स मे श्रीर्हरि**र्गतिः** ५१
स्वपुण्यविजितां **गतिम्** (भट्टि०) ५३
गच्छत्यकुशलां **गतिम्** (वा० रा०) ५१
**गति**स्त्वं वीतरागाणाम् (रघु०) ५२
विश्वामित्रे **गते** राजा (वा० रा०) ४७
इत्थं **गते** गतघृणः किमयं विधत्ताम् (रघु०) ५२
नाम पृष्ठ**गतौ** तौ च (वा० रा०) ५०
रजसि प्रलयं **गत्वा** (गीतायाम्) ४८
यद् **गत्वा** न निवर्तन्ते (गीतायाम्) ४८
पतितौ भवतो **गत्वा** (मनु०) ४८
**गन्तु**मर्हसि किल्बिषात् (वा० रा०) ५२
एनसा **गन्तु**मर्हति (महाभार०) ५०
बुध्यस्व **गमयस्व** च (महाभार०) ५२
**गमयिष्यामि** शक्रेण (महाभार०) ४८
गच्छेयं तद् **गमिष्यामि** (महाभार०) ५०
एतैः सर्वै**र्गम्यते** बुद्धिने : (महाभार०) ४८
**गम्यमानं** न तेनासीत् (भट्टि०) ५३
समुद्रमव्यथि**र्जगन्वान्** (ऋ०) ४८
पत्नीर्वृषणो **जगम्युः** (ऋ०) ४८
आपृष्ट्वैव **जगामा**शु (वा०रा०) ४७
सख्यस्ता **जग्मु**रिङ्गितैः (महाभार०) ४९
लोके स्थावर**जङ्गमे** (महाभार०) ४८

**√गाह् (गाहू) १/६४१ विलोडने (आ)**

ता ये पिबन्त्यवितृषो नृप **गाढ**कर्णैः (श्रीमद्भाग०) ५४

**√गृध्(गृधु) ४/१३३ अभिकाङ्क्षायाम् (प)**



**√गॄ ९/२७ शब्दे (प)**



**√ग्रह् (ग्रह) ९/६१ उपादाने (उ)।**

### √छिद् (छिदिर्) ७/३ द्वैधीकरणे (उ)



### √जन् (जनी) ४/२९ प्रादुर्भावे (आ)



### √जप् (जप) १/३९६ अव्यक्तायां वाचि मानसे च (प)







### √ज्ञा ९/३६ अवबोधने (उ)



### √ढौक् (ढौकृ) १/९४ गत्यर्थः (आ)



### √तन् (तनु) ८/१ विस्तारे (उ)

सोमसंस्थास्ततान च (महाभार०) ९०
नाश्रोत्रियतते यज्ञे (मनु०) ८९
वासस्तनुते सिमस्मै (ऋ०) ८९
चिन्तासन्तापमन्तस्तनुते हि जन्तोः (नैष०) ९०
बहुग्राही तनुत्यागी ९१
मा चिरं तनुथाः (ऋ०) ८९
यजतां शं तनोति (भाग०) ८९
न तनोति च नो वसु (भाग०) ९०
अहं रुद्राय धनुरा तनोमि (ऋ०) ८८
घोषादिन्द्रस्य तन्यति ब्रुवाणः (ऋ०) ९०
सिरीस्तन्त्रं तन्वते अप्रजज्ञः (ऋ०) ८९
इन्द्राग्नी आ हि तन्वते (ऋ०) ८८
ऋत्विजस्तत्र तन्वन्तु (महाभार०) ८९
ते तन्वानास्तनूस्तत्र (महाभार०) ९०

### √तप् (तप) १/९७० संतापे (प)

अतपद् विश्वगीरितः (भाग०) ९२
द्रागतप्यत न तन्महसैव (नैष०) ९१
तेजिष्ठया तपनी तप (ऋ०) ९२
तपता लोकमव्ययम् (हरि०) ९३
धर्मं न सामन्तपता (ऋ०) ९३
तपति तनुगात्रि मदनः (शाकु०) ९१
कलितीव्रस्तपति स्म नातपः (नैष०) ९१
सूर्यस्तपति तप्यतुर्वृथा (ऋ०) ९३
यश्च तप्तो न तपति (महाभार०) ९२
तं ते शोचिस्तपतु तं ते अर्चिः (ऋ०) ९३
तपुर्मूर्धा तपतु रक्षसो ये (ऋ०) ९२
वर्षते तपते कोऽन्यः (महाभार०) ९१
ब्रह्मद्विषस्तपनो मन्युमीरसि (ऋ०) ९२
स्वतेजसा विश्वमिदं तपन्तम् (गीतायाम्) ९३
इन्द्राग्नी तपन्ति माघा अर्यो अरातयः (ऋ०) ९२
तपन्ति शत्रुं स्वर्ण भूमा (ऋ०) ९२
तपन्त्यजस्रं वेगेन (महाभार०) ९२
सं मा तपन्त्यभितः सपत्नीरिव पर्शवः (ऋ०) ९२
अजो भागस्तपसा तं तपस्व (ऋ०) ९३
तपस्ये भरतर्षभ (महाभार०) ९४
तपोमूर्ति तपात्मकम् (वा०रा०) ९४
तपाम्यहमहं वर्षम् (गीतायाम्) ९१
सधूमोऽग्निस्तपोमयः (भाग०) ९२
तप्तमासेचयेत् तैलम् (मनु०) ९२
न च तप्यति दान्तात्मा (महाभार०) ९२
जाया तप्यते कितवस्य हीना (ऋ०) ९२
परमं तप्यते तपः (मनु०) ९३
भृशं तप्यामहे वयम् (महाभार०) ९२
तप्येयं तेन पुत्रकाः (महाभार०) ९२
तपस्तप्स्यन् द्विजोत्तमः (मनु०) ९३
तदा तप्स्यस्यर्जुनस्यानुयोगात् (महाभार०) ९३
तपस्तप्स्यामहे (अ० वे०) ९४
ब्रह्महत्याकृतं तापम् (मनु०) ९२
रक्षोभिस्तापितास्तेऽपि (भट्टि०) ९४
तपस्तेपेऽतिमानुषम् (महाभार०) ९४

### √तॄ १/९५४ प्लवनतरणयोः (प)

एवेन्नु कं सिन्धुमेभिस्ततार (ऋ०) ९५
द्विता तरति नृतमं हरिष्ठाम् (ऋ०) ९५
पादेव गाधं तरते विदाथः (ऋ०) ९५
तरत्स मन्दी धावति (ऋ०) ९६
निमज्जत्युदके तरन् (मनु०) ९५
तदव्यर्थी जरिमाणं तरन्ति (ऋ०) ९५
पूर्वीश्चन प्रसितयस्तरन्ति (ऋ०) ९६
तरन्ति नित्यं पुरुषाः (महाभार०) ९६
मायमेतां तरन्ति ते (गीतायाम्) ९५
पुत्रांस्तरितुमात्मना (महाभार०) ९५
मत्प्रसादात् तरिष्यसि (गीतायाम्) ९५
शापमेव तरिष्यामि (कथा०) ९६
न बाहुभ्यां नदीं तरेत् (मनु०) ९५
तरेदापदमात्मनः (मनु०) ९६-क
तरेयमिषुभिः क्रुद्धः (वा०रा०) ९५
प्रतिज्ञां तर्तुमिच्छामि (वा०रा०) ९६
ज्ञातयस्तारयन्तीह (महाभार०) ९६
तारयेदातुरान् सदा (सुश्रु०) ९६
तेरुर्भटास्यपद्मानि (भट्टि०) ९५

### √दा (डुदाञ्) ३/९ दाने (उ)



### √दिश् (दिश) ६/१ अतिसर्जने (उ)



### √दृश् (दृशिर्) १/९७३ प्रेक्षणे (प)

पश्चाद् **दृश्येत** यत् किञ्चित् (मनु०) १०६
**दृष्टस्त**त्रापि तद् ब्रूयात् (मनु०) १०६
अहो न सम्यग् **दृष्टो**ऽयम् (पञ्च०) १०५
कर्तव्यः शास्त्र**दृष्टो** हि (वा०रा०) १०४
एता **दृष्ट्वा**ऽस्य जीवस्य (मनु०) १०४
**दृष्ट्वा** वै ध्यानचक्षुषा १०४
**द्रक्ष्यसे** देशकालतः (महाभार०) १०४
स्वभावं **पश्य** भारत (महाभार०) १०४
एकान्ते **पश्य** भगवन् (वा०रा०) १०५
मुहूर्तं **पश्य** रावण (वा०रा०) १०६
**पश्यञ्ज**न्मानि सूर्य (ऋ०) १०३
तस्येदं **पश्यता** भूरि (ऋ०) १०३
नेता चेत् साधु **पश्यति** (मनु०) १०४
योऽर्थान् धर्मेण **पश्यति** (मनु०) १०५
ततो भद्राणि **पश्यति** (मनु०) १०६
मार्गमाश्रित्य **पश्यतः** (वा०रा०) १०६
तं मर्तासो न **पश्यथ** (ऋ०) १०४
पश्यध्वं सारथिं क्षिप्रम् (महाभार०) १०५
यन्मरुतो गोतमो वः **पश्यन्** (ऋ०) १०४
याति भुवनानि पश्यन् (ऋ०) १०३
ते अग्ने पश्यन्तः (ऋ०) १०४
नायुध्यमानं पश्यन्तम् (मनु०) १०३
सदा **पश्यन्ति** सूरयः (ऋ०) १०४
पश्यन्तो धर्मतस्तयोः (मनु०) १०४
त्वं वरुण पश्यसि (ऋ०) १०३
अपि **पश्याम** सुव्रत (वा०रा०) १०३
**पश्येत्** कार्याणि कार्यिणाम् (मनु०) १०४
न **पश्येत्** प्रसवन्तीं च (मनु०) १०३
**पश्येदा**यव्ययौ स्वयम् (याज्ञ०) १०५
यं तु **पश्येन्नि**धिं राजा (मनु०) १०६
**पश्येस्त्व**मन्तश्च बहिश्च सर्वदा (महाभार०) १०४

### √द्रु १९/३० गतौ (प)

धनञ्जय**मदुद्रुवत्** (महाभार०) १०८
पाञ्चालान् समरे**ऽद्रवत्** (महाभार०) १०८
**द्रवच्च**क्रेषु रातिषु (ऋ०) १०८
द्रुतं **द्रवत** कौरवाः (महाभार०) १०७
न च न **द्रवता** (भट्टि०) १०८
रथानां **द्रवते** वृन्दम् (महाभार०) १०७
भक्त्या **द्रवद्धृदय** उत्पुलकः प्रमोदात् (भाग०) १०८
यत्रा नरः सं च वि च **द्रवन्ति** (ऋ०) १०७
रक्षांसि भीतानि दिशो **द्रवन्ति** (गीतायाम्) १०८
समुद्रमेवाभिमुखा **द्रवन्ति** (गीतायाम्) १०८
एते **द्रवन्ति** रथिनः (महाभार०) १०७
**द्रवन्त्य**स्य वाजिनो न शोकाः (ऋ०) १०७
वह्निना **द्रवमाणम्** (भाग०) १०८
अद्रोघो न **द्रविता** चेतति (महाभार०) १०७
शविष्ठस्य **द्रवित्नवः** (ऋ०) १०७
द्रविर्न **द्रावयति** दारु धक्षत् (ऋ०) १०८
अध्वर्यो **द्रावया** त्वम् (ऋ०) १०८
सूर्यस्येव रश्मयो **द्रावयित्नवः** (ऋ०) १०८
**द्रावयिष्यामि** राक्षसान् (भट्टि०) १०८
**द्राव्यमाणं** रणे आर्य (महाभार०) १०७
सच्छिन्नबन्ध**द्रुत**युग्यशून्यम् (रघु०) १०७
संताप**द्रुत**भूरिसर्पिषि घटे (राज०) १०८
गभस्तिधाराभिरिव **द्रुतानि** (भट्टि०) १०८
**द्रुताभिः**····गङ्गोर्मिभिः (महाभार०) १०७

### √धा (डुधाञ्) ३/१० धारणपोषणयोः (उ)

जनु**रधत्त** सती स्मरतापिता (नैष०) ११२
**अधात्वी**ति सं मदा अग्मता वः (ऋ०) १११
बिन्दुमत्या**मधा**न्नृपः (भाग०) १११
**अधाय्य**ग्निर्मानुषीषु विक्ष्वपाम् (ऋ०) १०९
इहा**धास्यन्न** चेद् भवान् (भट्टि०) ११२
दधोऽस्माँ इन्द्र वसौ **दधः** (ऋ०) १०९
आपो न द्वीपं **दधति** प्रयांसि (ऋ०) ११०
तयो**र्दधति** दाने च (आख्या०) १११
कान्तमूर्ध्नि **दधती** पिधित्सया (नैष०) १०९
**दधतु**र्भुवनद्वयम् (रघु०) ११०
**दधतो** मङ्गलक्षौमे (रघु०) ११२
वयो **दधत्**पद्वते रेरिहत्सदानु (ऋ०) ११०
**दधत्स**हस्रिणीरिषः (ऋ०) ११०

### √धू (धूञ्) ५/९ कम्पने (उ)



### √धृ १/९०४ धारणे (आ)

### √नश् (णश) ४/८१ अदर्शने (प)



### √नी (णीञ्) १/८८६ प्रापणे (उ)

### √पा १/९०९ पाने (प)



### √पू (पूञ्) ९/१० पवने (उ०)



### √प्लु १/९४३ गतौ (आ)



### √बन्ध् (बन्ध) ६/३७ बन्धने (प)

**√ब्रू (ब्रूञ्) २/३३ व्यक्तायां वाचि (उ)**



**√भज् (भज) १/९८२ सेवायाम् (उ)**



**√भू १/१ सत्तायाम् (प)**

## √मन् (मन) ४/६३ ज्ञाने (आ)



## √वह् (वह) १/९८८ प्रापणे (उ)



## √वृत् (वृतु) १/७५० वर्तने (आ)

√वृध् (वृधु) १/७५१ वृद्धौ (आ)



---

# उद्धृतवेदोपनिषदादिवचनसूची

(यत्र नामोल्लेखो नास्ति तत्र ऋग्वेदसंहिता विज्ञातव्या)

# उद्धृतश्लोकपादानुक्रमसूची

**घ**



**च**

**ध**

**न**

**ष**



**स**

ह

# संक्षेपसहिता ग्रन्थग्रन्थकारसूची

**प**



**फ**

ब



भ



म

# सहायकग्रन्थसूची


१. अभिज्ञानशाकुन्तलम्—महाकविकालिदासप्रणीतम्, चौखम्बा, १९५५ ई० ।

२. अमरकोषः—अमरसिंहरचितः (व्याख्यासुधायुतः, निर्णयसागरमुद्र०, १९१५ ई० ।
,, — ,, (अमरकोषोद्घाटनसहितः), ओरिएण्टल बुक एजेन्सी, पूना, १९४१ ई० ।

३. अवेस्ता—राजाराम, श्रीमद् दयानन्द एंग्लो-वैदिक कालेज, लाहौर, १९०१ वि० ।

४. आख्यातचन्द्रिका—भट्टमल्लप्रणीता

५. ईशादिविंशोत्तरशतोपनिषदः, पञ्चमं संस्करणम्, निर्णयसागरमुद्र०, १९४८ ई० ।

६. उणादयः ( वैयाकरणसिद्धान्तकौमुदीगताः ) ।

७. ऋग्वेदसंहिता—सायणभाष्योपेता, वैदिकसंशोधनमण्डल, पूना, १९३३—१९५१ ई० ।

८. कथासरित्सागरः—सोमदत्तप्रणीतः, निर्णयसागरमुद्र०, १९३० ई० ।

९. काशकृत्स्नधातुव्याख्यानम्—( चन्नवीर ), अनु० युधिष्ठिरमीमांसकः, २०२२ वि० सं० ।

१०. काशिकाविवरणपञ्जिका—जिनेन्द्रबुद्धिकृता, राजशाही, १९१६ ई० ।

११. काशिकावृत्तिः—वामनजयादित्यविरचिता, चौखम्बा, १९५२ ई० ।

१२. किरातार्जुनीयम्—घण्टापथटीकासंवलितम्, निर्णयसागरमुद्र०, १९२६ ई० ।

१३. कुमारसंभवम्—संजीविनीटीकायुतम्, कालिकाता, वि० संवत् १९०७ ।

१४. क्रियारत्नसमुच्चयः—गुणरत्नसूरिविरचितः, वीरसंवत् २४३४ ।

१५. क्षीरतरङ्गिणी—डॉ० ब्रूनो लीबिश-संपादिता, १९३० ई० ।

१६. गणरत्नमहोदधिः—वर्धमानकृतः, एग्लिङ्गसंपादिता, मोतीलाल बना०, १९६३ ई० ।

१७. चतुर्भाणी—डा० मोतीचन्दसंपादिता ।

१८. तद्धितान्ताः केचन शब्दाः—डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री', मोतीलाल बना०, वाराणसी, १९६७ ई० ।

१९. तन्त्रवार्त्तिकम्—कुमारिलभट्टविरचितम्, आनन्दाश्रमः, पुण्यपत्तनम्, १९३१ ई० ।

२०. तैत्तिरीयसंहिता—भट्टभास्करविरचितभाष्यसहिता, मैसूर ।

२१. निरुक्तम्—यास्ककृतम्, शिवदत्तशर्मसंपादितम्—खेमराज श्रीकृष्णदास, मुम्बयी, सं० १९८२ ।

२२. नैषधीयचरितम्—श्रीहर्षविरचितम्, प्रकाशटीकायुतम्, निर्णयसागरमुद्रणा०, १९४२ ई० ।
" " —जीवातुटीकासहितम्, चौखम्बा, १९५४ ई० ।

२३. न्यायदर्शनम् ( वात्स्यायनभाष्यविराजितम् ), चौखम्बा, १९४२ ई० ।

२४. पञ्चतन्त्रम्—विष्णुशर्मा, खेमराज श्रीकृष्णदास, मुम्बयी, १९२३ ई० ।

२५. पदमञ्जरी

२६. पाइअसद्दमहण्णवो—हरगोविन्ददास त्रिकमचंद सेठ, प्राकृत ग्रन्थ परिषद्, वाराणसी, १९६३ ई० ।

२७. पाणिनिसूत्रपाठस्य तत्परिशिष्टग्रन्थानां च शब्दकोशाः—श्रीधरशास्त्रिपाठक-सिद्धेश्वरशास्त्रिचित्रावाभ्यां संगृहीताः, भाण्डारकरप्राच्यविद्यासंशोधनमन्दिरम् पुण्यपत्तनम्, १९३५ ई० ।

२८. पाणिनीयधातुपाठसमीक्षा—डॉ० भागीरथप्रसादत्रिपाठी, वाराणसेय सं० वि० वि०, १९६५ ई० ।

२९. पातञ्जलयोगसूत्रम्

३०. प्रसङ्गपारिजात—चेतनदास, अयोध्या ।

३१. बुद्धचरितम्—अश्वघोषप्रणीतम्

३२. बुन्देलखण्ड की प्राचीनता—डॉ० भागीरथप्रसादत्रिपाठी 'वागीश शास्त्री,' विद्वद्गोष्ठी, बी० ३।११५, शिवाला, वाराणसी, १९६५ ई० ।

३३. बृहत्संहिता—भट्टोत्पलकृतविवृतिसहिता, वाराणसेयसंस्कृतविश्ववि०, १९६८ ई० ।

३४. भगवद्गीता—अष्टटीकाविराजिता, निर्णयसागरमुद्र०, १९३६ ई० ।

३५ भट्टिकाव्यम्—जयमङ्गलकृतटीकायुतम्, निर्णयसागरमुद्र०, १९३६ ई० ।

३६. भारत में आर्य और अनार्य—डॉ० सुनीति कुमार चटर्जी ।

३७. भागवतपुराणम्—गीताप्रेस, २००६ संवत् ।

३८. भारतीय साहित्य ( पत्रिका )—भाषाविज्ञानपीठ, आगरा विश्वविद्यालय, आगरा ।

३९. भाषा—जो० वैन्द्रियैज्, अनु० जगवंश किशोर बलबीर, हिन्दी समिति, सूचना विभाग, लखनऊ, १९६६ ई० ।

४०. भाषा विज्ञान पर भाषण—एफ्० मैक्स मूलर ( भागद्वय ), हिन्दी समिति, लखनऊ ।

४१. मनुस्मृतिः—मन्वर्थमुक्तावलीयुता, चौखम्बा, १९३५ ई० ।

४२. महाभारतम्—नीलकण्ठीयव्याख्यायुतम्, चित्रशालाप्रेस, पूना, १९३३ ई० ।
" —मूलमात्रम्, गीताप्रेस, गोरखपुर ।
" —४ खण्डेषु मूलमात्रम्, रायल एशि०, कालिकाता, १८३४-३९ ई० ।

४३. महाभाष्यम्—प्रदीपोद्द्योतसहितम्, गुरुप्रसादशास्त्रिसंपादितम् ।

४४. महाभाष्यशब्दकोशः—श्रीधरशास्त्रिपाठकसिद्धेश्वरशास्त्रिचित्रावाभ्यां संगृहीतः, पुण्यपत्तनम्, १९२७ ई० ।

४५. मालविकाग्निमित्रम्—चौखम्बा, १९५१ ई० ।

४६. मेघदूतम्—संजीविन्यादिटीकात्रयोपेतम्, चौखम्बा, २००३ वि० सं० ।

४७. मेदिनीकोशः—मेदिनिकरनिर्मितः, चौखम्बा, १९४० ई० ।

४८. यशस्तिलकम्—( श्रुतसागरसूरिकृतव्याख्यासमेतम् ), निर्णयसागरमुद्र०, १९१६ ई० ।

४९. मृच्छकटिकम्—शूद्रककविप्रणीतम्, चौखम्बा, १९५४ ई० ।

५०. याज्ञवल्क्यस्मृतिः—( मिताक्षरा-वीरमित्रोदयटीकायुता ), चौखम्बा ।

५१. रघुवंशमहाकाव्यम्—संजीविनीटीकाशोभितम्, वेङ्कटेश्वरयन्त्रालयः, मुम्बयी ।

५२. वाक्यपदीयम्—( १-२ खण्डात्मकम् ), रघुनाथशर्मटीकायुतम्, वा० सं० वि० वि०, वाराणसी ।
" ( तृतीयकाण्डम् ), हेलाराजकृतप्रकीर्णकप्रकाशटीकायुतम्, त्रिवेन्द्रम् १९४२ ई०।

५३. वाल्मीकीयरामायणम्—तिलकटीकासहितम्, निर्णयसागरमुद्र०, १९०२ ई०।
" —चिन्नस्वामिशास्त्रिसंपादितम्, मद्रास, १९५८ ई० ।

५४. वेणीसंहारनाटकम्—पुण्यपत्तनसंस्करणम्, १८६७ ई० ।

५५. वैदिकपदानुक्रमकोषः—विश्वबन्धुशास्त्रिसंपादितः ।

५६. वैयाकरणसिद्धान्तकौमुदी—तत्त्वबोधिनीटीकासहिता, निर्णयसागरमुद्रणालयः, १९२९ ई० ।

५७. वैयाकरणसिद्धान्तलघुमञ्जूषा—नागेशकृता, कुञ्चिकाकलोपेता, चौखम्बा ।

५८. शतपथब्राह्मणम्—सायणभाष्यसहितम्, गङ्गाविष्णु श्रीकृष्णदास, कल्याण, बम्बई ।

५९. शब्दकल्पद्रुमकोशः—राधाकान्तदेवसंपादितः ।

६०. शिशुपालवधम्—सर्वङ्कषाटीकायुतम्, निर्णयसागरमुद्र०, १९४० ई० ।

६१. शुक्लयजुर्वेदसंहिता—( उव्वटमहीधरभाष्यसहिता), निर्णयसागरमुद्रणालयः, १९२९ ई० ।

६२. सरस्वतीकण्ठाभरणम् ( व्याकरणम् )—भोजदेवविरचितम्, मद्रपुरीयविश्व-विद्यालयः, १९३७ ई० ।

६३. सुश्रुतम्—डल्हणाचार्यकृतव्याख्यासहितम्, निर्णयसागरमुद्र०, मुम्बापुरी, १९३८ ई० ।

६४. हिन्दी रूसी शब्दकोष—संपादक अका० अ० प० बरान्निकोव, द्वि० संस्क०, मास्को, १९५९ ई० ।

६५. हिन्दी शब्दसागर—श्यामसुन्दरदास ।

---

## जर्मन-इंग्लिश्-भाषामया ग्रन्थाः

1. A Comparative Dictionary of Indo-Aryan Languages—by R. L. Turner.
2. A Concordance of Pāli-Dhātupāṭhas—by Dr. S. M. Katre.
3. A Concordance of Sanskrit Dhātupāṭhas—by G. B. Palsule.
4. Alois Walde : Vergleichendes Wörterbuch der indogermanischen Sprachen—von Julius Pokorny, Berlin und Leipzig, 1930-1932.
5. An Introduction to Natural History of Language—by T. G. Tucker, London, 1908.
6. Cassell's New German Dictionary—Harold T. Betteridge, Fifth edition, 1961.
7. Hymns of the Ṛgveda—by Ralph T. H. Griffith, Chowkhamba Sanskrit series office, Varanasi, in two Volumes, Fourth edition, 1963.
8. Indogermanisches Etymologisches Wörterbuch—von Julius Pokorny, Francke Verlag Bern, 1959.
9. Language—by Leonard Bloomfield, Moti Lal Banarsidass, 1963.
10. Lectures on the Science of Language—by F. Max Müller, in two Volumes, London, 1877.
11. Mundari English Dictionary—by Manindra Bhusan Bhaduri, Calcutta University, 1931.

12 P. T. S. Pali-English Dictionary—by T. W. Rhys Davids of William Stede, 1921.

13. Russian English Dictionary—by V. K. Müller, New York, E. P. Dutton & Company, Inc, 1952.

14. Sanskrit English Dictionary—Theodor Benfey, London, 1866.

15. Sanskrit Wörterbuch—Otto Böhtlingk und Rudolf Roth.

16. The Concise Oxford Dictionary, Fifth edition (1964).

17. The Principles of Semantics—by Stephen Ullmann, Glasgow, 1959.

—x—

# शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| √अग्र् | √अग् | २ | २९ |
| सेद | *√सेद | ११ | ७ |
| इ√ | √ई | १२ | ९ |
| §इष् | §√इष् | १३ | २ |
| पु० | प्र० | २१ | ३३ |
| रुदती | रुदन्ती | ४१ | ३ |
| प्रकथनम् | प्रथनम् | ४५ | २३ |
| √गुआध् | √*गुआध् | ५३ | २९ |
| १३–८ | २३–८ | ६१ | २६ |
| २२–१६ | २३–१६ | ६३ | २६ |
| वार्थो न | नार्थो | ८९ | १३ |
| तपःकृति, | तपःकृतिः | ९५ | ३३ |
| तु कथं हिता | तु हिता | ११२ | ३३ |
| पीतेः | प्रीतेः | ११९ | ३ |
| तष्टौ | तुष्टौ | ११९ | ५ |
| गृहीता | ग्रहीता | १२१ | २ |
| एतरेय- | ऐतरेय- | १२१ | २४ |
| इति | इति । | १२७ | १४ |
| भर्जनरूपाऽर्थः | भर्जनरूपोऽर्थः | १२७ | २४ |
| स्थात् | स्यात् | १३० | २ |
| प्लावयामास | प्लावयस्व | १३५ | २३ |
| विधिः | ‘विधिः | १३७ | २९ |
| रिक्थीशा- | रिक्थमनीशा- | १४२ | ३२ |
| उव्व | उव | १४३ | २१ |
| इति | इति । | १५५ | २० |

# सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्याभिनवप्रकाशनानि

| क्रमसंख्या ग्रन्थनाम | | मूल्यम् |
|---|---|---|
| १. **शुक्लयजुर्वेदकाण्वसंहिता**— | [ उत्तरविंशतिः ] 'द्वितेयं सायणभाष्यसहिता प्रकाशिता। सम्पादकः—श्रीचिन्तामणिमिश्रशर्मा— | २२-०० |
| २. **वाक्यपदीयम्**— | [ तृतीयकाण्डस्य द्वितीयो भागः ] ग्रन्थरत्नमिदं हेलाराजप्रणीतया प्रकाशव्याख्यया तथा च प० रघुनाथशर्मविरचितया 'अम्बाकर्त्री' टीकया च विभूष्य प्रकाशितम्— | १०७-०० |
| ३. **महाभाष्यनिगूढाकृतयः** – | अनुसन्धानप्रबन्धोऽयं नूनम् आनुसन्धानिकफलश्रुतिभिः समेधितो वर्तते। लेखकः सम्पादकश्च—डॉ० देवस्वरूपमिश्रः— | २६-८० |
| ४ **व्याकरणदर्शनप्रतिमा**— | आचार्यरामाज्ञापाण्डेयविरचितेऽस्मिन् ग्रन्थे व्याकरणशास्त्रस्य दार्शनिकपदार्थानां मौलिकं विवेचनं कृतमस्ति— | ३६-६८ |
| ५. **बौधायनशुल्बसूत्रम्**— | ग्रन्थोऽयं श्रीव्यैंकटेश्वरदीक्षितविरचितया बोधायनशुल्बमीमांसाख्यया तथा च श्रीद्वारकानाथयज्वप्रणीतबौधायनशुल्बसूत्रव्याख्यानाख्यया टीकयाऽथ च प्रभूतैः सवादात्मकैः रेखाचित्रैश्च सनाथीकृतः— | ७१-०० |
| ६. **तन्त्ररत्नम्**— | [ पञ्चमभागः ] पार्थसारथिमिश्रविरचितः टुप्टीकासनाथितो मीमांसाग्रन्थोऽयं साम्प्रतं सम्पादकपण्डितपट्टाभिरामशास्त्रिविरचिततात्त्विकया भूमिकया सनाथितो विराजते— | ४६-६० |
| ७. **तन्त्रसङ्ग्रहः**— | [ तृतीयो भागः ] तन्त्रशास्त्रस्य विविधतन्त्रसङ्ग्रहात्मकोऽयं ग्रन्थो बहुविधैरनुसन्धानात्मकैः भूमिका-टिप्पण-परिशिष्टैश्च समुल्लसति— | ६२-२० |
| ८. **योगिनीहृदयम्**— | [ तृतीयसंस्करणम् ] तन्त्रशास्त्रीयोऽयं ग्रन्थः अम्बिकानन्दयोगिकृतदीपिकाख्यया, भास्कररायकृतसेतुबन्धव्याख्यानाख्यया च टीकया समलङ्कृत्य प्रकाशितः— | ३३-४० |
| ९. **रुद्रयामलम्**— | तन्त्रशास्त्रस्य प्राणभूतमिदं ग्रन्थरत्नं विविधैः किल गवेषणापूर्णैः भूमिका-टिप्पण-परिशिष्टादिभिः विभूष्य प्रकाशितम्— | ६४-०० |
| १०. **यन्त्रराजविचारविंशाध्यायी**— | आचार्यनयनसुखोपाध्यायविरचितेऽस्मिन् ग्रन्थे ज्योतिषशास्त्रीयोपयोगिनां वेधादियन्त्राणां खलु सैद्धान्तिकं प्रायोगिकञ्च विवेचन कृतं वर्तते— | ११-०० |
| ११. **पुराणेतिहासयोः साङ्ख्ययोगदर्शनविमर्शः**— | अनुसन्धानप्रबन्धेऽस्मिन् लेखकेन सम्पादकेन च डॉ० श्रीकृष्णमणित्रिपाठिना महता प्रयासेन पौराणिका महाभारतीयाश्च साङ्ख्य-योगपदार्था विवेचिताः— | ३?-८० |
| १२. **भारतीयविचारदर्शनम्**— | [ द्वितीयो भागः ] ग्रन्थेऽस्मिन् लेखकेन डॉ० हरिहरनाथत्रिपाठिना भारतीयविचाराचाराणाम् ऐतिहासिकं तुलाबोधकञ्च विवेचनं कृतम्— | १०५-६० |
| १३. **पालित्रिपिटकसद्दानुक्कमणिका**— | पालित्रिपिटकान्तर्गतानां शब्दानां सान्दर्भिकः समावेशोऽस्मिन् ग्रन्थे कृतो वर्तते— | १००-६० |

प्रकाशकः-निदेशकः, अनुसन्धानसंस्थानम्, **सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः**, वाराणसी-२२१००२.